इयन्मात्रमन्यथा विचारणीयम्-( सर्वाण्यपि पुरौकसां नामानि आरक्षकैः लेखयित्वा नव्येषु करीरकेषु आशु राट् क्षिप्तानि ॥६३॥

एवमस्तु इतीत्थमादृता वाग् येन तादृशे तस्मिन् राक्षसे सति पुरौकसां पुरे नगरे ओकांसि गृहाणि येषां तेषां पुरजनानां सर्वाण्यपि नामानि आरक्षकैः लेखयित्वा नव्येषु करीरकेषु "वंशाङ्कुरे करीरोऽस्त्री भेदे घटे च ना" इत्यमरोक्तेः घटेषु राट्क्षिप्तानि इति समस्तं पदं राजा क्षितिपतिना स्वयमेव क्षिप्तानि स्थापितानि । )

'એમ થાઓ' એમ કહીને તે રાક્ષસે તે વાત સ્વીકાર્યા પછી રાજાએ તરત જ આરક્ષકો (કોટવાલો) પાસે નગરવાસીઓના બધાં નામો લખાવી. તે નવા ઘડામા નંખાવ્યા. ॥૬૩॥

कन्या समाकर्षयदेकमेकं, प्रातर्विनिर्गच्छति यस्य पत्रम् ।
पत्रं यमस्येव स तत्र तूर्णं, प्रस्थाप्यते साध्वसकम्पमानः ॥६४॥

प्रातः, कन्या बालिका, एकम् एकं, पत्रं, समाकर्षयत्-गृह्णाति स्म, तथा सति, यमस्यान्तकस्य पत्रमिव, यस्य पत्रं नामाङ्कितपत्रम्, विनिर्गच्छति-समायाति, साध्वसेन-मरणभयेन कम्पमानः स जनः, तूर्णं शीघ्रमेव, तत्र रक्षःसमीपे प्रस्थाप्यते प्रेष्यते तथैव नियमादिति भावः ॥६४॥

એક કન્યા સવારે તેમાંથી એક એક કાઢે છે. યમરાજના ખત જેવું જેનું પત્ર નીકળે છે. તે ભયથી કંપતો છતાં તરત જ રાક્ષસ પાસે મોકલાય છે. ॥૬૪॥

अन्येद्युराकर्षि करेण कन्या, तस्यैव पत्रं द्विजपुत्रकस्य ।
आरक्षकेण प्रहितास्तदानीं, भृत्यास्तमादातुमतत्वरंश्च ॥६५॥

अन्येद्युः एकदा कन्या-कनीशब्दस्य तृतीयैकवचनम्-कयाऽपि बालिकया, करेण पाणिना, तस्य कस्यचित् द्विजपुत्रकस्य ब्राह्मणशिशोः पत्रं नामाङ्कितं पत्रमेव, आकर्षि निष्काशितम्, तदानीं तत्काले च, आरक्षकेण नगररक्षकेण प्रहिताः प्रेषिताः, भृत्याः राजपुरुषाः, तम्, द्विजपुत्रम्, आदातुम्, ग्रहीतुम्, अतत्वरन्, शीघ्रतामकुर्वन्, विलम्बभयात् ॥६५॥

એક દિવસે કન્યાએ હાથ વડે તે બ્રાહ્મણના પુત્રનું પત્ર કાઢયું આરક્ષક વડે તે જ વખતે મોકલાયેલા માણસો બ્રાહ્મણ-પુત્રને પકડવા ઉતાવળ કરવા લાગ્યા. ॥૬૫॥

तैर्नीयमानं समवेक्ष्य पुत्रं, तारस्वरं तज्जननी रुरोद ।
सर्वे तदाऽऽसन्नगृहान्तरस्था, भूता यथा तत्करुणां प्रपन्नाः ॥६६॥

तैः भृत्यैः, नीयमानं पुत्रं समवेक्ष्य विलोक्य, तस्य बालस्य जननी माता तारस्वरम् उच्चैः रुरोद, यथा येन प्रकारेण, तस्य तद्गृहस्य आसन्नस्य समीपस्थस्य गृहस्य अन्तरस्थाः मध्यस्थाः सर्वे भूताः, ततस्माद्रोदनात्करुणां दयां प्रपन्नाः प्राप्ताः ॥६६॥

તે માણસો વડે લઈ જવાતા પુત્રને જોઈને તે સમયે તેની માતા પોક મૂકી તેવી રીતે રડવા લાગી કે જેથી પાસેના ઘરમાં રહેલાઓ બીજા પણ બધા તેની ઉપર દયાવાળા થઈ ગયા. ॥૬૬॥

अथ तत्कृतमाश्वासनमाह—

तमूचिरे ब्राह्मणि ! मा रुदस्त्वं, पुत्रं पुरा ते वयमाहरामः ।
आच्छिद्य तस्मात्त्वरितं पलादात्, सोऽपि स्थितिं नैव तथा विभेत्ता ॥६७॥

ताम् ब्राह्मणीम् ऊचिरे ते ग्रामदयाः, किमित्याह–ब्राह्मणि ! त्वं मा रुदः, वयं ते तव पुत्रम्, तस्मात्पलादात् मांसादाद्राक्षसाद्, पुरा अग्रतः, आच्छिद्य बलाद् गृहीत्वा त्वरितं शीघ्रमेव, आहरामः आनेष्यामः, तथा सति ततो बलाद् ग्रहणे च स मांसादोऽपि स्थितिं व्यवस्थां स्वयं समागतमर्त्यातिरिक्तमर्त्याहननरूपनियमं नैव विभेत्ता भङ्क्ष्यति, नियममनुरुध्य तत्समीपे मर्त्यस्य गमनात्, केनापि तद्ग्रहणस्य तु न नियमे प्रवेश इति भावः ॥६७॥

તેઓ તેને કહેવા લાગ્યા કે, હે બ્રાહ્મણી તમે રડો નહિ. અમે તમારા પુત્રને તે માંસભક્ષક પાસેથી પહેલાં જ જલદીથી છીનવીને લઇ આવીશું. તેમ થતા તે પણ તેવા કરારને તોડી શકશે નહિ. ॥૬૭॥

आरक्षभृत्यास्तमथोपनिन्यु–र्यावत्स तैस्तत्पुर एव तावत् ।
हृत्वार्पितस्तस्य जवात्सवित्र्यै, क्षिप्तस्तथा सोऽपि गिरेर्गुहायाम् ॥६८॥

अथ अनन्तरम् तं द्विजपुत्रम् आरक्षभृत्याः यावधदवधि, उपनिन्युः राक्षस्य समीपं प्रापयामासुः, तावत्तदवध्येव, तस्य राक्षस्य पुर एव तैः ग्रामदयैः दत्तसंकेतैर्भूतैः स द्विजपुत्रः जवात् वेगात् हृत्वा आच्छिद्य तस्य बालस्य सवित्र्यै जनन्यै अर्पितः दत्तः, तया जनन्या अपि स, गिरेः पर्वतस्य गुहायां कन्दरायाम्, क्षिप्तः, पुनरपि ग्रहणभयादिति भावः ॥६८॥

પછી આરક્ષકના નોકરોએ તે બ્રાહ્મણ પુત્રને તે રાક્ષસ પાસે લઇ જતાંવેંત જ તેઓ નગરવાસીઓએ વેગથી તે રાક્ષસની આગળથી ઉપાડીને તેની માતાને આપી દીધો. તે (માતા)ના વડે પણ તે દ્વિજપુત્રને પર્વતની ગુફામાં મુકી દેવાયો. ॥૬૮॥

अथ कथामुपसंहरति—

तत्रोषितेनाजगरेण दैवाद्, ग्रासीकृतः स द्विजदारकोऽपि ।
तद्वत् क्वचिद्भाव्यमभाव्यभावं, नैव प्रयात्यन्यदपि त्रिलोक्याम् ॥६९॥

तत्र गुहायामपि दैवात् भाव्यसंयोगात् उषितेन स्थितेन अजगरेण महासर्पेण स क्षिप्तः द्विजदारकः द्विजपुत्रः ग्रासीकृतः कवलीकृतः, तद्वत् त्रिलोक्यां क्वचित्कुत्रापि, अन्यदपि भाव्यं भावि अभाव्यभावमभवनीयतां नैव प्रयाति ॥६९॥

દૈવસંયોગે ત્યાં (ગુફામાં) રહેતા અજગરે તે બ્રાહ્મણ પુત્રને પોતાનો ગ્રાસ બનાવી દીધો, તેની જેમ જ ત્રણે લોકમાં ક્યાંય ભાવીનો અભાવ ન હોય. અભાવ ભાવીપણાને ન પામે. ॥૬૯॥

*टिप्पणी:—पुरा आहरामः आनेष्यामः तथा सति ततो बलाद् ग्रहणे सति स मांसादोऽपि स्थितिम् अस्मन्मर्यादां नैव विभेत्ता भङ्क्ष्यति ।

तर्हि रक्षणाय किं कर्तव्यमिति चेत्तत्राह—

तस्मात्प्रचण्डाशनिपातघात-कार्याय सज्जीक्रियतां तपोऽस्त्रम् ।
यद्भावशाणाश्रयणात् समस्त-प्रत्यूहमुच्छेत्तुमलंभविष्णु ॥७०॥

तस्माद् भाव्यस्याभाव्यभावात्, प्रचण्डः अत्युग्रः यः अशनिः वज्रं तस्य पातस्य यो घातो निवारणं तस्मै कार्याय तपः व्रताद्यनुष्ठानमेवास्त्रं तत्, सज्जीक्रियतां सन्धानयोग्यं क्रियताम्, यत्तपोऽस्त्रम्, भावः शाणः कषः "शाणस्तु निकषः कषः" इत्यमरः। शाणः शस्त्रतीक्ष्णधारकारियन्त्रं वा तस्याश्रयणात्, समस्तमेव प्रत्यूहं विघ्नम् उच्छेत्तुम् निवारयितुम् अलम्भविष्णु समर्थं स्यात् ॥७०॥

ભારે પ્રચંડ એવા વજ્રના નિપાતને નિવારવા માટે તપરૂપી અસ્ત્રને તૈયાર કરો, જે ભાવરૂપી શાણ ઉપર ચડી સર્વ વિઘ્નોને નાશ કરવા સમર્થ થશે. ॥૭૦॥

अथ सचिवान्तरविचारमाह—

श्रुत्वेति तुर्यो वदति स्म मन्त्री, ज्योतिर्विदाख्यायि तडित्निपातः ।
श्रीपोतनेशस्य किलोपरिष्टाद्, भावी न तु श्रीविजयस्य राज्ञः ॥७१॥

इति तृतीयमन्त्र्युक्तं, श्रुत्वा, तुर्यः चतुर्थः मन्त्री वदति स्म, किमित्याह—ज्योतिर्विदा श्रीपोतनेशस्य उपरिष्टात् तडितः वज्रस्य निपातः भावी, इतीति शेषः, आख्यायि कथितम्, किलेति स्मरणे, न तु श्रीविजयस्य राज्ञः, उपरि अशनिपातो भावीत्याख्यायीति सम्बध्यते ॥७१॥

આ સાંભળી ચોથો મંત્રી બોલ્યો—જોષીએ 'શ્રીપોતન નગરના રાજા ઉપર વજ્ર પડશે' એમ કીધું છે, કિંતુ શ્રીવિજય રાજા ઉપર નહિં. ॥૭૧॥

नन्वेवमेतद् ततः किम्—

सप्ताहमन्यः क्रियतां तदस्य, स्वामी पुरस्य प्रयतैर्भवद्भिः ।
प्रज्ञाप्रधानत्वममंस्त तस्या-मात्यस्य हृष्टो गणकोऽथ शस्यम् ॥७२॥

तस्माद्धेतोः प्रयतैः सावधानैः भवद्भिः सचिवैः सप्ताहं सप्तदिनं यावत् । अस्य श्रीपोतनाख्यस्य पुरस्य, अन्यः स्वामी क्रियताम्, एवं च यः तदानीं पोतनेशः स्यात्तस्योपर्येवाशनिः पतेन्नतु श्रीविजयस्योपरि इति तस्य रक्षणं सुकरमेवेति भावः। अथानन्तरं हृष्टः रक्षायुक्तिं वीक्ष्य प्रसन्नः गणकः दैवज्ञः "ज्योतिषिको दैवज्ञगणकावपी"त्यमरः। अस्य चतुर्थस्यामात्यस्य सचिवस्य, शस्यं प्रशंसनीयम् प्रज्ञा बुद्धिः प्रधानं यस्मिन् तस्य भावस्तत्त्वं बुद्धिमत्त्वम्, अमंस्त मेने ॥७२॥

તો તમો બધા સાવધાન થઈ એક સપ્તાહ સુધી કોઈ બીજાને આ નગરનો સ્વામી બનાવો. ત્યારે જોષીએ ખુશ થઈ તે મંત્રીને પ્રશંસનીય બુદ્ધિવાળો જાણ્યો. ॥૭૨॥

अथ सचिवोक्तमन्त्रणायां राज्ञः विप्रतिपत्तिमाह—

तन्मन्त्रमाकर्ण्य मयाऽपि प्रोक्तं, यः स्थाप्यते राज्यपदे स्वरुच्या ।
तत्प्राणनाशं परिचिन्तयेत् कः, कल्याणमिच्छन्निजजीवितस्य ? ॥७३॥

तेषां मन्त्रं विचारमाकर्ण्य मया श्रीविजयेनाऽपि च, उक्तम् । किमित्याह—स्वरुच्या-स्वेच्छया, राज्यपदे-राज्यरूपे पदे राज्याधिकारे यः पुरुषः स्थाप्यते अधिक्रियते, निजजीवितस्य स्वात्मनः कल्याणं शुभम् इच्छन् कः नरः तस्य प्राणनाशं परिचिन्तयेत् । यो हि राजा स्यात्तस्मिन्नशनिपातः, एवञ्च स्वप्राणरक्षणाय परप्राणनाश इत्यायातम्, परप्राणैः स्वप्राणरक्षिता च हिंसकत्वान्न शुभं लब्धुमर्हति, एवञ्च स्वस्य शुभमिच्छन् न कोऽपि परप्राणनाशं परिचिन्तयेदपि, अन्यथा हिंसादोषादिसद्भावादिति भावः ॥७३॥

में पण तेनो विचार सांभळीने कीधुं के पोतानी रुचिथी राजाने पदे जे स्थापित कराशे, पोताना जीवनुं भलुं इच्छतो कोण. ते राजाना पदे स्थपायेलाना प्राणोना नाशनी चिन्ता करे ? ॥७३॥

विप्रतिपत्त्यन्तरमाह—

प्राणैः परस्यापि विनश्वरान् स्वान्, प्राणानवेयं यदि वस्तुवृत्त्या ।
न स्यात् कदाचिन्मरणं ममापि, मुक्तिं गतस्येव निरीहवृत्तेः ॥७४॥

यदि वस्तुवृत्त्या वस्तुतः, परस्य प्राणैरपि स्वान्–स्वकीयान्, विनश्वरान् अनित्यान्, एतेन तेषां विनाशः ध्रुवः, न तु शक्यवारण इति सूच्यते । प्राणान् अवेयम्–रक्षेयम्, तदेति शेषः । निरीहवृत्तेः निष्पृहस्य, मुक्तिं गतस्य मुक्तस्य पुरुषस्येव, ममापि कदाचिदपि मरणं न स्यात्, यथा मुक्तस्य न मरणं तस्य जन्माभावात् । एवं मरणकाले समुपस्थिते परप्राणानां मारणेन स्वमरणनिवारणेऽयत्नसिद्धममरत्वम्, ममेत्युपलक्षणम्, अन्यस्याप्येवम् अमरत्वसंभवात्; न चैवमद्यावधि क्वापि जातम्, जन्तोर्मरणावश्यंभावात्, तन्निवारणस्याशक्यत्वात्, एवं च राज्येऽन्यस्मिन्निवेशितेऽपि न म्रियमाणस्य मम रक्षणं संभवति ।

यदुक्तम्—"अद्य वाऽब्दशतान्ते वा मृत्युर्वै प्राणिनां ध्रुवः" इति ।
"जातस्य हि ध्रुवं मृत्युर्ध्रुवं जन्म मृतस्य च" इति च ।

एवञ्च भवन्मन्त्रः न युक्तिमास्कन्दति पूर्वोक्तदोषादिति उपायान्तरं वा विचार्यताम्, भाग्यमवलम्ब्य वा स्थीयताम्, इति मदीयो मन्त्रः इति भावः ॥७४॥

जो बीजाना प्राणोथी नाशवंत एवा पोताना प्राणोनी रक्षा खरेखर करी शकुं तो मुक्तिने पामेला वीतरागनी जेम मारुं पण मृत्यु कदी थाय नहि. ७४॥

अथ तेषामुपायान्तरमाह—

प्रावादिषुर्मन्त्रविदां धुरीणा–स्तेऽथ क्षणं चेतसि चिन्तयित्वा ।
ऐन्द्री निवेश्या प्रतिमैव राज्ये, नो जीवघातोऽपि भवेत्तथा ते ॥७५॥

अथ पश्चात् मन्त्रविदां मन्त्रिणां धुरीणा अग्रेसराः ते सचिवाः, चेतसि क्षणं चिन्तयित्वा विचार्य प्रावादिषुः ऊचुः । किमित्याह—राज्ये, श्रीदस्य-यक्षस्य इयम् श्रैदी-कौबेरी "यक्षैकपिङ्गैल-विलश्रीदपुण्यजनेश्वराः" इत्यमरः । प्रतिमा-बिम्बमेव निवेश्या, नृपत्वेन स्थाप्या, तथा एवं सति, ते-तव, जीवघातः-जीवघातजन्यदोषः, अपि, कार्ये कारणोपचारः तद्दोषस्यातिमहत्त्वसूचनाय, न भवेत् । बिम्बस्य निर्जीवत्वेन तदुपर्यशनिपातेऽपि न जीवघात इति भावः ॥७५॥

ત્યારે વિચારવંતોમાં અગ્રેસર એવા તે મંત્રીઓ ક્ષણવાર મનમાં વિચારીને બોલ્યા કે રાજાના પદે કુબેર યક્ષની પ્રતિમાને જ સ્થાપિત કરીએ, તેમ થતાં તમને જીવહિંસા પણ નહિ થાય. ॥૭૫॥

श्रीविजयस्य कर्त्तव्यमाह--

एतत्सदालोचितमञ्जसा वो, मत्यानुमत्यायतनं जिनस्य ।
गत्वा कृतार्चः कृतपौषधश्च, दर्भैर्विदब्धाऽऽस्तरणोन्यषीदम् ॥७६॥

वः युष्माकं, मत्या बुद्ध्या, एतत्पूर्वोक्तं सत् साधु आलोचितं विचारितम्, इति अनुमत्य अनुमोद्य, स्वीकृत्य वा, जिनस्य आयतनं प्रासादं गत्वा, कृता अर्चा जिनस्य पूजा येन स तादृशः सन् कृतं स्वीकृतं पौषधं तदाख्यव्रतं येन स तादृशः दर्भैः कुशैर्दब्धम् विहितमास्तरणं शय्या येन स तादृशः सन् न्यषीदमुपाविशम्, जिनं संपूज्य पौषधं गृहीत्वा दर्भासनमास्तीर्य चोपाविश-मित्यर्थः ॥ ७६ ॥

આ બુદ્ધિપૂર્વકનો તમારો વિચાર સારો છે અને સરલ છે, એમ અનુમતિ આપીને હું જિનાલયમાં જઈ પૂજા કરી પૌષધ લઈ દર્ભનો સંથારો કરી બેઠો. ॥૭૬॥

राज्ये धनेशप्रतिमाभिषिक्ता, तत्कालमेतैः सचिवैस्त्रिकालम् ।
आराध्यते स्म प्रभुनिर्विशेषं, कुर्वन्ति किं नेशहितानुरक्ताः ! ॥७७॥

राज्ये तत्कालमेव, एतैः पूर्वोक्तैः सचिवैः अभिषिक्ता कृताभिषेका धनेशस्य धनदस्य प्रतिमा त्रिकालं त्रिषु प्रातर्मध्याह्नसायंकालेषु प्रभुणा राज्ञा निर्विशेषं विशेषो न्यूनाधिक्यं तद्रहितं यथा स्यात्तथा प्रभुरिवेत्यर्थः । आराध्यते सेव्यते स्म । तत्र हेतुमाह-ईशस्य स्वस्वामिनः हिताय अनुरक्ताः किं न कुर्वन्ति ? सर्वमेव कुर्वन्तीत्यर्थः । एवं चेशहिताय प्रतिमाया अपि तादृशमाराधनं न विरुध्यत इति भावः ॥७७॥

આ મંત્રીઓએ તત્કાલ રાજાના પદે યક્ષની પ્રતિમાનો અભિષેક કર્યો અને રાજાની જેમ જ તેની આરાધના કરવા લાગ્યા. સ્વામીના ભલા માટે પ્રેમવાળાઓ શું નથી કરતા ? ॥૭૭॥

अर्हत्प्रभावान्नृणामुपसर्गभावो नेत्याह—

पूर्वं हि धातोरुपसर्गभावो, यद्यप्ययं व्याकरणे प्रणीतः ।
प्रादुर्भवेन्नैव तथापि पुंसा—मर्हन्नमस्कारमहाप्रभावात् ॥७८॥

यद्यपि धातोः तत्संज्ञकस्य क्रियावाचकस्य अथ च दैवस्य भविष्यतः, पूर्वम् आदावेव उपसर्गस्य तत्संज्ञकस्य प्रपरादेः, उपद्रवस्य च, भावः प्रयोगः, प्राकट्यञ्च व्याकरणे शब्दशास्त्रे अयं नियमः प्रणीतः कथितः, व्याकरणे भ्वादिधातोः पूर्वम् प्रादिरुपसर्गः प्रयुज्यते प्रभवतीत्यादौ, एवम् भाव्यनिष्टसूचकमुत्पातादि लोकेऽपि पूर्वमेव जायते, यत्र च न जायते, तत्र नानिष्टं भावि इति मन्यते । तत्रावश्यंभाविनो भाविनः सूचकमुपसर्गाद्यपि शान्त्यादिकर्मणा प्रतिरुध्यते इत्याह-तथाऽपि व्याकरणे तथाप्रणीतेऽपि अर्हतां जिनेश्वराणां नमस्कारस्य प्रभावात् सामर्थ्यात्पुंसां नैव प्रादुर्भवन् उपसर्ग इति सम्बध्यते । शास्त्रे तथानियमेऽपि लोकेनायं नियमः शान्तिकर्मादिना तद्वारणात् । एवञ्च भाव्यनिष्टसूचकं किमप्युपसर्गं ज्ञातं नेतिभावः । अत्र द्वयोर्धात्वोरुपसर्गयोश्चभेदेऽप्यभेदोक्तेरतिशयोक्तिः ॥७८॥

જો કે વ્યાકરણ શાસ્ત્રમાં ધાતુથી પૂર્વ ઉપસર્ગ. (પ્ર, પરા, વગેરે) જોડાય છે આ નિયમ છે, છતાં મનુષ્યોને અરિહંતના નમસ્કારના મહાન પ્રભાવ હોવાથી તેને ઉપસર્ગ (ઉપદ્રવ) થાય નહિ ॥૭૮॥

ननु तदशनिपातोऽपि न जातः किमिति जिज्ञासायामाह—

सद्ध्यानकाष्ठामधितस्थुषो मे, प्राप्ते ततः सप्तमकेऽपि घस्ले ।
मध्याह्नकाले दिवि वारिवाहः, कल्पान्तकालाब्दसुहृज्जगर्ज ॥७९॥

ततस्तदनन्तरम्, सतोऽविचलस्य ध्यानस्य काष्ठामवस्थामधितस्थुषः प्राप्तस्य मे मम सप्तमके, अपिश्चार्थे, घस्ले दिने प्राप्ते, मध्याह्नकाले, दिवि गगने, कल्पान्तकाले योऽब्दः मेघस्तस्य सुहृन्मित्रम्, कल्पान्तकालाब्दतुल्यः वारिवाहः मेघः जगर्ज स्तनितवान्, एतेन वज्रपतनसंभावनोक्ता ॥७९॥

ત્યાર પછી શુભ ધ્યાનાવસ્થામાં રહેલા મને સાતમો દિવસ આવ્યે છતે મધ્યાહ્નકાલે આકાશમાં કલ્પાંતકાળના વાદળ જેવા વાદળો ગર્જના કરવા લાગ્યાં. ॥૭૯॥

अथ फलितमाह—

शम्पा तटत्काररवैस्तु काष्ठाः, सम्पूरयन्ती निपपात यक्षे ।
अन्तःपुरीभिः प्रमदाद्विमुक्ता, मुक्तादिवृष्टिर्गणके तु तस्मिन् ॥८०॥

शम्पा विद्युत् "तडिदैरावती विद्युच्चला शम्पाऽचिरप्रभा" इति हैमः । त्वित्यद्भुते, तटत्काररवैः तटदित्याकारशब्दैः, काष्ठाः सर्वा दिशः सम्पूरयन्ती, व्याप्नुवन्ती, यक्षे राज्याभिषिक्तयक्षप्रतिमायाम् निपपात । तस्मिन्ननागतवक्तरि, गणके दैवज्ञे तु च अन्तःपुरीभिः अन्तःपुरस्त्रीभिः, प्रमदाद् हर्षात्, तत्कृतानागतकथनेन राज्ञः प्राणरक्षणं मुक्त्या इति हेतोर्हर्ष इति भावः । अन्यथा तु वज्रपतने शोकेनैव भाव्यमिति भावः । मुक्तादीनां वृष्टिः, मुक्ता कृता । एवञ्च गणकस्योक्तिद्वयमपि सत्यमेव जातमिति भावः ॥८०॥

નિમિત્ત [illegible] કથનથી વિજળીએ [illegible] યક્ષ ઉપર પડી અને [illegible] રાણીઓએ હર્ષથી તે જોષી ઉપર મોતી વગેરે વર્ષાવ્યાં. ॥૮૦॥

अथ राज्ञस्तोषात्तस्मै दानमाह—

तत्पद्मिनीखण्डमिवाधिलक्ष्मी-संवासितं तोषवशात्प्रदाय ।
श्रीपद्मिनीखण्डपुरं स वित्तै-र्दौर्विध्यमुच्छेद्य मया व्यसर्जि ॥८१॥

तस्माद्धेतोः तोषवशात् प्रसन्नतायाः, पद्मिनीखण्डं कमलाकरमिव, अधिकया लक्ष्म्या संवासितं परिपूर्णं श्रीपद्मिनीखण्डपुरं प्रदाय पारितोषिकं दत्त्वा वित्तैः, दौर्विध्यं-दारिद्र्यम्, उच्छेद्य विनाश्य च, मया, स गणकः, व्यसर्जि, प्रैषि ॥८१॥

પછી મેં હર્ષને લીધે કમલવનની જેમ ઉત્કૃષ્ટ લક્ષ્મીથી સુવાસિત ધનધાન્યપૂર્ણ એવું શ્રી પદ્મિની-ખંડ નગર આપી ધનોથી દરિદ્રતાનો નાશ કરી તે જોશીને રજા આપી. ॥૮૧॥

अथोत्तरमुपसंहरति—

अर्चा कृता रत्नकरस्य नव्या, भव्याशया रत्नमयी यदर्च्या ।
तेनैव पौराः परमप्रमोदात्, कुर्वन्त्यखर्वं महमात्तगर्वम् ॥८२॥

यद्यस्मात् भव्याशया शुभाशया रत्नकरस्य यक्षस्य "पौलस्त्य-वैश्रवण-रत्नकराः कुबेरयक्षौ" विति हैमः। नव्या नूतनप्रकारा, अत एव अर्च्या अर्चनीया रत्नमयी रात्नी अर्चा प्रतिमा कृता "अर्चा तु प्रतेर्मा यातना निधिः" इति हैमः । तेनैव हेतुना, पौराः, आत्तः प्राप्तः गर्वः नैतादृशोऽन्यत्र मह इत्यभिमानः यस्मिन् कर्मणि तद्यथा स्यात्तथा, अखर्वं महान्तं महमुत्सवं कुर्वन्ति ॥८२॥

યક્ષની શુભ આશયવાળી એવી અદ્ભુત પૂજા કરાવી જેની પ્રતિમા રત્નમયી હતી, તેથી જ નગરવાસીઓ અત્યંત હર્ષથી ગર્વ લઈ શકાય એવો મહાન ઉત્સવ કરે છે. ॥૮૨॥

इत्थं निशम्यासममर्च्यते स्म, देवी सुतारामिततेजसाऽपि ।
तत्रैव कञ्चित्समयं समानं, स्थित्वा ययौ स्वं स पुरं नरेन्द्रः॥८३॥

इत्थं पूर्वोक्तप्रकारं निशम्य श्रुत्वा, अमिततेजसा राज्ञा देवी सुतारा स्वभगिन्यपि असमम् अनुपमं यथा स्यात्तथा, अर्च्यते संमान्यते स्म, तथा तत्र श्रीपोतनपुर एव कंचित् समयं मानेन सत्कारेण सह समानं स्थित्वा, स नरेन्द्रः अमिततेजाः स्वं पुरं ययौ ॥८३॥

આમ અદ્ભુતતા સાંભળી તે અમીતતેજ રાજાએ દેવી સુતારાનો સત્કાર કર્યો. અને તે રાજા ત્યાં માનસહિત કેટલોક કાલ રહી. પોતાના નગરે ગયો. ॥૮૩॥

ज्योतिर्वनं नाम वनं सुतारा-देव्यासमं श्रीविजयोऽन्यदाऽयम् ।
शच्या बिडौजा इव नन्दनाख्यं, रन्तुं जगाम प्रमदाभिरामः ॥८४॥

अन्यदा अयं केलिकुतूहली श्रीविजयः प्रमदानां स्त्रीणाम् अभिरामः कमनीयः प्रियः "प्रमदा सुन्दरी रामा" इति हैमः । एतेन सौभाग्यगुणवत्तोक्ता । यद्वा प्रमदः प्रमोदः तेनाभिरामो मनोज्ञः आह्ला-

दित इत्यर्थः "ह्लादः प्रमोदः प्रमदः" इति हैमः । सुतारादेव्या समं सह, ज्योतिर्वनं नाम वनमुपवनम् बिडौजा इन्द्रः शच्या इन्द्राण्या सह नन्दनाख्यं वनमिव, रन्तुं क्रीडयितुं जगाम ययौ ॥उपमालङ्कारः॥८४॥

એક સમયે સ્ત્રીઓને મનોહર એવા શ્રીવિજય રાજા સુતારા દેવીની સાથે જ્યોતિર્વન નામના ઉદ્યાનમાં–ઇન્દ્ર–ઇન્દ્રાણી સાથે નન્દન વનની જેમ–ક્રીડા કરવા લાગ્યો. ॥૮૪॥

तस्मिन् क्षणेऽसौ कपिलस्य जीवो, विद्याधरेन्द्रोऽशनिघोषनामा ।
विद्यां प्रतारण्यभिधां प्रसाध्य, व्योम्नाऽपतन् विक्रमशालिबाहुः ॥८५॥
दृष्ट्वैव भर्तुः सविधे सुतारां, प्राग्जन्मकान्तां कमनीयकान्तिम् ।
तां हर्तुमिच्छुः प्लवमानरूपं, सारङ्गमेकं विचकार सारम् (युग्मम्) ॥८६॥

तस्मिन् क्षणे काले, असौ प्रसिद्धः कपिलस्य तदाख्यब्राह्मणभवस्य जीवः विक्रमशालिनौ बाहू यस्य स तादृशः पराक्रमी, अशनिघोषनामा विद्याधरेन्द्रः, प्रतारणी अभिधा यस्यास्ताम् इन्द्रजाल-तुल्यां विद्याम् प्रसाध्य व्योम्ना आकाशमार्गेण आपतन् आगच्छन् । अत्र 'आगच्छत्' इति पाठो युक्तः, शान्तिचरित्रान्तरे 'समापतन्', इति पाठदर्शनात् । भर्त्तुः पत्युः सन्निधे समीपे, कमनीया कान्तिर्यस्या-स्ताम् सुन्दरीम्, सुतारां प्राग्जन्मनः कान्तां प्रियाम् सत्यभामारूपाम्, दृष्ट्वैव, तां हर्त्तुमिच्छुः, प्लव-मानमुत्प्लवमानं रूपं यस्य तादृशम्, एकं सारं मनोहरं सारङ्गम् मृगम् "मृगः कुरङ्गः सारङ्गः" इति हैमः । विचकार विकृतवान्, प्रतारणायेति शेषः ॥८५॥८६॥

તે કાળે તે કપિલનો જીવ પરાક્રમી બાહુવાળો અશનિઘોષ નામનો વિદ્યાધરેન્દ્ર પ્રતારણી નામની વિદ્યાને સિદ્ધ કરી આકાશમાર્ગે જતો મનોહર કાંતિવાળી પૂર્વજન્મની સ્ત્રી એવી સુતારાને પતિ પાસે જોઇને જ તેનું હરણ કરવાની ઇચ્છાથી કુદતા શ્રેષ્ઠ એવા હરણનું રૂપ વિકુર્વ્યું. ॥૮૫ ૮૬॥

नीलाश्मसम्पादिततुङ्गशृङ्ग–भ्राजत्खुरं काञ्चनचारुवर्णम् ।
व्यालोक्य तं श्रीविजयस्य देवी, साभ्यर्थयत् क्रीडनकेच्छयैव ॥८७॥

नीलाश्मना इन्द्रनीलमणिना सम्पादितं निर्मितं तुङ्गं शृङ्गं विषाणं यस्य तं तादृशम् तथा भ्राजन्तः भास्वराः खुरा यस्य तं तादृशम्। काञ्चनं सुवर्णमिव चारुः मनोहरः वर्णः यस्य तम् तं सारङ्गम्, व्यालोक्य दृष्ट्वा श्रीविजयस्य देवी सा सुतारा, क्रीडनकस्य क्रीडासाधनस्येच्छयैव नत्वन्ये-च्छया अभ्यर्थयत्, इमं गृहाणेत्येवं प्रार्थयति स्म । यद्वा क्रीडनकस्येच्छया क्रीडार्थं अभ्यर्थयत्, इमं गृहाणेत्येवं प्रार्थयति स्मैव । एवकारेणात्याग्रहः सूच्यते ॥८७॥

શ્રીવિજયની પત્ની તે સુતારાએ નીલમણિથી જાણે બનાવેલા ઉંચા શીંગડા અને ચળકતી ખરી વાળા સુવર્ણની જેમ મનોહર કાન્તિ વાળા તે (હરણ)ને જોઈને રમકડાની ઇચ્છાથી (પકડવા) પ્રાર્થના કરી. ॥૮૭॥

एतां विमुच्यावनिवासवोऽपि, प्रत्याययक्तिस्मु गमन्वधावत् ।
वीक्ष्यानुधावन्तममुं मृगोऽपि, तस्येर्ष्यवाऽऽधावदिव त्वरावान् ॥८८॥

प्रख्याता शक्तिः सामर्थ्यं यस्य स तादृशः, अवनिवासवः श्रीविजयः अपि, एतां सुतारां विमुच्य त्यक्त्वा मृगमनु पृष्ठे, अधावत् ग्रहणायेति शेषः। अमुं श्रीविजयम् अनुधावन्तं वीक्ष्य, तस्य ईर्ष्यया मत्सरेणेव, किमयं मत्तोऽधिकं वेगवानित्येवमिति भावः। मृगः अपि त्वरावान् वेगवान् अधावत्, यथाऽसौ मां मा ग्रहीदिति भावः ॥८८॥

પ્રસિદ્ધ પરાક્રમી રાજા પણ આ (સુતારા)ને મુકીને મૃગ પાછળ દોડ્યો. મૃગ પણ તેને પાછળ દોડતા જોઈ તેની ઈર્ષ્યાથી જાણે ઉતાવળથી દોડવા લાગ્યો. ॥૮૮॥

यश्चेतसाऽस्पर्शि न येन जातु, नो पाणिपद्मे विधिनाऽप्यलेखि।
भालेऽपि नो तं स कथं कुरङ्गं, लातुं प्रयासं कुरुतां सरङ्गम् ॥८९॥

यः कुरङ्गः कुत्सितो रङ्गः कलङ्कादिः। अथ च यः कुरङ्गः सीतारामयोर्विरह इव सुतारा-श्रीविजययोः कुरनिष्टो रङ्गो विरहलक्षणो भवति येन यस्माद्वा एवंलक्षणो कुरङ्गो मृगः, "मृगः कुरङ्गः" इति हैमः। चन्द्रलाञ्छने वा प्रसिद्धत्वात् कुरङ्गशब्देन कलङ्कोऽभिधीयते। यद्वा यस्य अपूर्वत्वात्, तादृशस्य असम्भवाद्वा चेतसा न अस्पर्शि अकल्पि, येन हेतुना, पाणिपद्मेन, नहि छत्रादि-चिह्नमिव कुरङ्गचिह्नं पाणौ भवतीति भावः। विधिना दैवेन भाले कपालस्थलेऽपि, नो नैव, अलेखि, त्वं कुरङ्गं ग्रहीष्यसि इत्येवमिति भावः। तं सरङ्गं शोभनवर्णं कुरङ्गं लातुं ग्रहीतुं स श्रीविजयः, कथं प्रयासं यत्नं कुरुताम्? तत्रोद्योगो न युज्यते, कृतिसाध्यताज्ञानं विना बुद्धिमतः प्रवृत्त्ययोगा-दिति भावः ॥८९॥

જે કુરંગ (કુત્સિત રંગ રાગ) મનથી કદી સ્પર્શાયો નહિ. જે કારણથી વિધાતાએ પણ કરકમલમાં (રેખરૂપે) કે કપાળમાં (લેખરૂપે) લખ્યું નહિ તે સરંગ અશુભ આશય વાળા કુરંગ-હરણને પકડવાને તે રાજા કેમ પ્રયાસ કરતો હશે? ॥૮૯॥

एतं चतुष्पादमहं द्विपादः, प्राप्तुं कथं वा प्रभवेयमेवम्?
चित्ते परामृश्य स धावति स्म, स्त्रीणां ग्रहस्तत्र परं बलीयान् ॥९०॥

अहं द्विपादः चरणद्वयवान्, एतं चतुष्पादं प्राप्तुं कथं वा प्रभवेयम् समर्थः स्याम्, द्विपादा-पेक्षया चतुष्पादस्य धावने स्वभावत एव वेगाधिक्यात् इति भावः। एवं पूर्वोक्तप्रकारं चित्ते परामृश्य विचार्यापि स श्रीविजयः धावति स्म, तस्य तदा धावनं न युज्यते इति चेत्तत्राह— तत्र तादृशाकार्यकरणे, परं केवलं स्त्रीणां ग्रह आग्रहः बलीयान् स्त्रीप्रसादनाय हि धीमन्तोऽप्यकार्ये प्रवर्तन्ते रामादिवदिति भावः ॥९०॥

આ ચાર પગવાળાને બે પગવાળો હું કેવી રીતે પકડવા શક્તિમાન થઈશ. એમ મનમાં વિચારીને પણ તે રાજા દોડ્યો. તેમાં સ્ત્રીનો હઠ જ સૌથી વધારે બળવાન છે. (તે સિદ્ધ થાય છે.) ॥૯૦॥

अथ मृगस्य प्रतारणप्रकारमाह—

भूत्वा कदाचित् किल सन्निकृष्ट-स्तूर्णं भवत्येव च विप्रकृष्टः।
कालं ददद्यो विजयान्तरितं, येन ग्रहीतुं हरिणः स शक्यः ॥९१॥

हरिणः अन्तरिक्षं गगनं निकषा अन्तिके आकाशे इत्यर्थः । "निकषान्तिके" इत्यमरः । फाल-मुत्प्लुतिं वदत् कुर्वन् कदाचित् किलेत्यलीके सन्निकृष्टः समीपस्थः भूत्वा तूर्णं शीघ्रमेव, विप्रकृष्टः दूरस्थः एव च भवति स तादृशः हरिणः केन ग्रहीतुं शक्यः ? न केनापि इत्यर्थः । स्थिरैकप्रवृत्तिर्हि गृह्यते न तु चञ्चलक्षणपरिवर्त्तमानगतिरिति भावः ॥९१॥

જે હરણ કદી પાસે થઇ તરત જ દૂર થઈ જતો હતો, આકાશમાં કૂદકો મારતો તે હરણ કોનાથી પકડી શકાય ? ॥૯૧॥

वेगः समीरस्य च सन्निधाना–देणेऽस्ति तद्वाहनमेव यस्मात् ।
तेनैव धावन् वसुधाधिपालो, निन्येऽतिदूरं स जवेन तेन ॥९२॥

समीरस्य वायोः सन्निधानात्सान्निध्याच्च, एणे मृगे वेगः अस्ति । कुतः सान्निध्यमित्यत आह—यस्माद्धेतोः, तस्य वायोः वाहनं यानमेव, एण इति सम्बध्यते, एवं च साधुसन्निधानमिति भावः । तेनैव मृगेनैव सह धावन् स वसुधाधिपालः श्रीविजयः तेन हरिणेन, जवेन वेगेन, शीघ्रतया वा अतिदूरं निन्ये प्रापितः । वेगेन धावतो हि तादृशेन प्रेरकेणातिदूरप्राप्तिः सुकरेति भावः ॥ ९२ ॥

પવન પાસે હોવાથી મૃગ તે (પવન)નું વાહન છે. તે પવનના વેગથી જ દોડતા રાજાને તે મૃગ વેગથી ઘણું દૂર લઈ લઈ જતો (પવન વેગથી દોડતા મૃગ પાછળ તેવા વેગથી દોડતા રાજા ઘણા દૂર જતા રહ્યા.) ॥૯૨॥

ऐरावणोऽम्भोरुहिणीमिवैतां, तारां स हृत्वाऽशनिघोषकोऽपि ।
वेगाज्जगाम स्वपुरीमरीण–स्वौजः पराभूतसमस्तभूतः ॥९३॥

अम्भोरुहिणीं कमलिनीम् ऐरावण ऐरावत इव, एतेन हरणसुकरतोक्ता । एतां तारां सुतारां हृत्वा सः अरीणमक्षीणं यस् स्वौजः स्वबलं तेन पराभूताः पराजिताः समस्ताः भूताः प्राणिनः येन स तादृशः अशनिघोषकः अपि वेगात् स्वपुरीं चमरचञ्चानामकां जगाम ॥ ९३ ॥

તે પોતાના મહાન પરાક્રમથી સર્વ પ્રાણીને જીતનારો (પીડનારો) તે દુષ્ટ અશનિઘોષ પણ પેલી સુતારાને કમલ–નાલને હાથીની જેમ ઉપાડી (હરણ કરી) વેગથી પોતાને નગર જતો રહ્યો. ॥૯૩॥

क्लेशाब्धिनिस्तारतरी प्रणुन्ना, विद्या प्रतारिण्यपि तेन तत्र ।
रूपं सुताराभ्रमकारि कृत्वा, फूच्चक्र उच्चैः स्वरमेवमेषा ॥९४॥

तेनाशनिघोषकेण तत्र ज्योतिर्वने अपि पुनरर्थे, क्लेश एव दुस्तरत्वादब्धिः । तस्मान्निस्तारे पारकरणे तरी नौकातुल्या प्रतारिणी विद्या प्रणुन्ना प्रयुक्ता, सुतारायाः भ्रमं करोतीत्येवंशीलं सुतारा-सदृशमित्यर्थः । रूपं कृत्वा निर्माय, एषा कल्पितसुतारा, उच्चैः स्वरं यथास्यात्तथा, एवं वक्ष्यमाण-प्रकारं फूच्चक्रे फूत्कारं कृतवान् ॥ ९४ ॥

ત્યાં તે અશનિઘોષ વડે પ્રેરિત ક્લેશરૂપી સમુદ્રને તરવામાં હોડી સમાન પ્રતારણી વિદ્યા પણ સુતારાનો ભ્રમ ઉત્પન્ન કરે એવું રૂપ બનાવી ઊંચા સ્વરે આ પ્રમાણે રડવા લાગી. ॥૯૪॥

**तथैवाह—**

**प्राणेश ! हा कुक्कुटभोगिनाहं, दष्टास्मि दष्टास्मि समेहि तूर्णम् ।**
**श्रुत्वेति हित्वा हरिणं रणेच्छुः, क्षोणीपतिर्व्याववृते द्रुतं सः ॥९५॥**

हा प्राणेश ! कुक्कुटाख्येन भोगिना सर्पेण अहं दष्टा अस्मि दष्टा अस्मि, सम्भ्रमे द्विरुक्तिः । तूर्णं समेहि, इति इत्थं श्रुत्वा, हरिणं हित्वा त्यक्त्वा, रणेच्छुः कुर्कुटेन युयुत्सुः स क्षोणीपतिः श्रीविजयः द्रुतं व्याववृते निवृत्तवान् । कुक्कुटाहि "कुक्कुटाभो, वर्णेन च रवेण च" इति हैमः ॥ ९५ ॥

હે પ્રાણેશ ! કુર્કુટ નામના સર્પે મને ડંખ દીધો છે, જલદી આવો જલદી આવો. તે સાંભળીને હરણને છોડી તે રાજા સર્પ સાથે યુદ્ધ ઇચ્છતો જલદી પાછો ફર્યો ॥૯૫॥

**मन्त्रैर्विचित्रैर्मणिभिः पवित्रै–स्तां प्रत्यकार्षीन्नृपतिः स यावत् ।**
**सा तावदत्याजि निरीक्षमाण–स्याप्यस्य जीवेन कृतागसेव ॥९६॥**

स नृपतिः विचित्रैः विषनाशकैः मणिभिः, पवित्रैः सिद्धैः मन्त्रैश्च, यावत्, तां सुताराम्, प्रत्यकार्षीत् चिकित्सितवान्, तावत् सा सुतारा, निरीक्ष्यमाणस्य पश्यतः एवास्य अपेरेवार्थत्वात् अमत इति शेषः । कृतागसा कृतापराधेन इव । यथा कृतापराधः कमपि जीवमपि त्यजति तथेत्यर्थः । जीवेन प्राणैरत्याजि, मृता इत्यर्थः ॥९६॥

તે રાજા જેટલામાં પવિત્ર એવા અનેક મંત્રો અને મણિઓથી ચિકિત્સા કરે છે તેટલામાં તે રાજાના જોતા જ જીવ અપરાધીની જેમ તે સુતારાને છોડી દીધો. સુતારાનો જીવ મરણ પામી ચાલ્યો ગયો. ॥૯૬॥

**हंसेन मुक्तां नलिनीमिवासौ, तां प्रेयसीं प्रेक्ष्य पपात भूमौ ।**
**आस्वादितोन्मत्तकवन्मुमूर्च्छ, पद्मोपलम्भे प्रथमं निदानम् ॥९७॥**

हंसेन राजहंसेन अथ च आत्मना, मुक्तां त्यक्तां नलिनीं कमलिनीमिव, 'लक्ष्मीः पद्मा' इति हैमोक्तेः पद्मायाः राजलक्ष्म्याः पद्मस्य कमलस्य च उपलम्भे प्राप्तौ 'कमलं नलिनं पद्मं' इति हैमः । प्रथमं निदानम् कारणं नलिन्यां सत्यामेव कमलोत्पत्तिः सुतारापरिणयानन्तरमेव च तस्य राज्यप्राप्तिरिति श्लेषेणोभयविशेषणमिदम् । तां प्रेयसीं प्रेक्ष्य, असौ श्रीविजयः भूमौ पपात, आस्वादितो भक्षित उन्मत्तकः धत्तूरः येन सः तद्वत् "उन्मत्तमुन्मादवति धत्तूरमचकुन्दयो" रिति विश्वप्रकाशः । मुमूर्च्छ मूर्च्छां गतः ॥९७॥

તે રાજા હંસથી મુકી દેવાયેલી કમલિનીની જેમ હંસ–જીવથી રહિત તે પ્રિયતમાને જોઈ ભૂમિ ઉપર પડી ગયો. લક્ષ્મી મેળવવામાં મુખ્ય કારણ મનાતા એવા ધતુરા ખાધેલાની જેમ મૂર્છા પામી ગયો. ॥૯૭॥

**पद्माकरास्फालननित्यशैत्य – गन्धोद्धुरारामसमीरणेन ।**
**स प्राप्तचैतन्यमरो धरेन्द्र–श्चक्रे विलापानिति मुक्तधैर्यः ॥९८॥**

पद्माकरस्तडागः "पद्माकरस्तडागोऽस्त्री"त्यमरः । तस्य आस्फालनेन सम्बन्धेन नित्यं शत्येन गन्धेन चोद्धुरः उदग्रः सारवानिति यावत् । आरामस्योपवनस्य समीरणः वायुस्तेन प्राप्तः चैतन्यस्य भरः येन स तादृशः स्वस्थः, स धरेन्द्रः श्रीविजयः, मुक्तं त्यक्तं धैर्यं येन स अधीरः सन् , प्रियावियोगादिति भावः । इति वक्ष्यमाणप्रकारान्, विलापान् शोकाक्रन्दान् चक्रे ।।९८।।

કમળના તળાવને તરંગિત કરવાથી હંમેશા શીતળ અને સુગંધ એવા ઉપવનના પવન લાગવાથી ખૂબ હોંશમાં આવી ગયેલો તે રાજા ધૈર્ય છોડીને આ પ્રમાણે વિલાપ કરવા લાગ્યો. ।।૯૮।।

अथ तद्विलापमेवाह—

मद्विक्रमः किं कुरुतां प्रतापः, कं वा समाक्रामतु मामकोऽपि ।
दृश्योऽभविष्यद् यदि धर्मराजो, व्यज्ञास्यत स्फूर्तिरियं तयोस्तत् ।।९९।।

मम विक्रमः पराक्रमः किं कुरुताम् ? मामकः प्रतापः तेजः अपि वा कं पुरुषं समाक्रामतु पराभवतु ननु ? प्रिया हर्त्तर्येव तावुपयोज्याविति चेत्तत्राह—यदि धर्मराजः अन्तकः, दृश्यः नयनगोचरः अभविष्यत्, तत्तदा, तयोः पराक्रमप्रतापयोः, इयं बुद्धिस्था, स्फूर्तिः कौशल्यं व्यज्ञास्यत् । धर्मराजस्तु न दृश्यः, अदृश्यश्च न पराक्रमप्रतापयोर्विषयः उपायान्तराभावाच्चागतिरहं दीन इति नितरां शोकोद्दीपनम् ।।९९।।

મારો પરાક્રમ શું કરે ? પ્રતાપ પણ કોણે દબાવે ? જો ધર્મરાજ—યમરાજ દેખી શકાત તો તેમ-નેથી પ્રસિદ્ધ પ્રભાવ જણાત. ।।૯૯।।

नो धीरुपायुङ्क्ततमां क्वचिन्मे, धामापि मे निष्फलतां जगाहे ।
यन्मय्यपि प्राणति मत्प्रियाया, वैवस्वतोऽजायत जीवितेशः ।।१००।।

मे मम धीः बुद्धिः नैव; क्वचिदपि, उपयुङ्क्ततमाम् उपयोगिनी जाता, मे धाम तेजः यत्नो वा अपि निष्फलतां जगाहे प्राप्तम् । "धाम रश्मौ गृहे देहे, स्थाने यत्नप्रभावयो" रिति कोशः ।

ननु बुद्धेस्तेजसो वाऽनुपयोगवैफल्ये कुत इति चेत्तत्राह—यद्यस्माद्धेतोः मयि प्राणति जीवत्यपि, वैवस्वतः यमः, "वैवस्वतोऽन्तक" इत्यमरः । मत्प्रियायाः, जीवितेशः जीवनशासकः, अथ च पतिः अजायत । स्वपत्न्याः स्वस्मिन् सत्येव पुरुषान्तरपत्नीत्वं सुदुःसहम्, तत्रापि बुद्धितेजोभ्यां न किमपि कृतम् इति महान् निर्वेदः बुद्धौ तेजसि स्वस्मिंश्चेति शोकपराकाष्ठेति भावः ।।१००।।

મારી બુદ્ધિ ક્યાંય પણ ઉપયોગ કરતી નથી, મને કાંઇ સમજાતું નથી, મારું તેજ પણ નિષ્ફળતાને પામ્યું છે. કેમકે હું જીવતો છતાં પણ યમરાજ મારી પ્રિયાનો પ્રાણેશ થઈ ગયો—પ્રાણ હરી ગયો (પોતાની પ્રિયાનો બીજો પતિ બને આ વાત કોઈ પણ પતિ, બુદ્ધિ અને તેજ હોય તો કેમ સાંખી લે ? ધ્વનિ.) ।।૧૦૦।।

हा ! श्राद्धदेवस्त्वममुष्य हासा-भिव्यञ्जकं किं न यमस्य हन्तुः ।
स श्राद्धदेवः प्रथितोऽत्र लोके, सर्वत्र कारुण्यमुपादिशद्यः ।।१०१।।

हा इति शोके वधारम्भे च, अमुष्य हन्तुः प्राणापहर्त्तुः यमस्य, श्राद्धदेवपदवाच्यत्वं हासाभिव्यञ्जकम् हासजनकं किं न, अपि तु तद्धास्यजनकमेव 'हासो हास्यश्च' इत्यमरः श्रद्धायुक्ताः श्राद्धाः तेषां देवः कथं नाम हन्ता भवितुमर्हति, तथा च हन्तरि तथा प्रयोगः परिहासायैवेति भावः ।

ननु तर्हि कः श्राद्धदेव इत्यत आह—स श्राद्धदेवः, अत्र लोके प्रथितः प्रसिद्धः कथितः, यः सर्वत्र उच्चनीचत्वादिनिर्विशेषेण कारुण्यम् करुणाम्, "कारुण्यं करुणा घृणे"त्यमरः । उपादिशत्, यस्तु स्वयमेव हिंसकः, दूरे तेन कारुण्योपदेश इति तस्य श्राद्धदेवत्वं हास्यायैवेति ॥१०१॥

હા હિંસા કરનાર—મારી નાંખનાર આ યમરાજનુ શ્રાદ્ધદેવ, શ્રદ્ધાવાળાનો દેવ એવું નામ ઉપહાસ પ્રગટ કરનારૂં નથી શું ? છે જ. કેમકે આ જગતમા તે શ્રાદ્ધદેવ પ્રસિદ્ધ છે જેણે સર્વત્ર કરુણાનો ઉપદેશ કર્યો છે. ॥૧૦૧॥

पश्येद्विना पण्डकपण्डितान् कः, को वा स्पृशेन्मामपहाय हा ! त्वाम् ।
यत्कुक्कुटाहिः प्रययौ विदश्य, ज्यायान्विधेः प्रक्रम एव सोऽयम् ॥१०२॥

त्वां सुताराम्, पण्डका अन्तःपुररक्षकाः क्लीबाः, "पण्डः षण्ढः क्लीबो नपुंसकम्" इति हैमः, पण्डिताश्च तान्विना, अन्यः, कः पश्येत् ? न कोऽपीत्यर्थः, अन्तःपुरे एताभ्यां द्वाभ्यामतिरिक्तस्य गमननिषेधात्, तव च बहिर्गमनाभावात् कुलीनत्वाच्चेति भावः । एतेन शीलसम्पन्नतोक्ता । मामपहाय को वाऽन्यः स्पृशेत् ? न कोऽपीत्यर्थः । पतिव्रतत्वादिति भावः । गुणस्मरणेन शोकस्य वेगाधिक्यादाह—हा, खेदे शोके वा । यत्कुक्कुटाहिः, विदश्य दष्ट्वा प्रययौ, सोऽयम् । विधेर्भाग्यस्य ज्यायान् अनभिभवनीयः, प्रक्रमः प्रयत्न एव, प्रक्रमः प्रस्तावः "प्रक्रमः प्रस्तावः" इति हैमः । नान्यथैवं तादृश्यास्तव भवितुमर्हतीति भाग्यहीनोऽहमिति स्वनिर्वेदः ॥१०२॥

પંડક નપુંસક અંતઃપુરના રક્ષકો અને પંડિતો સિવાય તને કોણુ જોઈ શકે ? હા ? મારા સિવાય તને કોણુ સ્પર્શી શકે છતાં કર્કુટ સર્પ તને ડંખી જતો રહ્યો તે તો વિધાતાનું વિધાન બળવાન છે (એ જ કહેવાય). ॥૧૦૨॥

संसारसर्वस्वमियं ममासी—न्नैतां विना जीवत एव लाभः ।
इत्थं विलप्यैव चिरं तयाऽमा, क्लृप्तां चितां प्राविशदेष भूपः ॥१०३॥

मम इयं सुतारा संसारे सर्वस्वं समग्रसम्पत् आसीत् एतां तां विना, जीवतः नैव लाभः विशेषप्राप्तिः, सर्वस्वापहारे बीजाभावात् कुतो लाभ इति भावः, इति जीवतनिर्वेदः, इत्थमनेन प्रकारेण, चिरं विलप्य, एष भूपः श्रीविजयः, तया सुतारया अमा सहैव क्लृप्तां रचितां चितां प्राविशत् ॥१०३॥

આ (સુતારા) આ સંસારનું સર્વસ્વ હતું, તેના સિવાય જીવતાં મને કોઈ લાભ નથી. આમ લાંબા કાળ સુધી વિલાપ કરી તે રાજાએ તેણે બનાવેલાં ચિતામાં તેની સાથે પ્રવેશ કર્યો. ॥૧૦૩॥

जज्वाल यावत्स चिताकृशानु—र्वातेन दारूपचितः प्रणीतः ।
विद्याधरद्वन्द्वमुपाजिहीत, व्योम्नापि तावत्सहसा महिम्ना ॥१०४॥

यावत्स चितायाः कृशानुरग्निः, वातेन वायुना, दारुणि काष्ठे, उपचितः वृद्धः, प्रणीतः कृतः सन् जज्वाल, तावत्, महिम्ना प्रभावेण, व्योम्ना आकाशेन, सहसा झटित्येव विद्याधरद्वन्द्वं विद्याधरयुगलम् उपाजिहीताऽऽगमताम् ॥१०४॥

જેટલામાં લગાડાએલો અને લાકડાથી વૃદ્ધિને પામેલો તે ચિતાનો અગ્નિ પવન લાગવાથી જ્વાળા વાળો થયો તેટલામાં ઓચિંતા બે વિદ્યાધરો પોતાના પ્રભાવે આકાશ માર્ગે આવી પહોંચ્યા. ॥૧૦૪॥

अथ तयोः कृत्यमाह—

मन्त्रेण पावित्र्यमितैर्जलौघै—रेकोऽभ्यषिञ्चच्चितिचित्रभानुम् ।
विद्या प्रतारिण्यपि साट्टहास्यं, निर्माय तत्कालमगात्प्रणश्य ॥१०५॥

एकः तयोरन्यतरः विद्याधरः, मन्त्रेण पावित्र्यमितैः पवित्रैः जलौघैः जलधाराभिः चितेः चितायाः चित्रभानुमग्निम् अभ्यषिञ्चत्, सा प्रतारिणी विद्याऽपि अट्टहासं निर्माय कृत्वा, तत्कालं प्रणश्य अन्तर्धाय अगात् । अभिमन्त्रितजलसेकेन प्रतारिणी विद्या स्वरूपं प्राप्य ततोऽगादित्यर्थः ॥१०५॥

એક વિદ્યાધર મંત્રથી પવિત્ર કરાયેલા જળથી ચિતાની આગને ઠારવા લાગ્યો. પ્રતારણી વિદ્યા પણ તે જ વખતે અટ્ટહાસ્ય કરી નાસી ગઈ. ॥૧૦૫॥

अथ श्रीविजयस्य कौतुकाज्जिज्ञासामाह—

एतत्किमाकस्मिकमेव जात—मित्यभ्यधात्तावपि भूमिपालः ।
व्याजह्रतुर्व्याजविवर्जितौ तौ, पत्ती नरेन्द्रामिततेजसो नौ ॥१०६॥

भूमिपालः श्रीविजयः तौ द्वावपि एतत्किम् आकस्मिकम् अहेतुकं सहसा एव वा जातमभूत्, इत्येवमभ्यधात्पप्रच्छ तौ द्वौ विद्याधरौ व्याजेन कपटेन 'कपटोऽस्त्री व्याजदम्भोपधयश्छद्मकैतवे' इत्यमरः । विवर्जितौ रहितौ, व्याजह्रतुरूचतुः, किमित्याह—नरेन्द्रस्य, यद्वा नरेन्द्रेति सम्बोधनम्, अमिततेजसस्तदाख्यस्य राज्ञः, नौ आवाम्, पत्ती भृत्यौ, स्व इति शेषः । अत्र नाविति विभक्तिप्रतिरूपकमव्ययम् ॥१०६॥

(त्यारे) राजाએ ते બન્નેને પૂછ્યું કે અકસ્માત આ શું થઈ ગયું ? નિષ્કપટ એવા તે બન્ને બોલ્યા કે અમે બન્ને રાજા અમિતતેજના પત્તી—ભૃત્ય—માણસ છીએ. ॥૧૦૬॥

शेषं कथनीयं वक्ति—

मां विद्धि सम्बोधकरं विभिन्नं, श्रोताभिधानं त्ववधानम् ।
पुत्रं परं दीपशिखं ततो नौ, तीर्थानि नन्तुं प्रयतौ प्रयान्तौ ॥१०७॥

सम्बोधकरं वृषे धर्मे सावधानमप्रमादिनं विमिश्रं संभिन्नं श्रोताऽभिधानं संभिन्नश्रोतनामानं परं द्वितीयं पुत्रं अर्थान्मम, दीपशिखं नाम विद्धि, ततस्तदनन्तरम् नौ द्वावपि पितापुत्रौ अत्रापि नौशब्दस्य पूर्ववत्प्रयोगः समर्थनीयः। तीर्थानि नन्तुं वन्दितुं प्रयतौ प्रयत्नशीलौ सन्तौ प्रयान्तौ गच्छन्तौ, अस्याकर्णयामासिवेत्यग्रेतनेनान्वयः ॥१०७॥

हा प्राणनाथ ! प्रसरत्प्रताप ! श्रीमत्त्रिपृष्ठप्रभव ! प्रजेश !
हा शौर्यवर्यामितधामनाम-सौन्दर्यविद्योतितवंश्यकीर्ते ! ॥१०८॥

त्रायध्वमस्मादिमिकां सुतारां, विद्याधरादन्यकलत्रलोलात् ।
आकर्णयामासिव चेति वाच-मुच्चैस्तरां व्योम विगाहमानाम् ॥१०९॥

हा प्राणनाथ ! जीवितेश ! प्रसरन् विस्तृतः प्राप्नुवन् प्रभावः प्रतापो यस्य तदामन्त्रणे, श्रीमत्त्रिपृष्टात् प्रभवः उत्पत्तिः यस्य तदामन्त्रणे, हा प्रजेश ! राजन् ! हा शौर्येण पराक्रमेण वर्य ! श्रेष्ठ ! अमितं धाम तेजो यस्य तन्नाम्नः चन्द्रस्य सौन्दर्यमिव सौन्दर्यं यस्य तत्संबोधने । विद्योतिता प्रकाशिता वंश्यानां वंशोद्भवानां कीर्त्तिर्येन तदामन्त्रणे । अन्यस्य कलत्रे स्त्रियां लोलाल्लम्पटात् "लोलुपो लोलुभो लोलो लम्पटो लालसोऽपि च" त्यमरः । अस्माद्विद्याधरात्, इमिकामिमां स्वप्रियां सुतारां त्रायध्वं रक्षत इतीत्थम् उच्चैःस्वरां तारस्वराम्, अत एव, व्योमाकाशं विगाहमानां पूर्यमाणां वाचम् आकर्णयामासिवाश्रौष्व, तीर्थं प्रयान्ताविति सम्बध्यते ॥१०८॥१०९॥

तमने सचेतन करनार अने धर्मक्रियामां सावधान एवा मने मिश्रश्रोत नामनो जाणो. बीजो दीपशिख नामनो मारो पुत्र छे. अने तीर्थनुं वंदन करवा नियम पूर्वक जतां अमो बन्नेए हा प्राणनाथ ! विशाल प्रतापी त्रिपृष्टना पुत्र प्रजाना स्वामी ! श्रेष्ठ शौर्य अपरिमित तेज नाम अने सौंदर्यथी कुलकीर्तिने प्रकाशित करनार ! आ सुताराने परस्त्रीलंपट एवा आ विद्याधरथी बचावो, आवी आकाशमां फेलाती ऊंचा स्वरनी वाणी सांभळी. ॥१०७-१०८-१०९॥

अथ तदनन्तरवृत्तमाह—

अस्मत्प्रभोर्जामिरनेन रूपा-ऽऽक्षिप्ताशयेन ह्रियते स्म नूनम् ।
व्यावर्तयावस्तदिमामिमं च, हत्वा दुराचारमपेतसारम् ॥११०॥

अनेन, रूपेण आक्षिप्तो हृतः आशयः भावो यस्य तेन तादृशेन विद्याधरेण "मतभावाशया अपि" इति हैमः । अस्मत्प्रभोः श्रीअमिततेजसः जामिः भगिनी नूनमवश्यं ह्रियते स्म, नान्यथा सुतारायाः ईदृशं वचनं संभवतीति भावः । तत्तस्मात्, अपेतः दूरीभूतः सारः बलं यतस्तं निर्बलम् । 'सारो बले स्थिरांशे च' इत्यमरः । एतेन हननसौकर्यं स्वस्य च ततोऽधिकबलवत्त्वमुक्तम् । अथ च दुराचारं परस्त्रीहरणादिति भावः । इमं विद्याधरं हत्वा, इमां सुतारां व्यावर्तयावः पश्चान्निवर्तयावः ॥११०॥

चित्ते विमृश्येति रुषारुणौ तौ, यावत्प्रवृत्तौ सह तेन योद्धुम् ।
निस्त्रिंशवृत्तेन दुराशयेन, निस्त्रिंशमोदाय धृतं करेण ॥१११॥

इत्युक्तप्रकारं चित्ते विमृश्य, रुषा कोपेन अरुणौ रक्तवर्णौ द्वावावाम् करेण पाणिना, शितं तीक्ष्णं निस्त्रिंशं खड्गम् आदाय, निस्त्रिंशेन खड्गेन वृत्तः सञ्जातेन यद्वा निस्त्रिंशः क्रूरः वृत्तः स्वभावो यस्य, निस्त्रिंशं क्रूरं वृत्तम् आचारो वा यस्य तेन तादृशेन "क्रूरे नृशंसनिस्त्रिंशपापाः" "करवालनिस्त्रिंशकृपाणखड्ग" "चरिताचारौ । वृत्तं शीलं च" इति हैमः । दुराशयेन तेन विद्याधरेण सह, योद्धुं यावत्प्रवृत्तौ, अस्य तावदित्यग्रेतनेनान्वयः ॥१११॥

અમારા રાજાની બહેનનું તેના રૂપથી આકર્ષયેલા આ વિદ્યાધર ખરેખર હરણ કરે છે તો અધમ દુરાચારી એવા આને હણી આને બચાવીએ. એમ મનમાં વિચારી ક્રોધથી લાલ થઈ હાથમાં તીક્ષ્ણ તલવાર લઈ અમો બન્ને જેટલામાં ક્રૂર આચારવાળા અને ખોટી દાનતવાળા એવા તેની સાથે યુદ્ધ કરવા પ્રવૃત્ત થયા. ॥૧૧૦-૧૧૧॥

तावन्महिष्या भवतोऽभ्यधायि, युद्धेन वां पूर्णमितोऽपि तूर्णम् ।
ज्योतिर्वनं नाम वनं प्रयातं, प्राणांस्त्यजन्तं प्रतिषेधतं तम् ॥११२॥

तावत् भवतः महिष्या पट्टराज्या सुतारया अभ्यधायि कथितम्, वां युवयोः युद्धेन पूर्णम् अलम्, इतः अस्मादपि कार्यात्प्रथमं, तूर्णम्, ज्योतिर्वनं नाम वनं प्रयातम् गच्छतं, तत्र गतं प्राणान् त्यजन्तं तं मत्पतिं श्रीविजयं प्रतिषेधतं निवारयतं मन्मुक्तिस्तु पश्चादपि भवेदेव, यतोऽहं जीवितेति भावः ॥११२॥

तं कमित्याह—

विष्णुत्रिपृष्ठान्वयवारिराशि-वेलासमुल्लासनशीतरश्मिम् ।
देव्या प्रतारिण्यभिधानयामुं, मद्रूपसम्पादनविप्रलब्धम् ॥११३॥

देव्या प्रतारिण्यभिधानया, मद्रूपसम्पादनेन विप्रलब्धं वंचितम्, अमुं प्रसिद्धं विष्णोर्वासुदेवस्य त्रिपृष्ठस्यान्वयो वंश एव वारिराशिरब्धिस्तस्य वेलायास्तटलहर्याः समुल्लासने वर्धने शीतरश्मिं चन्द्रतुल्यं श्रीविजयं प्रतिषेधतमिति पूर्वेणान्वयः ॥११३॥

એટલામાં તમારી પટ્ટરાણીએ કીધું કે તમારા યુદ્ધથી સર્યું તમો બન્ને અહિંથી જલદી જ્યોતિર્વન નામે વનમાં જાઓ અને વાસુદેવ એવા ત્રિપૃષ્ટના કુળરૂપી સમુદ્રની વેલાને વધારવામાં ચંદ્ર સમાન, અને પ્રતારણી વિદ્યાથી મારૂં રૂપ બનાવીને ઠગાયેલા એવા તેમને પ્રાણત્યાગ કરતા રોકો ॥૧૧૨-૧૧૩॥

स्वस्वामिजाम्या विनियोगयोगात्, सा नाशिता देव ! लघु प्रतारा ।
तत्त्वं विषादं त्यज नौ प्रसादं, सम्पाद्य वैताढ्यमुपेहि शैलम् ॥११४॥

देव ! राजन् ! स्वस्वामिनः अमिततेजसः जाम्याः विनियोगस्य निदेशस्य योगात्सम्बन्धात् अत्र च समागाव इति शेषः । सा प्रतारा प्रतारणी लघु शीघ्रमेव नाशिता तत्तस्मात्, तस्याः जीवन्त्याः एव विद्यमानत्वात्, त्वं विषादं शोकं त्यज, नौ आवयोः प्रसादं प्रसन्नतां सम्पाद्य कृत्वा वैताढ्यं शैलम् उपेहि, आगच्छ ॥११४॥

હે રાજા! પોતાના રાજાની બહેનની આજ્ઞાથી તે પ્રતારણી નસાડી દેવાય છે. માટે તમે વિષાદ છોડો. અને અમારા ઉપર કૃપા કરી વૈતાઢ્ય પર્વત ઉપર ચાલો. ॥૧૧૪॥

अभ्यर्थ्य ताभ्यां वसुधासुधांशु-र्नीतः स वैताढ्यगिरिं गरीयान् ।
वृत्तान्तमुक्त्वाऽमिततेजसे स्वं, दुःखं हृदिस्थं गमयाम्बभूव ॥११५॥

ताभ्यां द्वाभ्यामभ्यर्थ्य गरीयान् महत्तरः वसुधायां सुधांशुश्चन्द्र इव स श्रीविजयः वैताढ्यगिरिं नीतः प्रापितः सन्, अमिततेजसे, वृत्तान्तं समाचारमुक्त्वा स्वं स्वकीयं हृदिस्थं दुःखं गमयाम्बभूव तत्याज, कथनेन दुःखापचयो भवतीति भावः ॥११५॥

તે બન્નેએ અભ્યર્થના કરી શ્રેષ્ઠ અને પૃથ્વીના ચન્દ્રસમાન એવા તે રાજાને વૈતાઢ્ય પર્વત ઉપર લઈ ગયા અને તે રાજા અમિતતેજને બધો વૃતાન્ત કહી, પોતાના મનમાં રહેલા દુઃખને ઓછું કર્યું. ॥૧૧૫॥

कुर्वँल्ललाटे भ्रुकुटिं प्रकोपात्ताम्रीकृतापाङ्गविलोचनाऽऽस्यः ।
ऊचेऽर्ककीर्तिप्रभवः क्षितीशः, संरम्भवान् श्रीविजयं प्रतीदम् ॥११६॥

प्रकोपात् ललाटे भ्रुवोः कुटिं कौटिल्यं भ्रूविकारं कुर्वन् ताम्रीकृतानि रक्तानि अपाङ्गौ नेत्रान्तौ "अपाङ्गौ नेत्रयोरन्तौ" इत्यमरः । विलोचने नेत्रे आस्यं मुखं च येन स तादृशः, संरम्भः संवेगस्तद्वान्, अर्ककीर्त्तिप्रभवः अमिततेजाः क्षितीशः श्रीविजयं प्रति इदं वक्ष्यमाणमूचे ॥११६॥

કપાળમાં ભ્રકુટી કરતા અને ક્રોધથી લાલ નેત્ર અને મુખવાળા અમિતતેજે ઉતાવળથી શ્રીવિજયને આમ કીધું. ॥૧૧૬॥

तदुक्तिमेवाह—

आदाय कस्तक्षकमौलिरत्नं, कोटीरकोटेः कुरुतां विभूषाम् ।
सौपर्णपक्षान् परिगृह्य तूण-बाणान् सपक्षांश्च जिजीविषुः कः ?॥११७॥

तक्षकस्य सर्पराजस्य मौलेः मस्तकाद्रत्नमादाय, कः कोटीरस्य मुकुटस्य "मौलिः किरीटं कोटीरमुष्णीषम्" इति हैमः । कोटेरग्रभागस्य विभूषां मण्डनं कुरुताम्, न कोऽपीत्थं कर्त्तुं समर्थ इत्यर्थः । ततो रत्नादाने प्राणनाशस्यैवावश्यंभावो, दूरे मुकुटकोटिविभूषेतिभावः । तथा कः जिजीविषुः जीवितुमिच्छुः, सुपर्णस्य गरुडस्येमे सौपर्णास्तान् पक्षान्, "सुपर्णः पन्नगासनः, गरुत्मान् गरुडः" इत्मरः । परिगृह्य तूणस्य तूणीरस्य बाणान् सपक्षांश्च पुङ्खस्थपत्रसहितांश्च, कुरुतामिति पूर्वेणान्वयः । नहि जिजीविषुणेत्थं कर्त्तुं शक्यते, तथाकरणे मरणावश्यंभावात् इति भावः "तूणोपासंगतूणीरे"त्यमरः ॥११७॥

તક્ષકના મસ્તકનો મણિ લઇ કોણ પોતાના મુકુટનું ભૂષણ બનાવી શકે? જીવવા ઇચ્છતો કોણ માણસ ગરુડની પાંખો લઈ પોતાના તૂણીર અને બાણોને પાંખ લગાડી શકે? ॥૧૧૭॥

संगृह्य जीवाम्यधिकप्रियं ते, जामिं मदीयां मदविह्वलः सन् ।
स क्व प्रयाता मयि पृष्ठलग्ने, दुर्वारवैरिक्षयकालदण्डे ॥११८॥

ते तव जीवेनाप्यभ्यधिकां प्रियां मदीयां जामिं मदेन कामविकारेणाथवा बलमदेन विह्वलः विलुप्तविवेकः सन् संगृह्य अपहृत्य सः विद्याधरः, दुर्वाराणां वैरिणां क्षये कालस्यान्तकस्य दण्ड इव तस्मिन् मयि पृष्ठलग्ने पृष्ठमनुधावति सति, क्व कुत्र प्रयाता प्रयास्यति, न क्वापि गन्तुं शक्नोति, गमने वा न परित्राणसंभव इति भावः ॥११८॥

તમારી—પ્રાણુથી પણુ અધિક પ્રિય—એવી મારી બહેનને લઈને કામ તુર એવો તે દુર્ધર્ષ શત્રુઓના નાશ કરવામાં કાલદંડ સમાન એવો હું પાછળ પડયે છતે કયાં જવાનો છે? ॥૧૧૮॥

उक्त्वेति शस्त्रावरणीमणीयो–बन्धप्रमोक्षप्रगुणप्रभावाम् ।
विद्यां ददौ श्रीविजयाय हृद्यां, निःशेषदुःखच्छिदुरां नरेशः ॥११९॥

इति पूर्वोक्तप्रकारम् उक्त्वा नरेशोऽमिततेजाः शस्त्राणाम् आवरणीं निवारिकाम्, अणीयसः सूक्ष्मतरस्यापि बन्धस्य बन्धनस्य प्रमोक्षे भेदने प्रगुणोऽनुकूलः प्रभावः यस्यास्ताम् सकलबन्धच्छेदकरीम्, अत एव, निश्शेषस्य समस्तस्य दुःखस्य छिदुरां भेत्त्रीम्, हृद्यां मनोहरां विद्याम्, श्रीविजयाय ददौ ॥११९॥

આમ કહી તે રાજાએ શ્રી વિજયને શત્રુને રોકનારી અને મહાન બંધનથી પણ મુક્ત કરાવવામાં ઉત્કૃષ્ટ શક્તિવાળી સમસ્ત દુઃખને નાશ કરનારી એવી પ્રિય વિદ્યા આપી. ॥૧૧૯॥

श्रीरश्मिवेगादिकतत्तनूज–स्फूर्जद्भटानामथ पञ्चशत्या ।
युक्तस्त्रिपृष्ठप्रभवः सुतारा–माहर्तुमेवारिपुरीमयासीत् ॥१२०॥

अथ विद्याप्राप्त्यनन्तरम्, श्रीरश्मिवेगादिकानां तदाख्यानां तत्तनूजानाममिततेजःपुत्राणां स्फूर्जतां वीराणां भटानां योधानां पञ्चशत्या युक्तः त्रिपृष्ठप्रभवः श्रीविजयः सुतारां स्वप्रियामाहर्तुमा–नेतुमेव अरेः अशनिघोषस्य विद्याधरस्य चमरचञ्चाख्यां पुरीमयासीत् ॥१२०॥

ત્રિપૃષ્ઠનો પુત્ર તે શ્રીવિજય અમિતતેજના રશ્મિવેગ વગેરે પુત્ર અને બીજા બળવાન પાંચસો યોદ્ધાઓ સાથે સુતારાને લાવવાને શત્રુનગર પ્રત્યે ગયો. ॥૧૨૦॥

विज्ञाय विद्याबलिनं तमार्कि–क्षोणीशिताऽसौ हिमवन्महीध्रे ।
कान्त्यावदातान्धरणेन्द्रपादा–नग्रे जयन्तं च मुनिं महान्तम् ॥१२१॥

तेजोविनिर्धूतसहस्ररश्मिं, पुत्रं समादाय सहस्ररश्मिम् ।
ज्वालाभिधामन्यबलोपनोदां, विद्यां ययौ साधयितुं महाढ्याम् ॥१२२॥ (युग्मम्)

असौ आर्किक्षोणीशिता अर्ककीर्तिजो राजाऽमिततेजाः, तम् अशनिघोषम्, बलिनमनभिभ–वनीयं विज्ञाय, हिमवन्महीध्रे हिमाचले कान्त्या अवदातान् विशदान् धरणेन्द्रपादान्, महान्तं जयन्तं मुनिं च अग्रे पुरतः, अत्राग्रे शब्दयोगे द्वितीया चिन्त्या, उपर्यादिशब्दयोग एव तस्या दर्शनात्, अथवा अग्रे कृत्वेति शेष इति समाधेयम्, तेजसा प्रतापेन विनिर्धूतः अधःकृतः सहस्ररश्मिः सूर्यः

येन तादृशं सहस्ररश्मिं तदाख्यं पुत्रं समादाय, अन्यस्य शत्रोः बलमपनुदति नाशयतीति सा तां महाख्यामलौकिकशक्तिमतीं ज्वालाभिधां विद्यां साधयितुं ययौ ॥१२१-१२२॥

श्री अर्ककीर्ति राजाना पुत्र ते अमिततेजे ते अशनिवेगने विद्याबली जाणीने हिमवान पर्वत उपर कान्तिथी उज्जवळ एवा धरणेन्द्र अने महान मुनि जयंतनी आगळ तेजथी सूर्य करता पण चढियाता एवा सहस्ररश्मि नामना पुत्रने लईने अन्य विद्याओने पराजित करनारी एवी अत्यन्त शक्तिशाळी ज्वाळा नामनी विद्यानुं साधन करवा गमन कर्युं ॥१२१-१२२॥

स्थित्वा ततो मासिकभक्तवृत्त्या, सप्तत्रियामाप्रतिमां विधाय ।
विद्यां तयोः साधयतोरनिन्द्यां, मासो व्यतीयाय सजापमेकः ॥१२३॥

ततस्तनन्तरं मासिकभक्तवृत्त्या मासिकभक्तेन सप्तरात्रिकी सप्तसु त्रियामासु रात्रिषु प्रतिमां विधाय सजापं मन्त्रजपेन सह, अनिन्द्यां प्रशंसनीयां विद्यां साधयतोस्तयोरमिततेजः सहस्ररश्म्योः एकः मासः व्यतीयाय अशमत् ॥१२३॥

त्यां रही मासोपवासना अनुष्टानथी सात रात्रिनी प्रतिमा करीने जप पूर्वक उत्तम विद्यानुं साधन करतां ते बन्नेने एक मास वीती गयो. ॥१२३॥

स्थित्वा महीशश्चमरादिचञ्चा-पुर्या बहिः श्रीविजयोऽथ वीरः ।
आकूतविज्ञं प्रजिघाय दूतं, प्रत्यर्थिभूपाय यथार्थभाषम् ॥१२४॥

अथानन्तरं वीरः महीशः श्रीविजयः चमरादिचञ्चापुर्याः चमरचञ्चापुर्याः बहिः स्थित्वा आकूतस्य पराभिप्रायस्य विज्ञं ज्ञातारं यथार्थभाषं सत्यवादिनं दूतं प्रत्यर्थिभूपाय शत्रुभूतनृपान्तिके प्रजिघाय प्रेषितवान्, वीराणामेष एव क्रमः, न तु अकस्माद्युद्धम् ॥१२४॥

अने वीर श्रीविजय राजाए चमर चंपापुरीनी बाहर रही शत्रु राजा प्रत्ये बीजाना अभिप्रायने कळवामा समर्थ एवा यथार्थ वक्ता दूतने मोकल्यो. ॥१२४॥

गत्वाऽथ दूतस्तदुपेत्य सिंह-द्वारं नृसिंहस्य च सिंहशौर्यः ।
विज्ञापितो वेत्रभृता प्रविष्टः, सभ्यः सभामध्यमभाषतैवम् ॥१२५॥

अथानन्तरं दूतः गत्वा नृषु सिंह इव तस्य अशनिघोषस्य, तत्प्रसिद्धं सिँहद्वारमुपेत्य, स सिंहशौर्यः सिंहस्य शौर्यमिव शौर्यं यस्य स तादृशः राज्ञा विज्ञापितः सूचितः। अथ च वेत्रभृता द्वार-पालेन, प्रविष्टः प्रवेशितः अन्तर्भावितण्यर्थः, (स सिंहशौर्यः दूतः वेत्रभृता द्वारपालेन विज्ञपितः नृपाज्ञया आज्ञापितस्सन् प्रविष्टः) सभ्यः सभायां साधुः स दूतः सभायाः मध्ये इति सभामध्यमेवमभाषत ॥१२५॥

पछी ते मनुष्योमां सिंह समान पराक्रमी श्रीविजयना सिंह जेवो पराक्रमी अने सभ्य एवो ते

દૂત તે ચંપાપુરી નગરના સિંહદ્વાર પર પહોંચી દ્વારપાળ વડે રાજાને વિજ્ઞાપન પૂર્વક પ્રવેશ કરાયેલો છતો સભાની વચ્ચે આમ બોલ્યો. ॥૧૨૫॥

दूतोक्तिमाह—

अन्यस्त्रियं नैव दृशापि सन्तः, सत्यं स्पृशन्ति प्रतिपन्नपुण्याः ।
तस्याः पुनः संहरणं प्रसह्य, स्वच्छन्दपापाहरणं न किं तत् ॥१२६॥

प्रतिपन्नं स्वीकृतं प्राप्तं वा पुण्यं यैस्तादृशाः पुण्यवन्तस्सन्तः सज्जनाः सत्यमेव, अन्यस्त्रियं दृशा नेत्रेणापि अपिना करादिना पुनः किं वक्तव्यमिति सूचितम्, न स्पृशन्ति । पुनः पक्षान्तरे तस्याः अन्यस्त्रियाः प्रसह्य हठात् संहरणमपहरणं किं तत्, स्वच्छन्दं स्वैरतया पापस्याहरणं आहरण-मायोजनं उपादानं सञ्चयः न ? अपि त्ववश्यमेव । यत्र स्पर्शे पापम् तत्र प्रसह्य हरणे किमु वक्त-व्यमिति भावः ॥१२६॥

પુણ્યશાળી એવા સજ્જનો પરસ્ત્રીને આંખથી પણ સ્પર્શતા નથી. નેત્રથી જોતાં પણ નથી. આ વાત સત્ય છે. છતાં તેનું બળપૂર્વક હરણ તે સ્વચ્છંદ રીતે થાય તો પાપ સંચય થતું નથી શું ? ॥૧૨૬॥

एतां समानेतुमहो ! सुतारां, नैवोचितीमञ्चति तेऽपि चेतः ।
आनीय यद्वा जननीव सारै-र्वासोभिरभ्यर्च्य समर्पणीया ॥१२७॥

अहो इति खेदे, ते तव अपि, चेतः मनः, एतां सुतारां समानेतुम् । औचितीमौचित्यं नैवाञ्चति मन्यते, त्वमपि मनसा अनुचितमेवैतत्कर्म मन्यसे इति अनुकूलकरणोक्तिः । ननु सा आनीता, अधुना किं कर्त्तव्यमिति चेत्तत्राह—आनीय आनयनानन्तरं जननी मातेव, न तु तत्र साधारणस्त्रीबुद्धिः कर्त्तव्या 'मातृवत्परदारेष्वित्युक्ते' रिति भावः । सारैः श्रेष्ठैर्वासोभिः वसनाभरणा-दिभिः, अभ्यर्च्य सत्कृत्य, समर्पणीया भर्त्रे इति शेषः ॥१२७ ॥

ખરેખર તમારું હૃદય પણ આ સુતારાને લઈ આવવામાં ઔચિત્ય માનતું હશે નહિ, માટે આવ્યા પછી માતાની જેમ ઉત્તમ વસ્ત્રોથી સત્કાર કરી (તેના પતિને) સોંપી દેવી યોગ્ય છે. ॥૧૨૭॥

व्रीडां प्रकुर्वन्ति विनिर्मिमाणाः, क्रीडावशात्कर्म परं छलेन ।
अस्याः पतिः सर्वबलौघशाली, नीतिं समालम्ब्य बहिः स्थितोऽस्ति ॥१२८॥

परं तथा, क्रीडावशात्कुतुकात्, छलेन कपटेन प्रतारणादिना, कर्म क्रियां, विनिर्मिमाणाः कुर्वाणाः व्रीडां लज्जां प्रकुर्वन्ति, स्वमनसि मयेत्थमनुचितमाचरितमिति लज्जन्ते इत्यर्थः । ननु व्रीडायां सत्यामपि सम्प्रति नास्त्युपायः, यतोऽस्याः पतिः मृत इति कस्मै प्रदेयैषा । किञ्च यदि जीवितस्तर्हि किं न स्वगौरवरक्षणाय मम एनामाच्छिनत्तीति चेत्तत्राह— सर्वेषां बलानां हस्त्यश्वरथपादातीनामोघेन सार्धं शालते शोभते इत्येवंशीलः, सर्वबलौघशाली, अस्याः सुतारायाः पतिः श्रीविजयः, नीतिं वीरनीतिं समालम्ब्य, बहिः त्वन्नगराद्बहिः स्थितोऽस्ति, एवं च न स मृतः, न चापि तव दूरगमनप्रयासः इति वित्थायां ते सुलभोऽवसरः । पक्षान्तरे तु

तु सहसा आक्रमणं तु न वीरोचितमिति दूतेन बोधनवैफल्ये युद्धार्थं सज्जस्तिष्ठत्येवेति क्रमशः सामदाम्नोः प्रयोगः कृतः ॥१२८॥

(સજ્જનો) રમતમાં પણ છળથી કોઈ કામ કરતા લજ્જા કરે છે, પામે છે. સર્વ સૈન્ય સમૂહોથી યુક્ત આ સુતારાનો પતિ નીતિને આશ્રિને (નગરથી) બાહર રહેલો છે. ॥૧૨૮॥

तस्मै तदेतां स्वयमेव गत्वा, सत्त्वावलीढाय समर्पयस्व।
यद्वा समाचर्य विकार्यचर्यां, नादीयते मन्तुरुपागतस्य ॥१२९॥

तत्तस्मात्सदाचारानुरोधात्, स्वयमेव गत्वा, नत्वन्येन, विनयहानेरिति भावः । तस्मै सत्त्वेन तेजसा बलेन च अवलीढाय सम्पन्नाय, एतां सुतारां समर्पयस्व, यद्वा अन्यथा चेत्, विकार्यां निन्दनीयां चर्यामाचरणं परस्त्रीहरणरूपं समाचर्य विधाय उपागतस्य समीपप्राप्तस्य शत्रोः राज्ञः, तवमन्तुः क्रोधोऽपराधश्च "मन्तुः भवेदागोऽपराधयोः" इति कोश. । न नैव, आदीयते ग्रहीतुं योग्यः असमर्पणे हि स कुप्येत् स च न तव कल्याणायेति भेदप्रयोगः ॥१२९॥

તો મહા સત્ત્વશાળી એવા તેને તમે પોતે જઈ આ સુતારાને સોંપી દો કેમકે ખોટું કામ કરી પાસે આવેલા અતિથિનો અપરાધ કરાય નહિ. ॥૧૨૯॥

मानं यदि स्वीकुरुषे कदाचि-त्त्वं चाटुकारैरुपलालितः सन्।
द्रष्टा कबन्धं यदि वैकबन्धं, नूनं तदा तद्भटचन्द्रहासैः ॥१३०॥

यदि कदाचित्त्वं चाटुकारैः मिथ्याप्रियभाषणादिना स्वार्थसाधनपरायणैर्मूर्खैः उपलालितः विमोहितः सन्, मानं गर्वं स्वीकुरुषे, गर्वात् न प्रयच्छेः, तदा तस्य श्रीविजयस्य भटानां योधानां 'खड्गे तु निस्त्रिंशचन्द्रहासासिरिष्टयः' इत्यमरोक्तेः चन्द्रहासैरसिभिः कृत्वा, कबन्धं शिरोहीन-शरीरम्, 'कबन्धोऽस्त्री क्रियायुक्तमपमूर्धकलेवरमि' त्यमरः । यदि वा एकमद्वितीयं बन्धं बन्धनं द्रष्टा द्रक्ष्यसि, मरिष्यसि निगडितो वा भविष्यसि, न चान्या गतिरिति दण्डप्रयोगः ॥१३०॥

જો કદી તમે ખુશામદિઆઓની વાતમા પડીને અભિમાન કરશો તો નક્કી તે શ્રીવિજયના સુભટોના તલવારથી પોતાના માથા રહિત ધડને અથવા દૃઢ બંધનને જોશો. ॥૧૩૦॥

इत्थं सनिर्बन्धमुदीर्य दूतो, जोषं समालम्ब्य स यावदाऽऽस्ते।
तावज्जगादाशनिघोषभूपो, भ्रूभङ्गभीमं विदधत्क्रुधाऽऽस्यम् ॥१३१॥

इत्थमुक्तप्रकारेण, सनिर्बन्धं 'निर्बन्धोऽभिनिवेशः स्या' दिति हैमोक्तेः साभिनिवेशं साग्रहं सयुक्तिकम्, उदीर्योक्त्वा, यावत्, स दूतः, 'तूष्णीमर्थे जोषमि' त्यमरोक्तेः जोषं मौनं समालम्ब्य, आस्ते, तावद् अशनिघोषभूपः, क्रुधा आस्यं मुखं भ्रुवोर्भङ्गेन कौटिल्येन भीमं भयानकं विदधत्, जगादोवाच ॥१३१॥

આમ યુક્તિ અને આશયપૂર્વક બોલી તે દૂત ચૂપ થયો કે તરત જ અશનિઘોષ રાજા ક્રોધથી ભ્રુકુટિ ચડાવીને બોલ્યો ॥૧૩૧॥

अथ तद्वचनमेव विवृणोति—

बुद्धया विदग्धत्वमवेदि रे ! ते, राज्ञो मया यस्य न सन्त्यमात्याः ।
नो तेऽप्यमात्या न हितं प्रभार्ये, ब्रूयुः प्रयुज्याप्युपपत्तिजातम् ॥१३२॥

रे दूत ! ते तव राज्ञः श्रीविजयस्य विदग्धत्वं चतुरत्वं छेकत्वं 'छेको विदग्धे' इति हैमः । मया बुद्धया अवेदि ज्ञातम्. यस्य ते राज्ञः अमात्याः सचिवाः न सन्ति, यो हि राजा बुद्धिमान् तस्य सचिवा अपि बुद्धिमन्तो भवन्ति, न ते तस्येति स मूर्ख एव, नन्वनेके अमात्यास्तस्य । एवं च विपरीतबोधाख्यव्यत्र मूर्खत्वं संभाव्यते इति चेत्तत्राह—ते अमात्या अपि न, ये उपपत्तिजातं युक्तिजातं प्रयुज्य, प्रभोः स्वामिनः हितं न ब्रूयुः । ये त्वदभिमता अमात्यास्ते नामात्याः यतस्ते न हितवक्तारः, किन्तु चाटुकारा एवेति स मूर्ख एवेति भावः ॥१३२॥

અરે દૂત ! [illegible] બુદ્ધિથી [illegible] રાજાનું ચાતુર્ય જાણ્યું, કે જેને અમાત્ય જ નથી. [illegible] પણ મંત્રી ન [illegible] હિત [illegible] નથી ॥૧૩૨॥

ननु प्रभुश्चेत्कथं मूर्खः, नहि मूर्खः प्रभुर्भवतीति चेत्तत्राह—

दासेरकः स प्रभुताधिकारी, नैव प्रभुः कर्हिचनापि दूत !
यः कण्टकास्वादनलोलुपोऽपि, स्वस्यैव जानाति हिताहितं न ॥१३३॥

दूत ! स प्रभुः राजा, दासेरकः दासीपुत्रः । अथ च उष्ट्रः 'उष्ट्रो दासेरः' इति हैमः । कर्हिचनापि प्रभुतायाः अधिकारी योग्यः न । स क इत्याह—यः, कण्टकस्य स्वनामख्यातस्य अथ च क्षुद्रशत्रोः 'कण्टका स्त्रियां क्षुद्रशत्रौ' इत्यमरः । आस्वादने भक्षणे, अथ च विनाशने, लोलुपः अपि, स्वस्यैव, हिताहितं न जानाति । एवं च तव प्रभुरपि हिताहितानभिज्ञत्वाद्दासेरक एव, न तु प्रभुरित्यर्थः । अत्र च समानविशेषणमहिम्ना उष्ट्रव्यवहारप्रतीतेः समासोक्तिरलङ्कारः ॥१३३॥

હે દૂત ! તે દાસેરક—દાસી પુત્ર (ઊંટ) રાજા કદી પણ પ્રભુતાને યોગ્ય (એવા પ્રભુ) થઈ શકે નહિ. જે શત્રુનો નાશ કરવાને ઈચ્છતો (કાંટાને ખાવા ઈચ્છતો) પણ પોતાનું જ હિત અને અહિત જાણતો નથી હોતો ॥૧૩૩॥

ननु मन्त्रिणः सन्ति, ते हितवक्तारश्चेति चेत्तत्राह—

यो मन्त्रिणां नैव वचः करोति, नासौ प्रभुस्तेऽपि च मन्त्रिणो न ।
अन्योन्यवैरानुगमात्क्षयाय, राज्यस्य तौ संभवतः स्वतोऽपि ॥१३४॥

यः मन्त्रिणां वचः नैव करोति स्वीकरोति असौ प्रभुर्न, तेऽपि मन्त्रिणश्च न, ये हितवक्तारो

न । यदि हि मन्त्रिणो हितवक्तारः, तदा राजा तदुक्तं न श्रुतवानिति मन्ये, नान्यथात्रागच्छेत् । एवं च स राजा न, ते मन्त्रिणश्च न, राजा हि मन्त्रिमन्त्रानुमन्ता भवति, स चेन्न, कुतो मन्त्रिषु मन्त्रित्वमिति भावः । ननु कदाचिन्मन्त्रिमन्त्रापेक्षया बुद्धिमतो राज्ञो मन्त्रस्य सारवत्त्वं संभाव्यते, एवं च नैतावता तयो राजमन्त्रिभावोऽपैतीति चेत् तत्राह—तौ निरपेक्षौ राजमन्त्रिणौ, अन्योन्यं वैरस्य विद्वेषस्यानुगमात् प्राप्तेः, स्वतोऽपि स्वत एव, राज्यस्य क्षयाय नाशाय संभवतः कल्पतः, मन्त्रिमन्त्राग्रहणे हि मन्त्रिणो राज्ञि । (राज्ञो) विरक्तिः, ततश्च तयोर्विरोधः, ततश्च राज्यनाशः, भेदसंभावान्नृपान्तरेणेति मूलस्यैवाभावात्कस्य राजा, कस्य मन्त्री वेति भावः ॥१३४॥

જે રાજા મંત્રીની વાત માનતો નથી, તે રાજા નથી કુરાજા છે. (રાજાને સમજાવે નહિ) તે મંત્રી નથી, કુમંત્રી છે. કેમકે તે બન્ને પોતે જ પરસ્પર વૈરભાવ પામવાથી રાજ્યનો નાશ કરનારા થઈ જાય છે. ॥૧૩૪॥

ताभ्यामनालोच्य भवादृशोऽत्र, प्रस्थापितो दूत्यविधाऽनभिज्ञः ।
वक्तुं न यो वेद पुरः प्रभूणां, तस्योचितं दूत्यमिदं किमु स्यात् ॥१३५॥

ताभ्यां राजमन्त्रिभ्याम्, अनालोच्याविचार्य, भवादृशः, दूतस्य कर्म दूत्यं तस्य विधायाः प्रकारस्यानभिज्ञः, अत्र प्रस्थापितः प्रेषितः, यस्त्वं प्रभूणां पुरोऽग्रे वक्तुं न वेद जानाति, तस्य दूत्यं किमु उचितं स्यात् ? नेत्यर्थः । यदि राजमन्त्रिणौ एकमन्त्रौ स्निग्धौ च, तथापि तत्र दूतव्यवहारानभिज्ञस्य दूत्ये नियुक्तिस्तयोरल्पज्ञत्वमुद्भावयत्येवेति भावः ॥१३५॥

તે બન્ને (રાજા અને મંત્રી) એ વિચાર્યા વગર જ દૂતકર્મમાં અપટુ એવો તારા જેવો દૂત અહીં મોકલાવ્યો છે. જેને રાજાઓની આગળ બોલતા આવડતું નથી, શું તેને આ દૂતપણું ઉચિત હોય ? ન જ હોય. ॥૧૩૫॥

ननु मा भूतां बुद्धिमन्तौ तौ किन्तु पराक्रमिणौ इति रिपुसाधनसमर्थौ ततश्च तव कल्याणं नेक्षे इति चेत्तत्राह—

बुद्ध्या विनैकेन पराक्रमेण, जेतुं न शक्या रिपवः कथञ्चित् ।
गर्जन्तमम्भोदमुपर्यवेक्ष्य, स्वं किं न हन्याच्छरभो विबुद्धिः ॥१३६॥

बुद्ध्या विना एकेनासहायेन पराक्रमेण, रिपवः कथञ्चिदपि, जेतुं न शक्याः । तत्रोदाहरणमाह—विबुद्धिः बुद्धिहीनः शरभः अष्टापदः, 'शरभेऽष्टापदोऽपि' इति शिलोञ्छः । उपरि गर्जन्तम् अम्भोदं मेघमवेक्ष्य, स्वमात्मानं न हन्यात् हन्ति किम् ? अवश्यं हन्तीत्यर्थः । शरभो हि मेघं प्रति अभिमानात्कूर्दन्, खाते निपत्य म्रियते । उपरि मेघं प्रति कूर्दनं हि तस्य अज्ञताविजृम्भितम्, नान्यथा कूर्देत्, एवं च तव राजमन्त्रिणोः पराक्रमसंभवेऽपि विफल एव प्रयासो भवितेति भावः । दृष्टान्तालङ्कारः ॥१३६॥

બુદ્ધિ વિના કેવલ પરાક્રમથી કોઈ પણ રીતે શત્રુઓ જીતી શકાતા નથી. બુદ્ધિરહિત–મૂર્ખ શરભ ઉપર ગરજતા વાદળાને જોઈ (કુદકો મારતો) પોતાને જ હણતો નથી શું ? હણે જ છે. ॥૧૩૬॥

यद्यपि सन्तः दृशापि परस्त्रियं न स्पृशन्तीत्युक्तम्, तदपि न युक्तमित्याह—

अन्धा न पश्यन्ति परस्त्रियं चे-त्ते किं प्रशंसां सुधियः श्रयन्ते ।
यद्येवमेषां चतुरिन्द्रियाणां, निन्द्यं कथं स्याद्विकलेन्द्रियत्वम् ॥१३७॥

अन्धा दृष्टिहीनाश्चेद्यदि, परस्त्रियं न पश्यन्ति, तदा अन्धाः किमिति प्रश्ने, सुधियां बुद्धिमतां प्रशंसां श्रयन्ते गच्छन्ति ? न श्रयन्ते इत्यर्थः । एवं च परस्त्र्यदर्शनं न प्रशंसामूलम् न वा सत्त्वप्रयोजकमिति भावः । ननु प्रशंसां न श्रयन्ते इति कुत इति चेत् तत्राह—यद्येवं विकलेन्द्रियाः प्रशंसां श्रयन्ते चेत्तर्हि, निन्द्यं कथं स्यात् ? न स्यादित्यर्थः । चतुरिन्द्रिया हि विकलेन्द्रियत्वेनापकृष्टा गण्यन्ते, एवं चान्धस्यापि विकलेन्द्रियत्वेन निन्द्यैव न तु रूपदर्शनकृता प्रशंसा तस्य क्वापीति परस्त्रियं न पश्यन्तीति न सत्त्वप्रयोजकं, न वा परस्त्रियाः दर्शने स्पर्शने निन्दा इति भावः ॥१३७॥

જો આંધળાઓ પરસ્ત્રીને જોતા નથી, તો ડાહ્યા માણસોની પ્રશંસા મેળવે છે ? નહીં જ. જો એમ જ હોય તો પેલા ચઉરિન્દ્રિયનું વિકલેન્દ્રિયપણું કેમ વગોવાય ? ॥૧૩૭॥

ननु भवत्येवम्, पापं तु स्यादेवेति चेत्तत्राह—

नान्यस्त्रियं विक्रममन्तरेण, हर्तुं नरः क्लीब इव क्षमेत ।
नो विक्रमः पुण्यमृते कथं तत्, पापाय तस्या हरणं ब्रवीषि ॥१३८॥

नरः विक्रममन्तरेण विना, अन्यस्य स्त्रियं हर्तुं क्लीबो नपुंसक इव न क्षमेत शक्नुयात् , विक्रमः पराक्रमः, पुण्यम् ऋते विना नो भवतीति शेषः । तत्तस्माद्धेतोः, कथं तस्याः परस्त्रिया हरणं पापाय ? इति ब्रवीषि, प्रत्युत विक्रमान्यथानुपपत्त्या पुण्यस्यैव तत्रानुमानमिति भावः ॥१३८॥

પરસ્ત્રીને પરાક્રમ સિવાય હરણ કરવાને માણસ નપુંસકની જેમ જ સમર્થ થઈ શકે નહીં અને પરાક્રમ તો પુણ્ય વગર હોય જ નહીં. તો શી રીતે સુતારાનું હરણ પાપ માટે કહે છે. ॥૧૩૮॥

यदप्युक्तं नैवौचितिमञ्चतीति तदपि निःसारमित्याह—

स्त्रीरत्नमेतादृशमद्भुतं चे-दानेतुमौचित्यविपञ्चना न ।
अन्यत्र सा क्वापि वितायमाना, स्वाभावमेव प्रथयेन्न किं वा ? ॥१३८॥

एतादृशमद्भुतमलौकिककल्पम्, स्त्रीषु रत्नमिव तत् चेद्यदि आनेतुं हर्तुम्, औचित्यस्य विपञ्चना विवर्णना विचारणा न, स्यादिति शेषः । वा तदा अन्यत्र साधारणकार्ये क्वापि, वितायमाना विस्तार्यमाणा विधीयमानेति यावत् सा स्वस्य अभावम् अनौचित्यमेव, न प्रथयेत् न प्रकटयेत् किम् ? अपि तु प्रकटयेदेव । यद्यपूर्वस्य हरणे नौचित्यम् , तर्हि साधारणे कार्येऽपि अनौचित्यमेवाञ्चति इति भावः ॥१३९॥

જો આવું અદ્ભુત સ્ત્રીરત્ન હોય તો ઔચિત્યનો વિસ્તાર વિચાર કામ નહિ. જો ક્યાંક અન્યત્ર

અસ્થાને તે ઔચિત્ય વિસ્તારાય તો શું તેનો પોતાનો અભાવ ન કરી નાખે ? ॥૧૩૯॥

**यदप्युक्तं जननीवाभ्यर्च्येति तदप्यनुचितमित्याह—**

**शक्त्या समानीय निवास्यते या, सा माननीया जननीव किं स्यात् ?**
**व्रीडा वधे स्याद्विहिते छलेन, लक्ष्म्यां हृतायां न पुनः स्त्रियां वा ॥१४०॥**

या स्त्री शक्त्या बलपूर्वकं समानीय, निवास्यते गृहे रक्ष्यते, सा पराक्रमप्राप्ता किमिति प्रश्ने, जननीव माननीया स्यात् ? नेत्यर्थः नहि जननी पराक्रमात्प्राप्यते इति भावः । यदप्युक्तं व्रीडां प्रकुर्वन्तीति तदपि न सम्यगित्याह—व्रीडा, छलेन विहिते कृते वधे हनने स्यात् पराक्रमहीनत्वसंभावनासंभवादिति भावः । पुनः किन्तु, लक्ष्म्यां संपत्तौ, स्त्रियां वा हृतायां न व्रीडेत्यनेनान्वयः। तत्र पराक्रमोपयोगादिति भावः ॥१४०॥

જે શક્તિ-બળથી લાવીને ઘરમાં વસાવાય તે માતાની જેમ માન્ય કેમ હોય ? ન હોય. લજ્જા તો છળથી વધ કરવામાં થાય, લક્ષ્મીનું કે સ્ત્રીનું હરણ કરવામાં ન જ થાય ॥૧૪૦॥

**यदप्युक्तं सारैर्वासोभिः समर्पणीयेति तदति फल्गु इत्याह -**

**उद्धाररूपेण समाहृतं यच्छ्रिश्राण्यते तत्परमेव नीत्वा ।**
**नैवोत्तमर्णः स च मे न चाहं, तस्याधमर्णः कथमर्पये तत् ॥१४१॥**

यद् इत्यादि उद्धाररूपेण, सम्प्रति नीत्वा पश्चादहमेतदुद्धरिष्यामि प्रतिदास्यामि इत्येवं-रूपेण समाहृतमानीतम् । तदेव परं केवलं नीत्वा गृहीत्वा विश्राण्यते प्रतिदीयते तच्चात्र नास्तीत्याह—स श्रीविजयश्च मे मम उत्तमर्णः ऋणदाता नैव, अहं च तस्य अधमर्णः ऋणग्रहीता न, "अधमर्णो ग्राहकस्स्यादुत्तमर्णस्तु दायकः" इति हैमः । तत्तदा कथमर्पये प्रतिददामि । एवं च तव समर्पणोक्तिर्न युक्तेति भावः ॥१४१॥

ઉધાર તરીકે જે લેવાયું હોય તે જ લઈને બીજાને ફરી અપાય છે તે. (શ્રીવિજય) મારો લેણદાર નથી અને હું તેનો દેણદાર નથી, તો શી રીતે સુતારાને આપું ? ॥૧૪૧॥

**यदप्युक्तं मन्तुन आदीयते इति तदप्यस्थाने इत्याह—**

**मन्तुं स एव क्षमतेऽनुमन्तुं, द्वेधापि यस्यास्ति बलं विशालम् ।**
**आगत्य पुर्याः स बहिर्भवन्तं, प्रस्थापयन् स्वस्य बलं न वक्ति ॥१४२॥**

**मन्तुमपराधं स एव नान्यः, अनुमन्तुं ग्रहीतुं क्षमते शक्नोति । यस्य राज्ञः, द्विधा प्रकार-द्वयेनापि, बलं सैन्यं स्वशक्तिश्चेति प्रकारद्वयं विशालम् अस्ति । स तव प्रभुः पुर्याः बहिः आगत्य भवन्तं दूतं प्रस्थापयन् प्रेषयन् । स्वस्य बलं सामर्थ्यं सैन्यं वा न वक्ति । एतावतैव तस्य बलहीनत्वं प्रकटितं भवति । अन्यथा तदपि ब्रूयादिति भावः ॥१४२॥**

અપરાધ તો તે જ માની શકે, જેનું બળ બન્ને રીતે (સેના રૂપે અને પોતાના પરાક્રમ રૂપે) વિશાળ મોટું હોય. (પણ) તે (શ્રીવિજય) નગરથી બહાર આવીને તને મોકલતો પોતાનું બળ કહેતો નથી. ॥૧૪૨॥

यदपि मानं यदि स्वीकुरुषे इत्यादिना मानो न कर्त्तव्य इत्युपादेशि तदपि बालविलसितमित्याह—

स्वाभाविको यस्य न चास्ति मानः, संमानभागी स कथं जनानाम् ।
अध्याहृतः भंगरसीम्नि भट्टै—वीर्यं विधत्तां किमु कातरस्य ॥१४३॥

यस्य पुरुषस्य च स्वाभाविकः, मानः अभिमानः, स्वस्मिन्नास्ति स जनानां सन्मानस्य भागी कथं स्यात् ? न स्यादित्यर्थः । मानधना एव जनैरपि सन्मान्यन्ते न तु तद्रहिता—तिरस्कृता इति भावः । यदप्युक्तं—बलौघशालीति तदपि नाद्वेगायेत्याह—कातरस्य भोगाः अध्याहृतैः आरोपितैः न न तु वास्तवैः, भट्टैः योधैः सङ्गरसीम्नि रणभूमौ, किमु वीर्यं विधत्ताम् ? नैव विदधीतेत्यर्थः । ये हि यथार्थतः शूरास्त एव वीर्यं विदधति. कातरस्य तु भटाः कातरा एव स्युरिति न तदुद्वेगकारणम् इति भावः ॥१३४॥

જેને સ્વાભાવિક અભિમાન ન હોય તે લોકોનું સંમાન કેમ મેળવે ? ન મેળવે અને કાયર રાજાના ભેગા કરાયેલા યોદ્ધાઓ રણ મધ્યે શું પરાક્રમ કરી શકે ? ॥૧૪૩॥

अथोरसंहरति—

तथाहि दूताधम ! यावदेते, भृत्या ददन्ते न तवार्धचन्द्रम् ।
त्वद्वाक्यनुन्नस्त्वरितं स तेऽपि, स्वामी समायात्वथवा प्रयातु ॥१४४॥

दूतेषु अधम ! निकृष्ट ! तत्तस्माद्धेतोः याहि व्रज, यावत् एते मम भृत्याः तव अर्धचन्द्रं गलहस्तं न ददन्ते । त्वद्वाक्येन नुन्नः प्रेरितः, स समायातः, तव स्वामी श्रीविजयोऽपि त्वरितं शीघ्रं समायातु, युद्धायागच्छतु । अथवा प्रयातु भयात्पलायताम् । उभयत्र मदिष्टसाधनमिति भावः ॥१४४॥

માટે હે અધમ દૂત ! આ સેવકો તને અર્ધચંદ્ર—ગલહસ્ત દે નહિ તે પહેલાં ચાલ્યો જા. અને તારા વાક્યોથી ચઢાવાયેલો તે તારો સ્વામી જલદી આવે અથવા જતો રહે ॥૧૪૪॥

इत्यूर्जितां तस्य निशम्य वाचं, विद्याधरेन्द्रस्य गतः स दूतः ।
आख्यादशेषं निजनायकाय, स्वर्नायकं तर्जयते स्वधाम्ने ॥१४५॥

इतीत्थमूर्जितां बलवतीं वाचं तस्य विद्याधरस्याशनिघोषस्य निशम्य गतः स दूतः, स्वधाम्ना प्रभावेण । स्वर्नायकमिन्द्रं तर्जयते भर्त्सयते । स्वनायकाय श्रीविजयाय अशेषं समस्तं वृत्तमाख्यात् ॥ १४५॥

આમ તે વિદ્યાધરેન્દ્ર (અશનિઘોષ)ની જોરદાર વાણી સાંભળી તે દૂત ચાલ્યો ગયો. તે પોતાના તેજથી ઇન્દ્રને પણ ત્રાસ આપતા પોતાના રાજાને બધું કહ્યું ॥૧૪૫॥

अथ तस्य युद्धोद्योगमाह—

आदेशतः श्रीविजयस्य राज्ञ–स्तूर्याण्यवाद्यन्त रणोन्मुखानि ।
यन्नादमाकर्ण्य भटाः समग्राः, सन्नह्य सन्नह्य समागमंश्च ॥ १४६ ॥

श्रीविजयस्य राज्ञः आदेशतः रणस्य उन्मुखानि उन्मुखतापादकानि तूर्याणि वाद्यानि अवाद्यन्त, येषां तूर्याणां नादं शब्दमाकर्ण्य, समग्राः समस्ताः भटाः सन्नह्य सन्नह्य सज्जीभूय, वीप्सायां द्विरुक्तिः। समागमंश्च ॥ १४६ ॥

શ્રીવિજય રાજાની આજ્ઞાથી રણ સૂચવનારાં વાદ્યો વગાડયા, જેના અવાજ સાંભળી બધા યોદ્ધાઓ તૈયાર થઈ થઈને આવવા લાગ્યા. ॥૧૪૬॥

संग्रामतूर्येषु नदत्सु हर्षा–द्वीराः दधुः कण्टकपेटकानि ।
तैरेव तत्कङ्कटबन्धनानि, त्रुट्यन्ति भूयस्समयोजयंश्च ॥१४७॥

संग्रामस्य तूर्येषु नदत्सु सत्सु वीराः हर्षात् । वीराणां हि संग्राम आनन्दाय कातराणां क्लेशायेति भावः । कण्टकपेटकानि, कण्टकानां रोमाञ्चानां पेटकानि वृन्दानि "गणः पेटकं वृन्दम्" इति हैमः । रोमाञ्चसमूहमित्यर्थः । "रोमाञ्चः कण्टकः रोमविकारः" इति हैमः । दधुः । एतेनात्युत्साहः युद्धानुरागश्चोक्तः । तत्तस्माद्धेतोः रोमाञ्चेन हर्षेण वा शरीरस्थौल्याद्धेतोः त्रुट्यन्ति भज्यन्ते भज्यमानानि कङ्कटस्य कवचस्य "कङ्कटोऽजगरः कवचः" इति हैमः । बन्धनानि तैः हर्षैः हर्षपूर्वकमित्यर्थः । भूयः पुनरेव, समयोजयन् संहितवन्तश्च ॥१४७॥

રણવાદ્યો વાગતે છતે હર્ષથી વીરો રોમાંચિત થવા લાગ્યા. તેને (રોમાંચ) લીધે જ તેના કવચના બંધનો તૂટી જતા હતાં ને ફરી તેઓ તેને જોડતા હતા. ॥૧૪૭॥

अथाशनिघोषस्य युद्धोद्योगमाह—

विद्याधरेन्द्रोऽपि रणाय सज्जां–स्तानश्वघोषप्रमुखान् स्वपुत्रान् ।
प्रस्थापयामास चमूसमूहैः, सार्द्धं प्रतिद्वन्द्विजनान् विजेतुम् ॥१४८॥

विद्याधरेन्द्रः अशनिघोषः अपि रणाय युद्धाय सज्जान् सन्नद्धान् अश्वघोषः प्रमुखं येषां तान् स्वपुत्रान् चमूसमूहैः सेनासमुदायैः सार्द्धं प्रतिद्वन्द्विनः प्रतिपक्षाश्च ते जनाश्च तान् शत्रून् विजेतुं प्रस्थापयामास प्रैषेष ॥१४८॥

વિદ્યાધરેન્દ્ર અશનિઘોષે પણ યુદ્ધને માટે સજ્જિત એવા પોતાના અશ્વઘોષ વિગેરે પુત્રોને શત્રુ લોકોને જીતવાને સેના સમૂહો સાથે મોકલ્યા. ॥૧૪૮॥

अथ रणभूमिस्थितिमाह—

सैन्यद्वयान्तर्गतमृत्यवर्ग-यष्ट्यग्रगाढाहतवाद्यनादैः ।
पार्श्वेऽपि वाचं प्रणिगद्यमानां, कस्यापि शुश्राव न कश्चनापि ॥१४९॥

सैन्यद्वयस्य श्रीविजयाशनिघोषयोः सैन्ययोः अन्तर्गतेन भृत्यवर्गेण वादकेन यष्ट्यग्रेण गाढं यथा स्यात्तथा आहतानां वादितानां वाद्यानां नादैः हेतुभिः, पार्श्वेऽतिसमीपेऽपि प्रणिगद्यमानामुच्चार्यमाणां कस्यापि जनस्य वाचं कश्चनापि जनः न शुश्राव । वाद्यशब्दैर्जनवाक् तिरोहितेति वाद्यशब्दातिशय उक्तः ॥१४९॥

બન્ને સેનાઓની વચ્ચે રહેલા સુભટોની લાકડીના અગ્રભાગથી જોરથી આઘાત પામેલા વાજિંત્રોના ઘોષથી કોઈ પણ પાસે રહેલા, પરસ્પર બોલાતી વાણી સાંભળી શકતા ન હતા. ॥૧૪૯॥

रङ्गत्तुरङ्गक्षुरसन्निपात-क्षुण्णक्षमामण्डलरेणुपूरैः ।
आच्छादिते व्योमनि पुष्पदन्तौ, शङ्के पलाय्यैव गतौ तदा तौ ॥१५०॥

रङ्गतां धावतां तुरङ्गानामश्वानां क्षुराणां खुराणां सन्निपातेनाघातेन क्षुण्णस्य संचूर्णितस्य क्षमामण्डलस्य पृथिव्याः रेणूनां धूलीनां पूरैः उत्थानप्रवाहैः कृत्वा, व्योमनि आकाशे आच्छादिते सति, तदा तस्मिन्नवसरे, तौ तेजःप्रसिद्धौ, पुष्पदन्तौ सूर्याचन्द्रमसौ "एकयोक्त्या पुष्पदन्तौ दिवाकरनिशाकरा" वित्यमरः । पलाय्यैव भयात्प्रध्वस्यैव गतौ तिरोहितौ शङ्के उत्प्रेक्षे । अश्वखुरोत्क्षिप्तरजसा मेघेनेव सूर्यचन्द्रौ तिरोहिताबित्यर्थः ॥१५०॥

તે વખતે કૂદતા એવા ઘોડાઓની ખરી પડવાથી ખોદાયેલી પૃથ્વીની ધૂળ ઉડવાથી આકાશ આચ્છાદિત થયે છતે એમ લાગતું હતું કે સૂર્ય અને ચન્દ્ર જાણે નાશીને ક્યાંક જતા રહ્યા છે. ॥૧૫૦॥

अश्वक्षुरोत्खातरजःप्रचारैः, स्फारेऽन्धकारे यदि चन्द्रहासैः ।
ओजस्विनां पाणिषु विस्फुरद्भिः, प्रापे तदानीमपि सान्वयत्वम् ॥१५१॥

अश्वानां क्षुरैः उत्खातानामुत्क्षिप्तानां रजसां प्रचारैः व्यापनैः कृत्वा, स्फारे गाढेऽन्धकारे, यदिः चार्थः, ओजस्विनां बलवतां पाणिषु करेषु विस्फुरद्भिः भासमानैः चन्द्रहासैरसिभिः, तदानीं गाढान्धकारकालेऽपि अन्वयेन चन्द्रस्य हास इत्यर्थेन सह सान्वयः तस्य भावस्तत्त्वम्, प्रापे "हसः हासो हास्यं" चेत्यमरः । अन्धकारेऽपि विस्फुरणं तस्य चन्द्रस्य हासत्वादेवेति भावः ( हास्यरूपमेवेति भावः ) ॥१५१॥

જોકે તે સમયે જ ઘોડાઓની ખરીઓથી ઉખડેલી ધૂળ ફેલાવાથી વિશાળ અંધકારમાં બળવાન યોદ્ધાઓના હાથોમાં ચળકતા ચંદ્રહાસો (તલવારો) એ (ચંદ્રનો હાસ એવું) યથાર્થપણાને પામ્યું ॥૧૫૧॥

सेनाचराणामवलेपभाजा-मेतादृशोऽजायत सम्परायः ।
रक्तोदसिन्धुः प्रचचार यस्मा-दुत्साहचन्द्रोदयवर्धमानः ॥१५२॥

अवलेपं गर्वं भजन्तीति ते तादृशामभिमानिनां सेनाचराणां सैन्यानाम्, एतादृशः सम्परायः युद्धमजायत, 'अथापदि युद्धायत्योः सम्परायः' इत्यमरः। यस्मात् उत्साह स्थेयान् संरम्भः, न त्वाधा-तादिना पलायनम्, स एव चन्द्रः, तस्योदयेन वर्धमानः, रक्तस्योदसिन्धुः सागरः प्रचचार प्रववृधे। वीराणां हि रक्तादिदर्शनेन युद्धोत्साहो वर्धते, ततश्चाधिकप्रहारादिनातिशयेन रक्तपात इति तत्सिन्धु-रेव प्रववृधे इत्यर्थः। अत्र रक्तस्योदकत्वेन रूपणेनैवोत्साहस्य चन्द्रत्वेन रूपणं संगच्छते इति परम्प-रितरूपकालङ्कारः ॥१५२॥

ગર્વિષ્ઠ એવા સૈન્યોના ઉત્સાહ રૂપી ચંદ્રના ઉદયથી પ્રોઢનો પ્રવર્તો—એવું યુદ્ધ થયું કે જેથી—લોહીનો સમુદ્ર જ જાણે પ્રગટ થયો ના હોય. ॥૧૫૨॥

अथ रक्तोदसिन्धुमेव पञ्चभिर्विशिनष्टि—

यो वीरविस्फारितखड्गयष्ट्या, विच्छिन्नकुम्भस्थलकुम्भिदेहात् ।
संजातयाऽसृग्भिरुदित्वरौघैः, रक्तोदया वल्लभया परीतः ॥१५३॥

यः रक्तोदसिन्धुः, वीरेण विस्फारितया प्रक्षिप्तया, यद्वा वीराणां विस्फारितया विशालया, खड्गयष्ट्या कृपाणेन विच्छिन्नौ भिन्नौ कुम्भस्थलौ येषां तादृशानां कुम्भिनां गजानां देहात् उदित्वरः निर्गत्वरः औघः प्रवाहः येषां तैः तादृशैः असृग्भिः शोणितैः, सञ्जातया उद्भूतया रक्तमुदकं यस्या-स्तया नद्या, वल्लभया प्रियया परीतः संगतः आसीदिति शेषः। अब्धेः सरित्पतित्वादेवमुक्तिरिति बोध्यम् ॥१५३॥

જે રક્તસમુદ્ર વીરાએ ચલાવેલા તલવારથી કપાયેલા મસ્તક વાળા હાથીઓના દેહથી નીકળતા લોહીના પ્રવાહોથી ઉત્પન્ન થયેલી લોહીરૂપ જળવાળી રક્તોદ નદી નામે પ્રિયા સાથે જોડાયો. ૧૫૩॥

वीरैर्विभिन्नद्विपराजकुम्भ—निष्पातिमुक्ताफलमण्डलानि ।
यस्मिन्नभूवन् बहुशो विभान्ति, धात्रीफलानीव समुज्ज्वलानि ॥१५४॥

यस्मिन् रक्तोदसिन्धौ, समुज्ज्वलानि भास्वराणि, बहुशः बहुसंख्यकानि, वीरैः, विभिन्नेभ्यः विदारितेभ्यः द्विपराजानां गजेन्द्राणां कुम्भेभ्यः निष्पातीनि पतनशीलानि मुक्ताफलानां गजमौक्तिकानां मण्डलानि "मौक्तिकं मुक्ता मुक्ताफलम्" इति हैमः। धात्र्या आमलक्या तस्याः फलानीव विभान्ति शोभमानान्यभूवन्, गजमुक्तानां रक्ते पातेन धात्रीफलवर्णतेति भावः। तत्र युद्धे गजाः समौक्तिका आसन्निति सैन्यसंभारातिशय उक्तः। उपमालङ्कारः ॥१५४॥

જે લોહિત સમુદ્રમાં વીરો વડે કપાયેલા ગજરાજોના મસ્તકથી પડતા અત્યંત ઉજ્જવળ અને ધાત્રીફલ જેવા મુક્તાફળના સમૂહો બહુ જ શોભતા હતા. ॥૧૫૪॥

नक्रन्ति गात्राणि मतङ्गजानां, यस्मिन् भटैः खड्गविदारितानाम् ।
कूर्मन्ति विच्छिन्नचतुष्क्रमाणां, यस्मिंश्च तान्येव सुरङ्गमाणाम् ॥१५५॥

यस्मिन् रक्तोदसिन्धौ भटैः खड्गैः विदारितानां मतङ्गजानां गात्राणि शरीराणि नक्रो ग्राहः। स इवाचरन्ति नक्रन्ति, तथा यस्मिन् रक्तोदसिन्धौ च, विच्छिन्नाः कर्त्तिताः चत्वारः क्रमाः चरणाः येषां तेषां तुरङ्गमाणां तानि शरीराण्येव कूर्मं इवाचरन्ति। (लुप्तोपमालङ्कारः) ॥१५५॥

જે લાલસમુદ્રમાં, વીરો વડે તલવારથી કપાયેલા હાથીઓના સૂંઢ, પગ વગેરે અવયવો મગર જેવા લાગતા હતા. તથા કપાયેલા ચારે પગવાળા ઘોડાઓના અવયવો કાચબા જેવા લાગતા હતા ॥૧૫૫॥

स्रस्तानि लूनानि महाभटानां, यस्मिन् शिरांसि प्रतिवीरखड्गैः।
शङ्खन्ति चायोधनरञ्जितान्त–र्विद्याधरक्षिप्तसुमोत्कराणि ॥१५६॥

यस्मिन् रक्तोदसिन्धौ, प्रतिवीराणां प्रतिभटानां खड्गैः लूनानि छिन्नानि स्रस्तानि पतितानि च, महाभटानां शिरांसि, आयोधनेन युद्धेन रञ्जितं हृष्टमन्तर्हृदयं येषां तैस्तादृशैः विद्याधरैः आक्षिप्तानां वीरपूजार्थं वृष्टानां सुमानां पुष्पाणामुत्कराः आघाः येषु तादृशानि सन्ति। तानि शिरांसि शङ्ख इवाचरन्ति शङ्खन्ति ॥ १५६॥

જે લોહીના સમુદ્રમાં સામા વીરો વડે ખડ્ગોથી કપાયેલા અને પડી ગયેલા મહાન યોદ્ધાઓના યુદ્ધથી ખુશ કરાયેલા મનવાળા વિદ્યાધરોએ ચઢાવેલ ફૂલના સમૂહોથી યુક્ત મસ્તકો શંખ જેવા લાગતા હતા. ॥૧૫૬॥

भूमीशितुः श्रीविजयस्य सैन्य–धानुष्कधन्वध्वनिमात्रतोऽपि।
काका इवाथ प्रतिभूपपुत्रा, नेशुः समस्ता अपि ते विहस्ताः ॥१५७॥

अथानन्तरम्, भूमीशितुः राज्ञः श्रीविजयस्य सैन्येषु धानुष्काणां धनुर्धराणां धन्वनां चापानां ध्वनिमात्रतः शब्दश्रवणमात्रत एव अपेरेवार्थत्वात् प्रहारात्तु दूरे। विहस्ताः व्याकुलाः सन्तः समस्ता अपि ते प्रतिभूपस्य पुत्राः अशनिघोषात्मजाः, काका इव। यथा काकाः सामान्यशब्दमात्र–श्रवणे (णेनापि) अपि नश्यन्ति, तथा नेशुः पलायामासुः ॥१५७॥

રાજા શ્રીવિજયના ધનુધારી સૈન્યોનાં ધનુષ્યના અવાજ માત્રથી પણ તે બધાં જ શત્રુરાજાના પુત્રો વ્યાકુળ થઈ કાગડાની જેમ નાસી ગયા. ॥૧૫૭॥

अथाशनिघोषप्रवृत्तिमाह—

श्रुत्वा प्रनष्टांस्तनयांस्तदैव, विद्याधरेशोऽशनिघोषकोऽपि।
पाणौ समादाय गदां रणाय, विद्वेषिसैन्याभिमुखं ससार ॥१५८॥

तनयान् स्वपुत्रान् प्रनष्टान् युद्धभूमेः पलायितान् श्रुत्वा, विद्याधरेशः अशनिघोषकः अपि. तदा तत्कालमेव, एतेन युद्धाभिनिवेशः सूचितः। पाणौ हस्ते गदां तदाख्यमस्त्रं समादाय, रणाय युद्धाय विद्वेषिणः शत्रोः सैन्यस्य अभिमुखं संमुखं ससार प्रतस्थौ ॥१५८॥

વિદ્યાધરેન્દ્ર અશનિઘોષ પણ પુત્રને નાસેલા સાંભળતાની સાથે જ હાથમાં ગદા લઈને યુદ્ધ માટે

શત્રુસૈન્યની સામે આવ્યો. ॥૧૫૮॥

अथ तस्य पराक्रममाह—

तस्य प्रहारैः परुषैर्गदाया, नद्या इवाऽगाः सलिलप्रवाहैः ।
भग्ना नरेन्द्रामिततेजसोऽपि, सम्बद्धमूला अपि ते कुमाराः ॥१५९॥

तस्याशनिघोषस्य गदायाः परुषैः कठोरैः प्रहारैः, नद्याः सलिलस्य प्रवाहैः वेगैः अगा वृक्षा इव । नरेन्द्रामिततेजसः अपि, सम्बद्धं व्यूहबद्धं मूलं सैन्यं येषां ते तादृशा अपि कुमाराः भग्नाः विदीर्णाः । अशनिघोषगदाघातमसहमानाः पलायिता इत्यर्थः । (उपमालङ्कारः) ॥१५९॥

તે અશનિઘોષની ગદાના કઠોર પ્રહારોથી, નદીના પાણીના પ્રવાહોથી મૂલથી ઉખેલા એવા વૃક્ષની જેમ પગ જમાવી ચુકેલા રાજા અમિતતેજના તે કુમારો (પુત્રો) પણ ભાગી ગયા. ॥૧૫૯॥

अथ श्रीविजयप्रवृत्तिमाह—

दृष्ट्वा पराभूतपराक्रमांस्तान्, योद्धुं स्वयं श्रीविजयो डुढौके ।
सेनाचरान् स्वस्य पलायमानान्, धीरैर्वचोभिर्विनिवर्त्तयंश्च ॥१६०॥

पराभूतः भग्नः पराक्रमः येषां तान् तादृशान् पराजितान् पलायितांश्च तान् कुमारान् दृष्ट्वा श्रीविजयः चोऽप्यर्थे स्वस्य पलायमानान् पलायितान् सेनाचरान् धीरैः धैर्यजनकैः वचोभिः विनिवर्त्तयन् स्वयं योद्धुं डुढौके प्रवृत्तवान् ॥१६०॥

શ્રીવિજય રાજા તેઓને ભાગી ગયેલા પરાક્રમ વાળા જોઈ અને પોતાના સૈન્યને નાશતું જોઈ ધૈર્યના વચનથી તેને પાછું ફરવાનું કહેને, પોતે યુદ્ધ કરવા તત્પર થયો. ॥૧૬૦॥

अथ श्रीविजयस्य तदवधीरणमाह—

नैवापराद्धं भवतो ममापि, सेनाचरैरेभिरतो हतैः किम् ।
त्वं मे कलत्रापहृतेर्विरोधी, त्वं हन्तुमिच्छुस्तव चाहमस्मि ॥१६१॥

भवतः तव ममापि च, सेनाचरैः नैव अपराद्धम् अपराधः कृतः । अतस्ते निर्दोषाः, अतोऽस्मात्कारणात्, एभिः हतैः विनाशितैः किम् ? न किमपि लभ्यमित्येषां हननमनुचितमित्यर्थः । ननु तर्हि को हन्तव्य इति चेत्तत्राह—त्वं कलत्रस्य अपहृतेः कारणात् मे मम विरोधी शत्रुः । तव चाहं विरोधीति सम्बध्यते । अतः त्वां हन्तुमिच्छुरस्मि ॥१६१॥

तस्मादरे ! रेऽशनिघोष ! युद्धं, कार्यं त्वयाऽमा मयका च नान्यैः ।
इत्युद्धतध्वानमसौ निवार्या-शेषान् भटान् स्वानपि तेन तस्य ॥१६॥

श्रीपोतनक्ष्मामघवा निरुद्धं, प्राक्रंस्त तेनाशनिघोषकेण ।
तिष्ठन् क्षणं व्योमनि सैनिकानां, विस्माययन् मानसमात्तहर्षम् ॥१६३॥

अरे ! रे ! अशनिघोष ! तस्मादावयोर्मिथो विरोधित्वाद्धेतोः, त्वया मयका मया समा सह युद्धं कार्यं, न चान्यैः इतीत्थम् उद्धतम् (तेन) अत्युच्चं ध्वानं शब्दं यथा स्यात्तथा, असौ श्रीविजयः तस्याशनिघोषस्य स्वान् स्वीयांश्च अशेषान् सैनिकान्, तेन अपिना स्वेन च युद्धान् निवार्य । श्रीपोतनक्ष्मायाः मघवा इन्द्रः श्रीविजयः, व्योमनि आकाशे क्षणं तिष्ठन्, आत्तहर्षं प्राप्तहर्षं सैनिकानां मानसं विस्मापयन् तेनाशनिघोषकेण नियुद्धं बाहुयुद्धं "नियुद्धं बाहुयुद्धे" इत्यमरः । प्राक्रंस्त प्रारब्धवान् ॥१६२—१६३॥

આ સૈન્યોએ તમારો ન અમારો પણ અપરાધ કર્યો નથી.

તેથી તેઓને હણવાથી સર્યું.

મારી સ્ત્રીનું હરણ કરવાથી તું મારો વિરોધી છે. તેથી હું તને હણવા ઇચ્છું છું અને તમારો હું વિરોધી છું. માટે રે અશનિઘોષ તારે મારી સાથે યુદ્ધ કરવું જોઇએ, બીજા સાથે નહિ. એમ ઊંચા અવાજે પોતાનાં અને અશનિઘોષના પણ બધા યોદ્ધાઓને નિવારી પોતનપુરેન્દ્ર તે શ્રીવિજય આકાશમાં ક્ષણવાર રહેતો સૈનિકોના પ્રસન્ન મનને વિસ્મય પમાડતો તે અશનિઘોષ સાથે યુદ્ધ કરવા લાગ્યો. ॥૧૬૧–૧૬૨–૧૬૩॥

उत्थाप्य तं कन्दुकवाद्विपक्षं, दोर्भ्यामुभाभ्यां तुलयन्निवाभात् ।
श्रीमत्त्रिपृष्ठप्रभवः सुतारां, व्यावर्तयिष्यन् किमिवाप सख्यम् ॥१६४॥

तं विपक्ष शत्रुमशनिघोषम्, उभाभ्यां दोर्भ्यां बाहुभ्यां कन्दुकवदुत्थाप्य तुलयन्निव, अभात् शुशुभे, तत्रोत्प्रेक्षते—श्रीमत्त्रिपृष्ठप्रभवः श्रीविजयः, सुतारां तन्नाम्नीं स्वस्त्रियं व्यावर्त्तयिष्यन् प्रत्यावर्त्तयिष्यन्, सख्यं मैत्रीमिव, अर्थादशनिघोषेण, आप प्राप किम् ? मित्रेहि परस्परं मिलिते हर्षातिरेकाद्बाहुभ्यामुत्तोलयतः इति भावः ॥१६४॥

શ્રીમાન ત્રિપૃષ્ઠનો પુત્ર શ્રીવિજય તે શત્રુને દડાની જેમ ઊંચકી બન્ને બાહુઓથી તોલતો એમ લાગતો હતો કે સુતારાને પાછી વાળવા જાણે મિત્રતાને પામ્યો હોય. ॥૧૬૪॥

राज्ञाऽथ स श्रीविजयेन रोषात्, कौक्षेयकेण प्रसभं प्रहृत्य ।
द्वेधा प्रचक्रेऽशनिघोष एतत्, खण्डद्वयेनाशनिघोषयुग्मम् ॥१६५॥

अथानन्तरं राजा श्रीविजयेन रोषात्क्रोधात् कौक्षेयकेणासिना "कौक्षेयको मण्डलाग्रः करवालः" इत्यमरः । प्रसभं बलात्प्रहृत्य, अशनिघोषः द्वेधा प्रचक्रे द्विखण्डः कृतः । एतत्खण्डद्वयेनाशनिघोषयुग्मम् जातमिति शेषः ॥१६५॥

પછી તે શ્રીવિજય રાજાએ ક્રોધથી તલવાર વડે બલપૂર્વક પ્રહાર કરી અશનિઘોષના બે ટુકડા કરી દીધા. પણ અશનિઘોષ તે બે ખંડથી બે અશનિઘોષ થઈ ગયા. ॥૧૬૫॥

जज्ञे विलूनं द्विगुणं पुनस्त—द्रुम्भामहास्तम्भवदेकमेव ।
यद्यच्छिरः छिन्नमहुष्य तेन, तत्तज्जगाहे द्विगुणत्वमाशु ॥१६६॥

तदेकमेवाशनिघोषशरीरम्, रम्भायाः कदल्याः महास्तम्भवत्, यथा रम्भास्तम्भः । कृत्तः पुनः प्ररोहति तथेत्यर्थः । पुनः विलूनं छिन्नं द्विगुणं जज्ञे । अमुष्याशनिघोषस्य, यद्यत् शिरः तेन श्रीविजयेन छिन्नं तत्तच्छिरः आशु द्विगुणत्वं जगाहे । एतेनाशनिघोषस्य मायाप्राबल्य-मुक्तम् ॥ १६६ ॥

ફરી એક અશનિઘોષ કપાયેલો કેળનાં મોટા થાંભલાની જેમ બમણો થઈ ગયો. ને શ્રીવિજયે તે અશનિઘોષનું જે જે માથું કાપ્યું તે તે તરત જ બમણું થઈ ગયું. ॥૧૬૬॥

विच्छिद्य विच्छिद्य शिरांसि तस्य, श्रान्तः सुतारादयितः स यावत् ।
विद्यां प्रसाध्यामिततेजसाऽपि, तावत्समागम्यत सान्वयेन ॥१६७॥

यावत्स श्रीविजयः सुतारायाः दयितः पतिः, तस्याशनिघोषस्य शिरांसि विच्छिद्य विच्छिद्य छेदं छेदं कृत्वा श्रान्तः, तावत् विद्यां प्रसाध्य, अमिततेजसाऽपि सान्वयेन सपरिवारेण समागम्यत आगतम ॥ १६७ ॥

તે સુતારાના પતિ શ્રીવિજય તેના માથાં કાપી જેટલામાં થાકવા લાગ્યા તેટલામાં અમિતતેજ પણ વિદ્યાને સાધીને પરિવાર સાથે આવી પહોંચ્યો. ॥૧૬૭॥

आयान्तमालोक्य विलोकनीयं, सौन्दर्यलक्ष्म्याऽमिततेजसं तम् ।
सर्वे विपक्षाः प्रपलाय्य जग्मु-र्घूका इवादित्यमुदीयमानम् ॥१६८॥

सौन्दर्यस्य लक्ष्म्या समृद्ध्या कृत्वा विलोकनीयं दर्शनीयं तममिततेजसमायान्तमालोक्य, सर्वे विपक्षाः विपक्षपक्षाः उदीयमानमादित्यं सूर्यं विलोक्य घूकाः उलूकाः इव, प्रपलाय्य जग्मुः । ( उपमालङ्कारः ) ॥१६८॥

સૌંદર્યની શોભાથી દેખાવડા એવા તે અમિતતેજને આવતો જોઈ બધા શત્રુસૈન્યો સૂર્યને ઉદય પામતા જોઈ ઘૂવડો જેમ ભાગીને જતા રહ્યા. ॥૧૬૮॥

विद्वेषिपक्षांश्च पलायमाना-नेतान्मुचो मैव कथञ्चनेति ।
विद्या महाढ्याऽमिततेजसोचे, ज्वालाभिधाना ज्वलितारिवंशा ॥१६९॥

पलायमानान् एतान् विद्वेषिणः पक्षान् पक्षकरान् कथंचन, मैव मुचोऽत्याक्षीरिति इत्थम् अमिततेजसा, महाढ्या अलौकिकसामर्थ्यसम्पन्ना, ज्वलितः दग्धः अरीणां शत्रूणां वंशः यया सा तादृशी शत्रुनाशिनी, ज्वालाभिधाना विद्योचे ॥१६९॥

ત્યારે અમિતતેજે મહાશક્તિશાળી શત્રુઓના સમૂહોને બાળી નાખનારી એવી જ્વાળા નામે વિદ્યાને કીધું કે શત્રુપક્ષના આ ભાગતા સૈન્યોને કોઈ પણ રીતે છોડીશ નહિ. ॥૧૬૯॥

व्यामोहितास्तेऽपि तया स्वशक्त्या, प्रत्यर्थिवारा अपि दुर्निवाराः ।
जग्मुः शरण्यं शरणं शरारुं, सर्वेऽपि मत्वाऽमिततेजसं तम् ॥१७०॥

तथा ज्वालाख्यया विद्यया स्वशक्त्या, दुर्निवारा दुर्जेया अपि प्रत्यर्थिनः वाराः सैन्यानि (प्रत्यर्थिनः विरोधिनः वाराः निकराः "प्रकरौघ-वार-निकर-व्यूहाः" इति हैमः) व्यामोहिताः नष्टोत्साहाः कृताः सन्तः, सर्वेऽपि, शरारुं निग्रहीतारमपि, शरणे प्रतिपन्ने साधुं शरण्यम् अमिततेजसं शरणं रक्षकं जग्मुः, शरणं स्वीचक्रुरित्यर्थः । ॥१७०॥

(પછી) તે વિદ્યાવડે પોતાની શક્તિથી મુંઝવણમા નાખી દેવાયેલા તે દુઃખે નિવારી શકાય એવા પણ શત્રુનાં સૈન્યો અધાય બાજુવળી અમિતતેજને શરણાગત રક્ષક માની તેના શરણે ગયા. ॥૧૭૦॥

तेषु प्रनष्टोऽशनिघोष एक-स्तं वीक्ष्य वैरिक्षयचण्डरोषम् ।
विद्याऽनवद्यापि तमन्वियाय, सा तन्नियुक्ता तमथो ग्रहीतुम् ॥१७१॥

तममिततेजसं वैरिणः क्षये नाशे चण्डोऽत्युग्रो रोषो यस्य तं तादृशं वीक्ष्य, तेषु सैन्येषु एकः अशनिघोषः, प्रनष्टः पलायितवान । अथो अनन्तरम्, तमशनिघोषं ग्रहीतुम्, तेनामिततेजसा नियुक्ताऽऽदिष्टा अनवद्योत्तमा विद्या ज्वालाभिधाना, तमशनिघोषमप्यन्वियायानुससार ॥१७१॥

તે અમિતતેજને શત્રુનો નાશ કરવાને ઉગ્ર ક્રોધવાળો જોઈ તે સૈન્યોમાંનો એક અશનિઘોષ ભાગી ગયો. પછી તે અશનિઘોષને પકડવા માટે અમિતતેજ વડે પ્રેરિત પ્રશંસનીય એવી જ્વાલા વિદ્યા તે અશનિ-ઘોષની પાછળ પડી. ॥૧૭૧॥

तस्मादपाच्ये भरतस्य खण्डे, वेगेन सोऽगाच्छरणेच्छयैव ।
सीमाद्रिनाभेयजिनेन्द्रचैत्यं, चेतःकुरङ्गीधृतिवागुराभम् ॥१७२॥

तस्माच्चमरचञ्चानगरात् अपाच्ये दक्षिणे भरतस्य खण्डे चेतः एव कुरङ्गी हरिणी तस्याः धृतेः ग्रहणस्य वागुरा पाशरज्जुवदाभातीति यत्तत्तथा, चेतःशान्तिप्रदायकम् सीमाद्रौ सीमाख्ये पर्वते नाभेयजिनेन्द्रस्य श्रीवृषभनाथस्य चैत्यं तत् शरणं रक्षितृ इदमेवेतीच्छयैव यद्वा शरणस्य रक्षण-स्येच्छयैव न तु पूजनादीच्छयेत्येवकारार्थः । "शरणं वधरक्षित्रोः" इत्यमरः । वधरक्षणयोरपि शरणं" इत्यमरटीकायां, सोऽशनिघोषः, वेगेन अगात् ॥१७२॥

ત્યાંથી તે અશનિઘોષને શરણમાં લાવવાની ઇચ્છાથી વેગથી ભરતના દક્ષિણ ખંડમાં મનરૂપી હરણીને પકડવાની પાશ જેવો સામા પર્વત ઉપર આદીશ્વરના ચૈત્યમાં ગયો. ॥૧૭૨॥

संस्थापितोऽस्मिन् समवादिसृत्या-ख्यस्थानके केतन एव नागः ।
तत्रैकरात्रप्रतिमां महात्मा, रामोऽचलस्तिष्ठति निश्चलः सः ॥१७३॥

अस्मिन् चैत्ये समवादिसृत्याख्यस्थानके समवसृतिस्थाने केतने ध्वजे एव नागः गजः संस्थापितः, अस्तीति शेषः । एकरात्रप्रतिमाम् एकरात्रिकीं प्रतिमाम् अभिग्रहविशेषरूपां सं महात्मा महामुनिः रामः अचलः अचलाख्यबलदेवमुनिः निश्चलः स्थिरः सन् तिष्ठति अनुपालयति धारयतीति भावः । उक्तञ्च मुनिदेवसूरिकविकृते श्रीशान्तिवृत्ते "स्थापितोऽस्त्यत्र समवसृतिस्थाने गजो ध्वजे । तत्रा-

चलबलस्तस्थौ प्रतिमामेकरात्रिकीम् ॥ ३५ ॥ इति । 'केतनं ध्वजः' इति हैमः । 'गजो' नागः कुञ्जरः इत्यमरः ॥ १७३ ॥

ત્યાં સમવસરણ નામના સ્થાનકમાં એક આલયમાં નાગ સ્થાપિત હતા ત્યાં મહાત્મા પ્રસિદ્ધ બલભદ્ર અચલ એક રાત્રિક પ્રતિમામાં સ્થિર થઈ રહેલા હતા. ॥૧૭૩॥

दुष्कर्मधाराधरके निरस्ते, ध्यानानिलेन स्फुरता जगन्ति ।
निर्भासयन् केवलसंविदंशु–र्व्योम्नीव तत्राऽऽविरभूत्तदैव ॥१७४॥

तत्र स्थाने, स्फुरता प्रौढप्रभावशालिना ध्यानमेव शुक्लध्यानमेवानिलः पवनस्तेन, दुष्कर्मैव धाराधरको मेघस्तस्मिन् निरस्ते विनष्टे जगन्ति, जगत्त्रयं निर्भासयन् प्रतिभासयन् केवलसंवित् केवलज्ञानमेवांशुः सूर्यः 'खरसहस्रोष्णांशुरंशू रविः" इति हैमः । व्योम्नि आकाशे इव, तत्राचले मुनौ, तदैव तत्काल एव, आविरभूत प्रादुर्बभूव । आह च—

"एगराइयं च णं भिक्खुपडिमं सम्म अणुपालेमाणस्स इमे तओ ठाणा हियाए भवन्ति तं जहा—ओहिनाणे वा समुपज्जेज्जा, मणपज्जवनाणे वा समुपज्जेज्जा केवलनाणे वा समुपज्जेज्जा" इति ॥ १७४ ॥

તે જ સમયે તે અચલમાં સ્ફુરાયમાન થતા ધ્યાનરૂપી પવનથી દુષ્કર્મ (ઘાતિકર્મ) રૂપી વાદળાંઓ વિખેરાયે છતે સર્વ પદાર્થોને પ્રકાશિત કરતું કેવલજ્ઞાન આકાશમાં સૂર્યની જેમ પ્રગટ થયું. ॥૧૭૪॥

आगाज्जगन्नन्दनचारणर्षि–स्तत्रोत्सवेऽमाऽभिनन्दनेन ।
अन्येऽर्ककीर्त्यग्निजटिक्षमेश–मुख्याः समेयुर्बहवोऽपि चात्र ॥१७५॥

तत्र चैत्ये उत्सवे उत्सवनिमित्तम् अभिनन्दनेन तदाख्यमुनिना अमा सह जगन्नन्दनचारणर्षिरपि जगन्नन्दनचारणमुनिरपि आगात् । तथा अत्र चोत्सवे बहवः अनेके अन्येऽपि अर्ककीर्त्तिश्च अग्निजटिः च क्षमेशौ मुनी मुख्यौ येषां ते तादृशाः अर्ककीर्त्यादयः अपि समेयुः समागतवन्तः ॥ १७५ ॥

ત્યાં ઉત્સવમાં અભિનંદનની સાથે જગતનંદન નામે ચારણ મુનિ આવ્યા અને ત્યાં બીજા પણ અર્કકીર્તિ અગ્નિજટી રાજા વિગેરે ઘણા રાજાઓ આવ્યા. ॥૧૭૫॥

तस्यैव सेवां विबुधा विधातु–मभ्यागमन् केवलबोधभाजः ।
बिभ्यत्ततः सोऽशनिघोषकोऽपि, तत्पादपद्मं शरणं प्रपेदे ॥१७६॥

तस्यैव केवलबोधं केवलज्ञानं भजतीति केवलबोधभाक् तस्याचलस्यैव मुनेः, सेवां विधातुं कर्तुं विबुधा देवा अभ्यागमन् । सर्वान् तं सेवमानान् दृष्ट्वा ततः ज्वालाविघातः भयं प्राप्तुवन्निव, सः अशनिघोषकः अपि, तस्याचलस्य पादः पद्ममिव तत् शरणं रक्षकत्वेन, प्रपेदे गृहीतवान् ॥ १७६ ॥

અને તે કેવલજ્ઞાની અચલની જ સેવા કરવા દેવો આવ્યા હતા. અશનિઘોષ પણ તે દેવોથી બીનો બીનો તે અચલના ચરણકમલરૂપી શરણને પ્રાપ્ત થયો. ૧૭૬॥

व्यावृत्य विद्याऽमिततेजसोऽपि, सामीप्यमाशिश्रियदाश्रयस्य ।
स्वाभाविकद्वेषभरा अपि स्यु–र्न ज्ञानिषु द्विष्टहृदः कदाचित् ॥१७७॥

विद्या ज्वालाभिधा अपि व्यावृत्य निवृत्य, आश्रयस्य साधकत्वेनाधारस्य अमिततेजसः सामीप्यम् आशिश्रियत् समीपमागतवती । ननु सा अशनिघोषग्रहणाय प्रेरिता कथं तमगृहीत्वैव निवृत्तेति चेत्तत्राह—द्वेषस्य भर उत्कर्षः द्वेषभरः 'उत्कर्षनिर्भराः भरेति' हैमः। द्वेषप्रकर्ष इत्यर्थः। स्वाभाविको द्वेषभरो येषां ते तादृशा अपि नित्यवैरा अपि ज्ञाननिधानप्रशममूर्त्तिषु सत्सु कदाचिदपि, द्विष्टं हृद् येषां तादृशाः विद्वेषिणः वैरिणो न स्युः, द्वेषाक्रान्तचेतसोऽपि ज्ञानिनं समासाद्य ज्ञानिदृक्पथे गताः निर्मलहृदो भवन्तीत्यर्थः। एवं च निग्रहकारणस्य द्वेषस्य केवलज्ञानिनोऽचलाख्यमुनेः प्रभावाद् तस्मिन्नशनिघोषे विलीनत्वात् तमगृहीत्वैव विद्या निवृत्ता, इति भावः ॥१७७॥

અમિતતેજની વિદ્યા પણ પાછી ફરીને ચાલી આવી. (કેમકે) સ્વાભાવિક દ્વેષથી ભરાયેલાઓ પણ જ્ઞાની પાસે કદીપણ દ્વેષી હૃદય વાળા હોતા નથી. ॥૧૭૭॥

निर्दिश्य मारीचिमदृश्यदोषं, श्लाघ्यं सुतारानयने प्रहृष्टौ ।
नन्तुं ततः केवलिनं प्रयातौ, क्ष्मावासवौ श्रीविजयामिताख्यौ ॥१७८॥

ततस्तदनन्तरम्, श्रीविजयामिताख्यौ क्ष्मावासवौ राजानौ अदृश्यः दोषः यस्मिन् तं निर्मलहृदयं अत एव श्लाघ्यं प्रशंसनीयं मारीचिं तन्नामदूतं सुतारायाः आनयने आनयननिमित्तं निर्दिश्यादिश्य, केवलिनमचलं मुनिं नन्तुं वन्दितुं प्रहृष्टौ सन्तौ प्रयातौ गतवन्तौ ॥१७८॥

સુતારાને લાવવાને પ્રશંસનીય અને પવિત્ર એવા મારીચિને આજ્ઞા કરી ત્યાંથી પ્રસન્ન એવા શ્રીવિજય અને અમિતતેજ રાજા પણ કેવલીને વંદન કરવા ચાલ્યાં. ॥૧૭૮॥

सीमाद्रिमागत्य विलम्बवर्जं, बिम्बं विनम्यादिजिनस्य पूर्वम् ।
तौ ज्ञानलक्ष्मीहृदयैकहारं, साधुं प्रलम्बघ्नमवन्दिषाताम् ॥१७९॥

तौ विजयामिततेजसौ सीमाद्रिं सीमाख्यपर्वतं विलम्बवर्जं शीघ्रम् आगत्य, पूर्वं प्रथमम् आदिजिनस्य श्रीवृषभनाथस्य बिम्बं प्रतिमां विनम्य नत्वा ज्ञानलक्ष्मीहृदयस्य एकोऽद्वितीयः हारः यस्य तं तादृशं हारोपमं केवलज्ञानिनम् प्रलम्बघ्नम् अचलाख्यबलदेवं साधुमवन्दिषातां वन्दितवन्तौ "बलभद्रः प्रलम्बघ्नो बलदेव" इत्यमरः ॥१७९॥

વિના વિલંબે સીમાદ્રિ ઉપર આવી પહેલાં આદિજિનેશ્વરના બિંબને નમી તેઓ બન્નેએ જ્ઞાનરૂપી લક્ષ્મીના હૃદયના પુષ્પહાર સમાન એવા મુનિ બલભદ્ર અચલને નમ્યા. ॥૧૭૯॥

अथ मारीचिप्रवृत्तिमाह—

गत्वा स धीरोऽशनिघोषकस्य, मारीचिरप्याशु पुरीं विवेश ।
तन्मन्दिरे तज्जननीसमीप-स्थास्नुं सुतारां समवेक्षते स्म ॥१८०॥

स धीरः धैर्यशाली मारीचिरपि गत्वा अशनिघोषकस्य पुरीं विवेश, तथा, तस्याशनिघोषस्य जनन्याः मातुः समीपे स्थास्नुं स्थितिशीलां सुतारां समवेक्षते पश्यति स्म ॥१८०॥

ते धीर मारीचिए पण जई अशनिघोषना नगरमां प्रवेश कर्यो अने ते अशनिघोषना भवनमां तेनी माताना पासे रहेली सुताराने जोई ॥१८०॥

अथ सुतारामेव विशिनष्टि——

आसाद्य भर्त्तुः कुशलप्रवृत्तिं, भोक्ष्येऽन्यथा नेति कृतोपवासाम् ।
आस्यानि दृश्यानि वियोगिनीनां, नवेति सध्यानमवाङ्मुखीं ताम् ॥१८१॥

भर्त्तुः पत्युः श्रीविजयस्य कुशलस्य प्रवृत्तिं वार्त्ताम् "वार्त्ता प्रवृत्तिर्वृत्तान्त" इत्यमरः । आसाद्य प्राप्य भोक्ष्ये, अन्यथा कुशलाज्ञाने नैव भोक्ष्ये इति बुद्ध्या कृतः उपवासः यया सा तादृशा तथा वियोगिनीनां पतिविरहितानाम् आस्यानि मुखानि नैव दृश्यानि विलोकनीयानि । वियोगिन्यो हि स्व-मुखमन्यं न दर्शयन्ति इति विचिन्त्य सध्यानं ध्यानसहितं यथा स्यात्तथा अवाङ्मुखीमधोमुखीं तां सुतारां समवेक्षते स्मेति पूर्वेणान्वयः । एतेन तस्या उत्कृष्टपतिव्रतात्वमुक्तम् ॥१८१॥

पुनस्तामेव विशिनष्टि——

शीतांशुलेखामिव कृष्णपक्षे, लक्ष्मीमिवान्यायवतां गृहेषु ।
वाणीमिव प्रातिभवर्जितानां, बाढं कृशां शीलगुणैरुपेताम् ॥१८२॥

कृष्णपक्षे शीतांशोश्चन्द्रस्य लेखां रेखामिव, अन्यायवतां दुर्जनानां गृहेषु लक्ष्मीं सम्पदमिव प्रातिभेन प्रतिभया वर्जितानां [illegible] वाणीं [illegible] शीलगुणैः [illegible] युक्तां तां समवेक्षते स्मेति पूर्वेणान्वयः । अत्रैकस्यैवोपमेयस्यानेकोपमानदर्शनान्मालोपमा ॥१८२॥

पतिना कुशळ समाचार पाम्या पछी ज खाईश अन्यथा नहि एम निश्चय करीने उपवास करती अने 'विरहिणी स्त्रीओना मुख जोवा नहीं' आ वात ध्यानमां राखी नमेला मुखवाळी अने शील-गुणथी युक्त एवी ते सुताराने कृष्णपक्षमां चंद्रमानी रेखानी जेम अन्यायी पुरुषना घरमां लक्ष्मीनी जेम तथा प्रतिभाथी रहित पंडितोनी वाणीनी जेवी अत्यन्त दुबळी जोई ॥१८१-१८२॥

आवेदिते तेन पुरः स्ववृत्ते, तत्कालमेवाशनिघोषमाता ।
तां प्रापयत्साधुपदारविन्द-द्वन्द्वाग्रभूमिस्थिततद्वृदीशम् ॥१८३॥

तेन मारीचिना पुरः अग्रे स्ववृत्ते निजोदन्ते आवेदिते कथिते अशनिघोषमाता, तत्कालमेव

तां सुतारां साधोरचलस्य पदारविन्दयुगलस्याग्रभूमौ स्थितं तस्याः सुतारायाः हृदीशं पतिं श्रीविजयं प्रापयत्, पतिपार्श्वे तां प्रेषितवतीत्यर्थः ॥१८३॥

તે મારિચિ પોતાના આગળના સમાચાર કહ્યા છતાં, અશનિઘોષની માતાએ તે જ વખતે તે સુતારાને સાધુના બન્ને ચરણકમલની આગળ રહેલા તેના પતિ શ્રીવિજયની પાસે પહોંચાડી દીધી. ॥૧૮૩॥

भेत्तुं न यच्छीलतनुत्रमात्रं, सुत्रामवर्गोऽपि शशाक सर्वः ।
तामर्पयामास हृदीश्वराय, तोषं दधानां हृदये सुताराम् ॥१८४॥

सर्वोऽखिलः सुत्राम्णामिन्द्राणां वर्गः समुदायः अपि, यस्याः सुतारायाः शीलमेव तनुत्रं कवचं तन्मात्रं भेत्तुं खण्डितुं न शशाक, तां हृदये तोषं हर्षं दधानां सुतारां हृदीश्वराय पत्यै अर्पयामास ददौ ॥१८४॥

બધા ઇન્દ્રો પણ જેના શીલરૂપી કવચને સહેજ પણ ભેદી-ખંડિત કરી શક્યા નહિ તે, હૃદયમાં પ્રસન્ન થતી એવી સુતારાને તેના પતિને સોંપી દીધી. ॥૧૮૪॥

भक्त्या मुनीन्द्राचलकामपालं, नत्वा यथास्थानमुपाविशत् सा ।
विद्याधरेन्द्रोऽशनिघोषकोऽपि, तावादरेण क्षमयाम्बभूव ॥१८५॥

सा सुतारा मुनीन्द्रः अचलश्चासौ कामपालः हलायुधश्च तम्, "कामपालो हलायुधः" इत्यमरः । भक्त्या नत्वा यथास्थानमुचितस्थाने उपाविशत् । विद्याधरेन्द्रः अशनिघोषकः अपि आदरेणानुरागेण तौ दम्पती सुताराश्रीविजयौ श्रीविजयामिततेजसौ वा क्षमयाम्बभूव, क्षमयामास ॥१८५॥

તે સુતારા મુનીશ્વર શ્રી અચલ બલભદ્રને ભક્તિપૂર્વક નમન કરી યોગ્ય સ્થાને બેઠી અને વિદ્યાધરેંદ્ર અશનિઘોષે પણ તે બન્નેને આદરપૂર્વક ખમાવ્યાં. ॥૧૮૫॥

अथ मुनेर्देशनोपक्रममाह—

भव्येषु सर्वेषु निषेदिवत्सु, तन्निष्ठपापेषु त्रिषेदिवत्सु ।
वक्त्राम्बुजं देशनयाऽचलोऽपि, संयोजयामास मुनिस्तथाहि ॥१८६॥

सर्वेषु भव्येषु भव्यलोकेषु निषेदिवत्सु उपविष्टेषु सत्सु तन्निष्ठेषु भव्यनिष्ठेषु पापेषु विषेदिवत्सु मुनिसामीप्याद्विलीनप्रायेषु सत्सु अचलः मुनिरपि देशनयोपदेशवाचा वक्त्रं मुखमम्बुजं कमलमिव, तत् संयोजयामास व्याख्यातुमारब्धवानित्यर्थः । तथापीति व्याख्याननिर्देशोपक्रमे ॥१८६॥

બધા ભવ્યો બેઠાં છતા અને તેના બધા પાપો અચલના પ્રભાવથી નાશ પામે છતે અચલ મુનિ પણ દેશના આપવા લાગ્યા. ॥૧૮૬॥

मत्ताङ्गनापाङ्गविलासलोलं, रूपं वयश्चारु धनं तथायुः ।
भव्या ! भवद्भिः परिभाव्य धर्मे, कार्यः प्रमादो न मनागपीह ॥१८७॥

भव्याः! इह संसारे चारु मनोहरं रूपं सौन्दर्यं वयः यौवनाद्यवस्थाम् धनं तथा आयुः मत्ताङ्गनायाः अपाङ्गस्य (नेत्रान्तस्य) कटाक्षस्य विलासः अपाङ्गौ नेत्रयोरन्तौ तयोर्विलासः विभ्रमः इव लोलं चञ्चलं परिभाव्य विचार्य भवद्भिः, धर्मे धर्मानुष्ठाने मनागीषदपि प्रमादोऽनवधानता न कार्यः ॥ १८७ ॥

હે ભવ્યો! તમો બધાને આ સંસારમાં ઉત્તમ રૂપ, વય, ધન ને આયુને મદમત્ત સ્ત્રીના કટાક્ષના વિલાસની જેમ ચંચલ વિચારીને ધર્મને વિષે સહેજ પણ પ્રમાદ કરવો જોઈએ નહિ. ॥૧૮૭॥

संजाततोषोऽशनिघोषकोऽथ, नत्वा मुनिं विज्ञपयाम्बभूव ।
विद्यां गृणन् भ्रामरिकीं स्वपुर्याः, श्रीमज्जयन्तान्तिक एकदागाम् ॥१८८॥

अथ देशान्तरम्, संजाततोषः हृष्टः अशनिघोषकः नत्वा, मुनिम् विज्ञपयाम्बभूव निवेदयामास निवेदनमेवाह--एकदा, भ्रामरिकीं भ्रमारिणीं विद्यां गृणन्मुखान्तरे, स्वपुर्याः श्रीमज्जयन्तस्य अन्तिके आगामागमम् ॥१८८॥

પછી પ્રસન્ન થયેલા અશનિઘોષે મુનિને નમીને જણાવ્યું કે હું એક સમયે ભ્રામરિકી વિદ્યાને ભણતો (સાધવાને ઇચ્છતો) પોતાના નગરથી શ્રીમાન્ જયન્ત પાસે ગયો હતો. ॥૧૮૮॥

सप्तत्रियामाविहितोपवास-स्तां साधयित्वा विनिवर्तमानः ।
ज्योतिर्वने वीक्ष्य सतीवतंसा-मेतामहं प्रीतमना बभूव ॥१८९॥

सप्तसु त्रियामासु रात्रिषु विहिताः कृताः उपवासाः येन स तादृशः, विहितसप्तोपवासः, तां भ्रामरिकीं विद्यां सप्तरात्रं साधयित्वा विनिवर्त्तमानः प्रत्यागच्छन् ज्योतिर्वने, सतीषु अवतंसरूपामेतां सुताराम् "वतंसोऽप्यवतंसे स्यात्" इति हैमः । वीक्ष्यावलोक्य, अहं प्रतिमनाः प्रसन्नमना बभूवाभूवम ॥१८९॥

ત્યાં સાત રાત ઉપવાસ કરીને તે વિદ્યાને સાધીને ત્યાંથી ફરતો જ્યોતિર્વનમાં સતીશિરોમણી આ સુતારાને જોઈને અત્યન્ત ખુશ થયો હતો. ॥૧૮૯॥

तस्मादपाहारि मयेयमार्य ! क्रूरेण चित्तेन न तु प्रतीक्ष्य ।
अस्यां मम प्रेमनिबन्धनं य-त्तत्त्वं ममाख्याहि विशेषतत्त्वम् ॥१९०॥

आर्य ! पूज्य ! इयं सुतारा, तस्मात् प्रीतेः कारणात् क्रूरेण निर्दयेन चित्तेन करणेन मया कर्त्रा, अपाहारि हृता, न तु नैव प्रतीक्ष्य विचार्य, अस्यां सुतारायां मम प्रेम्णः निबन्धनं कारणं यद् विशेषतत्त्वं तत्त्वं त्वम आख्याहि कथय, नह्यकस्मात् कार्यमिति भावः ॥१९०॥

હે આર્ય, તે કારણથી જ ક્રૂર મનથી કંઈપણ વિચાર્યા વગર મેં આ સુતારાનું હરણ કર્યું હતું. તો આ સુતારાના વિષે મારા પ્રેમનું કારણ શું વિશેષ તત્ત્વ હતું આપ તેમને કહો. ॥૧૯૦॥

विज्ञप्तमात्रोऽथ मुनिर्बभाण, श्रीषेणभूपादिकवृत्तमेवम् ।
निष्ठापयामास भवं भ्रमित्वा, दुष्कर्मजातं कपिलोऽपि तादृक् ॥१९१॥

अथानन्तरम्, एवं पूर्वोक्तप्रकारेण विज्ञापनानन्तरमेव, न तु विलम्ब्य, तस्य केवलित्वेन सकलज्ञत्वादिति भावः। मुनिरचलः श्रीषेणभूपादिकस्य वृत्तं वृत्तान्तं बभाण कथयामास । कपिलः अपि, तादृक् दुष्कर्मणः जातं समूहं भवं भ्रमित्वा निष्ठापयामास क्षपयामास ॥१९१॥

પછી મુનિએ તે પૂછતાંની સાથે જ શ્રીષેણ રાજા વિગેરેના પૂર્વ સમાચાર કહી સંભળાવ્યા, આમ તે કપિલે સંસારમા ભમીને પોતાના દુષ્કર્મ સમૂહનો અન્ત આણ્યો. ॥૧૯૧॥

अथानन्तरपूर्वभवकथामाह—

भीतेः पदव्यामपि भूतरत्ना-टव्यां महाश्वापदसंश्रयायाम् ।
एरावतीद्वीपवतीतटान्ते, जज्ञे जटी कौशिकनामधेयः ॥१९२॥

महतां श्वापदादीनां व्याघ्रादीनां हिंस्रजन्तूनां संश्रयः निवासः यत्र तादृश्याम् अत एव भीतेः भयस्य पदव्यां स्थानेऽपि भूतरत्नेत्यभिधायां महाटव्याम् ऐरावत्याः तदाख्यायाः द्वीपवत्याः नद्याः "द्वीपवती स्रवन्ती निम्नगापगा" इत्यमरः । तटस्य अन्ते समीपे कौशिकनामधेयः जटी जज्ञे जातः ॥ १९२ ॥

મહાન્ હિંસ્ર પશુનો આશ્રય ને ભયનું સ્થાન એવા ભૂતરત્ન વનમાં ઐરાવતી નદીના કાંઠે કૌશિક નામનો જટી થયો. ॥૧૯૨॥

तद्वल्लभाऽभूत् पवनादिवेगा, धर्मक्रियायाः सहकृत्वरी या ।
सूनुस्तदीयः कपिलस्य जीवः, कर्मेरितोऽजायत धर्मिलाख्यः ॥१९३॥

तस्य कौशिकस्य वल्लभा पत्नी पवनादिवेगा पवनवेगा नाम्नी अभूत् । या पवनवेगा धर्मक्रियायाः सहकृत्वरी सहकारिणी आसीत् । तदीयः कौशिकस्य सूनुः कर्मणा ईरितः प्रेरितः कपिलस्य जीवः धर्मिलाख्यः अजायत ॥१९३॥

ધર્મકાર્યમા સાથ આપવા વાળી એવી પવનવેગા નામે પત્ની હતી. કર્મથી પ્રેરાયેલો કપિલજીવ તે બન્નેનો ધર્મિલ નામે પુત્ર થયો. ॥૧૯૩॥

उत्क्रान्तबाल्यः स्वपितुस्तपस्यां, लात्वा स्वयं बालतपः स तेपे ।
बिभ्रज्जटा मूर्ध्नि घनाः पिशङ्गी-र्भूतिं प्रभूतां च गृहीतवल्कः ॥१९४॥

उत्क्रान्तं व्यतीतं बाल्यं यस्य स तादृशः प्राप्तयौवनः स धर्मिलः स्वपितुः सकाशात्तपस्यां तापसदीक्षां लात्वा गृहीत्वा, मूर्ध्नि मस्तके घनाः अविरलाः पिशङ्गीः पिङ्गलाः जटाः "पिङ्गलः श्यावः पिशङ्गः" इति हैमः । प्रभूतामधिकां भूतिं भस्म च बिभ्रत्, गृहीतं वल्कं वल्कलं येन स तादृशः

त्वग्वसनः सन् स्वयं बालतपः अज्ञानतपस्तेपे कृतवान् । त्वचि छल्लीचोचं वल्कञ्च वल्कलम् इति हैमः ॥१९४॥

તે કપિલ બાલ્યાવસ્થા વીત્યા છતાં પોતાના પિતાની જેમ વલ્કલને પહેરતો ને મસ્તક ઉપર સઘન એવી પાળી જટાને તથા ઘણી જ ભસ્મને ધારણ કરતો પિતાથી વ્રત લઈ પોતે બાલતપ કરવા લાગ્યો. ॥૧૯૪॥

ग्रीष्मे चतुर्णां ज्वलतां समिद्भिः, सप्तार्चिषां मध्यगतः स मूढः ।
मध्ये चतुर्णां हरिदीश्वराणां, शक्रः स्वतेजोभिरिवाबभासे ॥१९५॥

स मूढः मन्दबुद्धिः ग्रीष्मे ऋतौ समिद्भिरेधोभिः ज्वलतां चतुर्णां चतुर्दिक्षु स्थितानां सप्तार्चिषामग्नीनां मध्यगतः पञ्चाग्नितपश्चरन्, स्वतेजोभिः, चतुर्णां हरितां दिशामीश्वराणां दिक्पालानां मध्ये शक्र इन्द्र इव आबभासे रेजे ॥१९५॥

ગ્રીષ્મઋતુમાં (ચારે દિશામાં) કાષ્ઠનો ચારે બાજુ અગ્નિ સળગતો છતા તેના વચ્ચે રહેલો તે મૂર્ખ ચાર દિક્પતિ દેવોની વચ્ચે ઇન્દ્રની જેમ પોતાના તેજથી પ્રકાશતો હતો. ॥૧૯૫॥

धाराभिरासारनिपातिनीभि-र्वारीणि वर्षासमये स सेहे ।
जाज्वल्यमान-ज्वलनोपताप-सन्तापितो वा किमसौ तपस्वी ॥१९६॥

स धर्मिलः वर्षासमये प्रावृषि "धारासम्पात आसार" इत्यमरोक्तेः आसारेण धारासम्पातेन निपतन्तीत्येवंशीलाः आसारनिपातिन्यस्ताभिः अविरलमुसलप्रमाणाभिः मेघधाराभिः पतन्ति वारीणि जलानि सेहे । तत्रोत्प्रेक्ष्यते—जाज्वल्यमानस्य ज्वलनस्याग्नेरुपतापेनोष्मणा सन्तापितः असौ तपस्वी धर्मिलः किम् ? निदाघसन्तप्तस्य हि जलसहनं युज्यत एवेति भावः । नहि वर्षासहनं व्रतं किन्तु पूर्वप्राप्ततापनिवारणार्थमेव तदिति कटाक्ष्यते ॥१९६॥

શું તે તપસ્વી ભડકે બળતા અગ્નિના તાપથી પીડાતો હતો માટે વર્ષાઋતુમાં ધોધમાર વરસતા પાણીને સહતો હતો ? ॥૧૯૬॥

अन्तर्गतेनेव निपीड्यमानो, जाड्येन जाड्यं सहते स्म शीते ।
नो रल्लकं नापि स वल्कलानि, वासः प्रतीयेष न वेषमात्रम् ॥१९७॥

अन्तर्गतेन हृद्गतेन जाड्येन जडतया मन्दबुद्धिमत्तया निपीड्यमानः इव स धर्मिलः शीते हिमर्तौ जाड्यं शैत्यं सहते स्म । यथान्तर्गतजडतया निपीड्यमानस्तथा बाह्येनापि बालतपसा इति महाजडः । स इति कटाक्ष्यते । जैननये तादृशतपोनिषेधादिति भावः ।

ननु यदि कम्बलादि भवेत्तर्हि कुतः शीतपीडेति चेत्तत्राह—नो रल्लकं, "समौ रल्लककम्बलौ" इत्यमरः । न कम्बलं, न वल्कलानि वृक्षत्वचः, न वासः कार्पासं वा प्रतीयेष दधौ, किन्तु वेषमात्रं तापसवेषमात्रं प्रतीयेषेति ॥१९७॥

તે શિયાળામાં પોતાનામાં રહેલી જડતાથી પીડાતો જાણે ઠંડને સહતો હતો. તેણે કમ્બલ વલ્કલ વસ્ત્ર

કે વેષમાત્રની અપેક્ષા રાખી નહિ. ॥૧૯૭॥

निर्मापयामास तडागवापी–कूपानगाधान् स वृषैकबुद्धया ।
नाबुद्ध चैकत्र जलस्य बिन्दौ, जीवा अनेके निवसन्ति चेति ॥१९८॥

स धर्मिलः वृषे धर्मे एका असाधारणा, यद्वा वृषस्य धर्मस्यैवैकस्य, न तु कीर्त्यादेः बुद्धिः, तया, अगाधान् अतलस्पर्शान् तडागवापीकूपान् निर्मापयामास । एकत्र च जलस्य बिन्दौ अनेके जीवा निवसन्तीति न अबुद्ध ज्ञातवान् एवं च तडागादिकर्माज्ञानविलसितमेवेति ॥१९८॥

જેણે ધર્મ માત્રની બુદ્ધિથી અગાધ એવા તળાવ, વાવ, કૂવા વિગેરેનું નિર્માણ કરાવ્યું, પણ જળના એક બિંદુમાં અનેક જીવો રહે છે તે વાત જાણી શક્યો નહિ. ॥૧૯૮॥

सम्पूरयामास स पादपाना–मावापचक्रं स्वयमेव क्लृप्तम् ।
आनीय चानीय शिला विशाला, अद्भिः स्फुरत्पूतरकाभिरेव ॥१९९॥

स धर्मिलः विशालाः शिलाः पाषाणान् आनीयानीय च पुनःपुनरानीय क्लृप्तं निर्मितं पादपानां वृक्षाणाम् अचिररोपितानामावापः आलवालं चक्रमिव वर्तुलत्वाच्चक्रं यद्वा आवापानामालवालानां चक्रं वृन्दं "स्यादालवालमावालमावापः" इति । "वृन्दं चक्र–कदम्बके" इति च हैमः स्फुरन्तः स्पष्टं लक्ष्यमाणाः तच्चरन्तः पूतरकाः क्षुद्रजीवाः यासु तादृशीभिरद्भिः जलैरेव सम्पूरयामास । जीवदयायाः सूक्ष्मज्ञानाभावादिति भावः ॥१९९॥

તે પોતે જ વિશાળ શિલાઓ લાવી લાવીને બનાવેલી વૃક્ષોની ક્યારાઓને ચાલતા પોરા નામના જીવવાળા પાણીથી પૂરતો હતો. ॥૧૯૯॥

निष्पीड्य निष्पीड्य स इङ्गुदीनां, बाढं फलान्येव पचेलिमानि ।
आदाय तैलानि निशागमेऽसौ, धर्मप्रदीपान्विदधेऽतिमुग्धः ॥२००॥

अति—अत्यन्तं मुग्धः मूढः असौ धर्मिलः बाढं भृशं पचेलिमानि स्वयमेव पक्वानि "इङ्गुदी तापसतरुः" इत्यमरोक्तेः । इङ्गुदीनां तापसतरूणां फलान्येव निष्पीड्य तैलान्यादाय निशागमे प्रदोषे धर्माय प्रदीपान् विदधे चकार ॥२००॥

અત્યન્ત મૂર્ખ એવો તે પુત્ર જીવ વનસ્પતિના પાકેલાં ઘણાં ફળોને પીલીપીલીને તેલ કાઢી સન્ધ્યા-સમયે ધર્મ માટે દીવો કરતો હતો. ॥૨૦૦॥

सम्पूर्य सम्पूर्य जलैरजस्रं, वृक्षस्य शाखासु शरावमालाम् ।
रज्ज्वा निबद्ध्यैव बबन्ध पक्षि–व्रातस्य पानाय निदाघकाले ॥२०१॥

निदाघस्य ग्रीष्मस्य काले ऋतौ, पक्षिणां व्रातस्य समूहस्य पानाय जलैः अजस्रं सन्ततं सम्पूर्य सम्पूर्य रज्ज्वा निबध्य बद्ध्वा यथा मा पतदिति भावः, वृक्षस्य शाखासु शरावाणां वर्द्धमानानां मृत्पात्रविशेषाणां मालां श्रेणीं बबन्ध । वर्द्धमानः शरावः' इति हैमः ॥२०१॥

તે ઉનાળાના સમયે પક્ષીઓના પાવા માટે ઢાંકણીઓને દોરડીયા બાંધી તેમાં સંપૂર્ણ પાણી ભરીને વૃક્ષની ડાળોમાં બાંધીને લટકાવતો હતો. ॥૨૦૧॥

**विश्रम्य विश्रम्य पुरीगृहेषु, भिक्षां गृहीत्वा स वनं समेत्य ।**
**विश्राण्य काकादिविहङ्गमेभ्यो, भुङ्क्ते स्म तच्छेषमशेषकृत्य ॥२०२॥**

स धर्मिलः पुर्या गृहेषु विश्रम्य विश्रम्य भ्रान्त्वा भ्रान्त्वा वीप्सायां द्विरुक्तिः । भिक्षां गृहीत्वा, वनं समेत्य काकादिभ्यो विहङ्गमेभ्यः पक्षिभ्यः विश्राण्य दत्त्वा, तेभ्यः शेषमवशिष्टम् , अशेषं समाप्तं कृत्यं क्रियान्तरं यस्य स तादृशः कृतकृत्यः सन् भुङ्क्ते स्म ॥२०२॥

તે નગરમાં, ઘરોમાં ભમી ભમીને ભિક્ષા લઈને વનમાં આવી કાગડા વિગેરે પક્ષિઓને આપી તેના બચેલા અન્નને પોતે બધાં કામ કરી ખાતો હતો. ॥૨૦૨॥

**वस्त्रेण पूतं सलिलं पिबेच्चे--त्येतादृशीं स श्रुतिमप्यजानन् ।**
**आपूरितैर्वारिभरेण कुम्भैः, कुत्र प्रपां वर्त्मनि नो चकार ? ॥२०३॥**

वस्त्रेण पूतं गालितं सलिलं जलं पिबेच्चेत्येतादृशीं श्रुतिं वेदमप्यजानन् यदि हि ज्ञायेत, कथं नामापूतजलेन प्रपां कुर्वीतेति भावः । स धर्मिलः, कुत्र कस्मिन् वर्त्मनि मार्गे, वारिभरेण आपूरितैः भृतैः कुम्भैः घटैः प्रपां पानीयशालां न चकार ? अपि तु सर्वत्र चकारेत्यर्थः ॥२०३॥

તે વસ્ત્રથી પવિત્ર કરેલો-વસ્ત્રથી ગાળેલું જળ પીવું જોઈએ, એવા શાસ્ત્રને પણ નહીંતો સમજતો, માટે જ પાણીથી ભરેલા ઘડાઓથી કયા માર્ગમાં એણે પરબ કરી ન હતી ? એક નહીં સર્વ જગ્યાએ પરબો કરી હતી. ॥૨૦૩॥

**स त्रिः परीय प्रणनाम धात्रीं, सङ्कल्पयन् शक्तिमनन्तरूपाम् ।**
**धेनुं तथैव प्रतिपत्तिपूर्वं, दुर्वाङ्कुरास्वादकृतप्रतीतिम् ॥२०४॥**

स धर्मिलः अनन्तरूपां बहुरूपधारिणीं शक्तिं शक्तिरूपां देवीस्वरूपां संकल्पयन् ध्यायन् , धात्रीं पृथिवीम्, त्रिः त्रिवारम् , परीय प्रदक्षिणीकृत्य प्रणनाम, तथैव प्रतिपत्तिः विश्वासः तत्पूर्वं दुर्वाङ्कुरस्यास्वादे भक्षणे कृता कृतार्था प्रतीतिः ज्ञानं यस्यास्ताम् तादृशीम् तृणभक्षणमात्रज्ञानां जडां धेनुं गाम्, त्रिः परीय प्रणनामेति सम्बध्यते ॥२०४॥

તે પૃથ્વીને અનંત રૂપવાળી શક્તિ માનીને ત્રણવાર પ્રદક્ષિણા કરી પ્રણામ કરતો હતો. તેમ જ ઘાસ ખાવા માત્રનું જેને જ્ઞાન છે એવી ગાયને આદર ભક્તિપૂર્વક (ત્રણ પ્રદક્ષિણા કરી) પ્રણામ કરતો હતો. ॥૨૦૪॥

**शाखासमाक्रान्तनभोविभागं, छायां प्रकुर्वन्तमिलातलेऽपि ।**
**सान्द्रैर्दलैर्विस्तृतिभावमेतै-र्दृष्ट्वा वटद्रुं स भृशं ननाम ॥२०५॥**

स धर्मिलः शाखाभिः समाक्रान्तः व्यापितः नभस आकाशस्य विभागः प्रदेशः येन तं तादृशं महाशाखम्, विस्तृतिभावम् अतिमहत्वमेतैः प्राप्तैः सान्द्रैः अविरलैः दलैः पत्रैः इलातले पृथिवीतलेऽपि छायामनातपं प्रकुर्वन्तं वटद्रुं वटाख्यवृक्षं दृष्ट्वा भृशं प्रणनाम ॥२०६॥

તે આકાશમાં પહોંચેલા શાખાઓ વાળા સઘન પાંદડાઓથી ભરપૂર પૃથ્વી ઉપર છાયા કરતા એવા વિશાળ વડના ઝાડને એ વારંવાર નમન કરતો હતો. ॥२०५॥

अथोपसंहरति--

इत्यादि सावद्यममुष्य कर्म, सञ्चिन्वतो धर्मधिया जडस्य ।
भूयान् व्यतीयायतमामनेहा, हा ! कष्टमज्ञानमपास्य किं वा ॥२०६॥

इत्यादि पूर्वोक्तं सावद्यं पापकारि कर्म पूर्वोक्ततत्तत्कर्मणाम् जीवघातकतया जडपूजनादेश्च अज्ञानविलासत्वेन जाड्यप्रवर्धकतया सावद्यता आगमे प्रतिपादितेति भावः । धर्मस्य धिया बुद्ध्या संचिन्वतः अर्जयतः, अमुष्य जडस्य धर्मिलस्य भूयान् अतिप्रभूतः अनेहा कालः, व्यतीयायतमाम् व्यतीतः । हा इति खेदे, अज्ञानमपास्य त्यक्त्वा, किं वा कष्टम् ? न किमपीत्यर्थः । अज्ञानादेवैतादृशाग्नि-संतापादिकष्टसहनं तस्य, ज्ञाने सति तु सावद्यत्वात्तस्यत्यक्तैवेति । अज्ञानमेव सर्वाधिकं कष्टमिति तेन जडेन न ज्ञातमिति भावः ॥२०६॥

આમ ધર્મ બુદ્ધિથી આવા સાવદ્ય કર્મોનું ઉપાર્જન કરતા આ મૂર્ખના ઘણા દિવસો પસાર થયા હા અજ્ઞાન સિવાય બીજું કષ્ટ શું છે. ॥२०६॥

सोऽन्येद्युरालोक्य नभोऽन्तराले, विद्याधरं यान्तमतुल्यरूपम् ।
चक्रे निदानं मनसेत्यबुद्धि-र्भूयासमीदृक् तपसाऽमुनाऽपि ॥२०७॥

अन्येद्युः एकदा नभसः आकाशस्यान्तराले मध्ये अतुल्यरूपम् अनुपमं रूपं सौन्दर्यं यस्य तं तादृशं विद्याधरं यान्तं गच्छन्तमालोक्य, अबुद्धिः अज्ञः सः, ज्ञानी तु मुक्तिमेवेहते इति भावः । धर्मिलः अमुना अनुष्ठीयमानेन तपसा ईदृगपि ईदृश एव भूयासं भवेयमिति मनसा निदानं संकल्पं चक्रे ॥२०७॥

તે મૂર્ખ એક દિવસે આકાશમાં અપ્રતિમ સૌંદર્ય વાળા વિદ્યાધરને જતા જોઈ આમ નિયાણું કર્યું કે આ તપથી હું પણ આવો થાઉં. ॥२०७॥

मृत्वा स स विद्याधरसार्वभौम-स्येन्द्राशनेरिन्द्रपराक्रमस्य ।
देव्याऽऽसुरीकुक्षिभवस्त्वमासी-श्चञ्चानगर्यां नगराजसारः ॥२०८॥

स धर्मिलः मृत्वा चञ्चानगर्याम् इन्द्र इव पराक्रमो यस्य तस्य, विद्याधराणां सार्वभौमस्य चक्रवर्तिनः इन्द्राशनेः तन्नाम्नः सम्राजो देव्यः पट्टमहिष्याः आसुर्यास्तदाख्यायाः कुक्षेरुदराद्भवो जन्म यस्य स तादृशः, नगराजः पर्वतेन्द्र इव सारो बलं यस्य स तादृशः, त्वमासीरभवः ॥२०८॥

તે મરીને ચંપાનગરીમાં ઈન્દ્રસમાન પરાક્રમી વિદ્યાધરેંદ્ર ઈન્દ્રાશનિનો દેવી આસુરીનો ગર્ભજ પર્વત-રાજ જેવો બળશાળી એવો તું થયો. ॥૨૦૮॥

अथोपसंहरति—

प्राग्जन्मसम्बन्धवशात्ततोऽस्यां, स्नेहस्तवाभूदवलोकितायाम् ।
श्रुत्वेति संवेगतरङ्गितास्ते, सभ्या बभूवुः सुकृतोपलम्भ्याः ॥२०९॥

ततः तस्मात् प्राग्जन्मनि यः सम्बन्धस्तद्वशात् अवलोकितायां दृष्टायामस्यां सुतारायां तव स्नेहः अभूत् । इतीत्थं श्रुत्वा ते सभ्याः तत्सभास्थाः श्रीविजयादयः सुकृतमुपलभ्यं येषां ते तादृशाः पुण्यवन्तः, संवेगेन वैराग्येण तरङ्गिता प्रबुद्धमानसा बभूवुः ॥२०९॥

તેથી પૂર્વજન્મના સંબંધને લીધે તને સુતારાને જોતાંવેંત જ પ્રમદ થયો હતો. આ સાંભળી પુણ્યશાળી એવા સભાસદો વૈરાગ્યથી પૂર્ણ મનવાળા થઈ ગયા. ॥૨૦૯॥

भव्योऽहमाहोस्विदभव्यरूप, इत्युक्त एवामिततेजसाऽपि ।
संवित्तिगङ्गातटिनीतुषार–क्षोणीधरो राममुनिर्बभाषे ॥२१०॥

अमिततेजसाऽपि, अहममिततेजाः भव्यः, आहोस्विदथवा अभव्यरूपः अभव्यात्मेतीत्थमुक्तः पृष्ट एव, संवित्तिः ज्ञानमेव गङ्गा तन्नाम्नी तटिनी नदी तस्याः तुषारस्य हिमस्य क्षोणीधरः पर्वतः हिमाचलः श्रुतज्ञानगङ्गाप्रवृत्तौ हिमाचलोपमः राममुनिरचलनामा बलदेवमुनिर्बभाषे ऊचे ॥२१०॥

(પછી) અમિતતેજ વડે હું ભવ્ય છું કે અભવ્ય ? એમ પૂછાયેલા જ્ઞાનરૂપી ગંગા નદીના હિમાલય સમાન બળભદ્ર અચલ મુનિએ ઉત્તર આપ્યો કે—॥૨૧૦॥

अथ तदुक्तिमेवाह—

अस्माद्भवान्नवम एव भवे भवाना–मुच्छेदकोऽत्र भरते भवितासि भव्यः ।
त्वं पञ्चमोऽनुपमविक्रमधामचक्री, श्रीशान्तिनाथ इति षोडश एव चार्हन् ॥२११॥

भव्यस्त्वमस्माद्वर्तमानाद्भवात् जन्मनः नवमे भवे एव । अत्र भरते, भवानाम् जन्मनाम् उच्छेदकः विलयकारी संसारान्तकृत् पञ्चमः अनुपमस्यासाधारणस्य विक्रमस्य धामास्पदं चासौ चक्री च स तादृशः पञ्चमचक्रवर्ती भविता असि । श्रीशान्तिनाथ इति षोडशः, अर्हन् तीर्थंकरश्च, भवितासीति सम्बध्यते ( वसन्ततिलकावृत्तम् ) ॥२११॥

તમે ભવ્ય છો. (અને) આ ભરતમાં આ ભવથી નવમા ભવે ભવોનો ઉચ્છેદ કરનાર શ્રી શાંતિનાથ નામે અનુપમ પરાક્રમ ને તેજવાળા પાંચમા ચક્રવર્તી તથા સોળમા તીર્થંકર થશો. ॥૨૧૧॥

एष श्रीविजयस्तदादिमतमश्चक्रायुधो नन्दनः,
सम्भावी भवतस्तथा गणधरोऽप्येषोऽपि विश्वार्चितः ।

त्रैपृष्ठामिततेजसौ नरपती नत्वा ततस्तौ मुनिं,
धर्मं द्वादशधा बुधावभजतां सुश्रावकाणां स्वयम् ॥२१२॥

तदा तस्मिन् समये, अन्तिमभवे एष श्रीविजयः, भवतोऽमिततेजसः पञ्चमचक्रवर्त्तिभवे आदिमतमः प्रथमः चक्रायुधः इत्याख्यः नन्दनः पुत्रः, सम्भावी भविष्यति, एषोऽपि एष एव, विश्वस्मिन् अर्चितः पूजितः, गणधरः अपि, संभावीति सम्बध्यते । ततस्तदनन्तरम् बुधौ सुज्ञौ तौ द्वौ त्रैपृष्ठः श्रीविजयश्चामिततेजाश्च तौ नरपती राजानौ, मुनिं नत्वा सुश्रावकाणां द्वादशधा धर्मं स्वयमभजताम् सेवेते स्म ॥२१२॥

આ શ્રીવિજય તે શાંતિનાથના ચક્રાયુધ નામે જ્યેષ્ઠ પુત્ર થશે. તથા શાંતિ જિનના વિશ્વપૂજ્ય એવા ગણધર પણ આ જ થશે. ત્યાર પછી ત્રિપૃષ્ઠનો પુત્ર શ્રીવિજય અને અમિતતેજ બન્ને રાજા મુનિને નમીને પોતે જ સુશ્રાવકના બાર વ્રત રૂપી ધર્મનું સેવન કરવા લાગ્યા. ॥૨૧૨॥

विद्याभृतां परिवृढोऽशनिघोषकोऽश्व-
घोषाभिधं तनयमङ्कगतं विधाय ।
भूमीभुजोरपि तयोः स्वयमादिताऽसौ,
दीक्षां बलाचलमुनेः सविधे विधिज्ञः ॥२१३॥

विद्याभृतां विद्याधराणां परिवृढोऽधिपः असौ विधिज्ञः भवनिस्तारक्रियाज्ञाता अशनिघोषकः अश्वघोषाभिधं तनयं पुत्रं तयोः भूमीभुजोः श्रीविजयामिततेजसोः स्वयम् अङ्कगतं विधाय क्रोडे कृत्वा, बलाचलमुनेः अचलनाम्नो बलदेवस्य सविधे समीपे, दीक्षां पञ्चमहाव्रतम् आदित स्वीकृतवान् ॥ २१३ ॥

વિદ્યાધરોના સ્વામી અને વિધિના જાણકાર અશનિઘોષે અશ્વઘોષ નામના પોતાના પુત્રને તે બન્ને રાજાના ખોળામાં મૂકી પોતે બલભદ્ર અચલ મુનિ પાસે દીક્ષા લીધી. ॥૨૧૩॥

माताऽपि श्रीविजयनृपतेः सा स्वयंभाभिधाना,
भेजे दीक्षां बलमुनिपतेः सन्निधाने विरक्ता ।
युक्तं चान्ते वयसि विदुषी कापि सीमन्तिनीनां,
कुर्यादेवं भवपरिभवं भेत्तुमुज्जागरूका ॥२१४॥

श्रीविजयनृपतेः माता सा स्वयंभाभिधाना स्वयंप्रभेतिनाम्नी विरक्ता सती बलमुनिपतेः अचलाख्यबलदेवमुनेः सन्निधाने समीपे दीक्षां भेजे अग्राहि । युक्तं च एतत्, कुत इत्याह—सीमन्तिनीनां नारीणां कापि पुण्यशालिनी विदुषी ज्ञानवती, भवस्य परिभवं कष्टं भेत्तुम्, उज्जागरूका सावधाना अन्ते वयसि अवस्थायाम् एवं कुर्यादिति ॥२१४॥

શ્રીવિજયરાજાની સ્વયંપ્રભા નામની માતાએ પણ વિરક્ત થઈને બલભદ્ર અચલ મુનિ પાસે વ્રતનો

અંગીકાર કર્યો તે ઉચિત જ છે. આઓમાં કોઇક જ બુદ્ધિમતી છેલ્લી વયે ભવના દુઃખોને ભેદવાને માટે સાવધાન થઇ આમ કરી શકે? ॥૨૧૫॥

अथ श्रीविजयादीनां ततो गमनमाह—

सेवित्वा बलभद्रसाधुचरणाम्भोजद्वयं चालिवत्,
पीत्वा वाग्मकरन्दबिन्दुपटलीमाकण्ठमाप्यायिताः ।
स्थानं श्रीविजयादयो ययुरथो स्वं स्वं गुरूणां गुणान्,
पीयूषांशुमयूखविभ्रमकरान् संवर्णयन्तो मुहुः ॥२१५॥

अथो अनन्तरम्, बलभद्रसाधुचरणाम्भोजद्वयम्, अलिवत् भ्रमरवत् "द्विरेफ-पुष्पलिड्-भृङ्ग-षट्पाद-भ्रमरालयः" इत्यमरः । सेवित्वोपास्य, तस्य वागेव मकरन्दः पुष्परसः तस्य बिन्दूनाम् "मकरन्दः पुष्परसः परागः" इत्यमरः । पटली समूहस्ताम्, आकण्ठं पर्याप्तं पीत्वा सादरं श्रुत्वा, आप्यायिताः हृष्टहृदयाश्च सन्तः, श्रीविजयादयः गुरूणामचलमुनीनाम्, पीयूषांशुश्चन्द्रस्तस्य मयूखस्य मरीचेः विभ्रमं भ्रान्ति कुर्वन्तीति तान् तादृशान् चन्द्रकिरणवदवदातान् गुणान् मुहुः वारंवारं संवर्णयन्तः कथयन्तः स्वं स्वं स्थानं ययुः जग्मुः ( शार्दूलविक्रीडितम् ) ॥२१५॥

પછી વાણીરૂપી મકરંદના બિન્દુ સમૂહને પીને કંઠ સુધી તૃપ્ત થયેલા શ્રીવિજય વિગેરે રાજાઓ બલભદ્ર અચલ મુનિનાં બન્ને ચરણ કમલોને ભ્રમરની જેમ સેવી ચંદ્રમાના કિરણોના ભ્રમ ઉપજાવનારા ચંદ્ર જેવા નિર્મલ એવા ગુરુનાં ગુણોનું વારંવાર વર્ણન કરતા પોતપોતાને સ્થાને ગયા. ॥૨૧૫॥

कल्याणाप्तिनिबन्धनं विदधतौ धर्मं त्रिवर्गोत्तरं,
तद्द्वारापरयोर्द्वयोरपि फलं तौ प्रापिवांसौ मुदा ।
पीयूषद्युतिमण्डलीमयमहो ! भूमण्डलाखण्डलौ,
कञ्चित्कालमपि व्यतीयतुरधिप्रौढप्रतापोदयौ ॥२१६॥

प्रतापः उदयोऽभ्युदयश्च प्रतापोदयौ अध्यधिकं प्रौढौ प्रतापोदयौ ययोस्तौ, यद्वा अधिप्रौढस्य अधिकप्रतिभाशालिनः 'प्रौढस्तु प्रगल्भः प्रतिभान्वितः' इति हैमः । प्रतापस्योदयौ ययोस्तौ तादृशौ । अध्यधिकं प्रौढौ ऊर्जितौ प्रतापः उदयोऽभ्युन्नतिश्च ययोस्तौ तादृशौ भूमण्डले आखण्डलाविन्द्राविव तौ, तौ श्रीविजयामिततेजसौ, कल्याणस्याप्तेः प्राप्तेः निबन्धनं कारणं त्रिवर्गेषु धर्मार्थकामेषूत्तरं प्रधानं धर्मं मुदा हृष्टचेतसा विदधतौ कुर्वन्तौ तद्द्वारा धर्मद्वारा अपरयोर्द्वयोरर्थकामयोरपि फलं प्रापिवांसौ प्राप्तवन्तौ तौ पीयूषद्युतिश्चन्द्रस्तन्मण्डलीमयं सुधारसमयं कंचित्कालं व्यतीयतुश्च ॥२१६॥

અહો અત્યન્ત પ્રૌઢ પ્રતાપ અને આબાદીથી યુક્ત એવા તે બન્ને પૃથ્વીના ઇંદ્રો (શ્રીવિજય ને અમિતતેજ) હર્ષપૂર્વક ત્રિવર્ગ અર્થ-કામ-મોક્ષના સાધનાર ને કલ્યાણની પ્રાપ્તિનું કારણ એવા ચંદ્રના કિરણોને સમૂહ સમાન નિર્મળ ધર્મને કરતા તે દ્વારા અર્થને કામના ફળ મેળવતા કેટલોક કાળ વિતાવ્યો. ॥૨૧૬॥

अर्हच्चैत्यसमीपपोषधगृहे श्रित्वान्यदा पौषधं,
दुष्कर्मामयभेदनौषधमसौ विद्याधराणां पुरः ।
यावद्भूपतिरर्ककीर्तितनयो व्याख्याति धर्मं स्फुटं,
तावच्चैत्यनिनंसुचारणमुनिद्वन्द्वं समाजग्मिवत् ॥२१७॥

अन्यदा, अर्हतः चैत्यस्य समीपे पौषधगृहे पौषधशालायाम् दुष्कर्म एव आमयो रोगः 'रोग-व्याधिगदामयाः' इत्यमरः । तस्य भेदनं भेदकमौषधमौषधरूपं पौषधं तदाख्यव्रतं श्रित्वा गृहीत्वा विद्याधराणां पुरोऽग्रे, भूपतिः अर्ककीर्तितनयः अमिततेजाः, स्फुटं धर्मं यावद्व्याख्याति, तावत् चैत्यस्य निनंसु नन्तुमिच्छु, चारणमुन्योः द्वन्द्वं युगलं समाजग्मिवत् आजगाम ॥२१७॥

એક સમયે તે રાજા અર્કકીર્તિનો પુત્ર અમિતતેજ જિનચૈત્યની પાસેના પૌષધગૃહમાં દુષ્કર્મરૂપી રોગના નાશ કરવામાં ઓસડ સમાન પૌષધ લઈને વિદ્યાધરોની આગળ જેટલામાં સ્પષ્ટ રીતે ધર્મનું વ્યાખ્યાન કરવા લાગ્યો. તેટલામાં ચૈત્યનું વંદન કરવાની ઇચ્છાથી બે ચારણ મુનિઓ આવી પહોંચ્યા. ॥૨૧૭॥

अभ्युत्थाय नृपः कृताञ्जलिपुटो हृष्टस्तदालोकनात्,
तौ वृन्दारकवृन्दवन्दितपदाम्भोजाववन्दिष्ट सः ।
विश्राण्यान्वयिधर्मलाभवचनं ज्येष्ठस्तयोरादिशद्,
धर्मं शर्मनिदानमार्हतमिमं दुष्कर्म विप्लावकम् ॥२१८॥

नृपोऽमिततेजाः कृतः बद्धः अञ्जलिपुटः येन स तादृशः बद्धाञ्जलिः सन्, अभ्युत्थाय, तस्य चारणमुनिद्वन्द्वस्यालोकनाद्दर्शनात् हृष्टः सन् सः नृपः, वृन्दारकाणां देवानां वृन्दैः वन्दितौ पादावम्भोजे इव वन्दितं पदमम्भोजं कमलमिव ययोस्तौ तादृशौ, तौ मुनी अवन्दिष्ट । तयोः मुन्योः ज्येष्ठः महत्तमः अन्वयि अन्वर्थं धर्मलाभवचनं विश्राण्य दत्त्वा दुष्कर्मणः विप्लावकं नाशकम्, शर्मणः सुखस्य निदानं कारणम्, आर्हतम् अर्हत्प्रोक्तम्, इमं वक्ष्यमाणं धर्ममादिशदुपादिशत् ॥२१८॥

તેઓને જોઈ પ્રસન્ન થયેલો રાજા સામે જઈ અંજલિ જોડી. દેવસમૂહોથી વંદન કરાતા તે બન્ને મુનિઓને વંદન કર્યું તેમાં મોટા મુનિએ યથાર્થ એવું ધર્મલાભ વચન ઉચ્ચારી કલ્યાણના આદિ કારણ દુષ્કર્મોના નાશ કરનાર એવા આ જૈનધર્મની દેશના આપી. ॥૨૧૮॥

तदेवाह—

सम्पूर्णं फलमादधाति विहितः सम्पूर्ण एवार्हतो,
धर्मः स्वार्थचिकीरहो ! बत नृणां स व्यत्यये व्यत्ययम् ।
प्राप श्रेष्ठिसुतो यथा स धनदो मत्स्योदरान्याहृपः,
कन्यानां जिनधर्मखण्डनवशात्खण्डेन संभावितम् ॥२१९॥

आर्हतः अर्हन्निर्दिष्ट एव, नत्वन्यः, सम्पूर्णः अविकलः धर्मः, विहितः अनुष्ठितः सन्, नृणां सम्पूर्णमविकलं फलमादधाति यच्छति, व्यत्यये खण्डिते धर्मे अन्तरान्तरा दूषिते कृते सति, स धर्मः व्यत्ययं खण्डितं दुःखमिश्रितसुखात्मकं फलमादधातीति सम्बध्यते । यथेति दृष्टान्ते । अहो बत ! आश्चर्यं खेदश्च, यत्, स प्रसिद्धः स्वार्थं चिकीर्षतीति स स्वार्थचिकीः स्वार्थमात्रकः श्रेष्ठिसुतः धनदः तन्नामा मत्स्योदर इत्यन्यः आह्वयः यस्य स मत्स्योदरापरनामा, जिनधर्मखण्डनवशात् दुःखेन, संभावितं मिश्रितं कल्याणं प्राप ॥२१९॥

ખરેખર મનુષ્યોના સ્વાર્થ-મોક્ષનું સાધન કરનાર જૈનધર્મ સંપૂર્ણ રીતે પાલન કરાયેલો છતો જ સંપૂર્ણ ફળ આપે છે. આનાથી વિપરીત થયે તે વિપરીત ફળ આપે છે-ખંડન કરવાથી અશુભ ફળ આપે છે જેમ મત્સ્યોદર રૂપનામવાળો ધનદ નામે શ્રેઠીનો પુત્ર જિનધર્મનું ખંડન કરવાથી દુઃખમિશ્રિત કલ્યાણરૂપ ફળ પામ્યો ॥૨૧૯॥

आसीत् श्रीगुरुगच्छमौलिमुकुटश्रीमानभद्रप्रभोः,
पट्टे श्रीगुणभद्रसूरिसुगुरुर्विद्यावतां सद्गुरुः ।
तच्छिष्येण कृतेऽत्र षोडशजिनाधीशस्य वृत्ते महा—
काव्ये श्रीमुनिभद्रसूरिकविना सर्गोऽगमत्पञ्चमः ॥२२०॥

पूर्ववद्व्याख्येयः ॥२२०॥

શ્રી ગુરુગચ્છના શિરોમણિ સમાન એવા શ્રીમાનભદ્રસૂરિના પટ્ટધર વિદ્વાનોમાં શ્રેષ્ઠ એવા સુગુરુશ્રી ગુણભદ્રસૂરિ થયા તેના શિષ્ય શ્રી મુનિભદ્રસૂરિનામે કવિ વડે રચાયેલા સોળમા જિનેશ્વર શ્રી શાંતિજિનના ચરિત્રરૂપી મહાકાવ્યમાં પંચમ સર્ગ પૂરો થયો. ॥૨૨૦॥

व्याख्यातो नो कदाचित् कृतिभिरयमहो पञ्चमः सर्गकोयः,
श्रीदामाजिप्रबन्धेऽर्हदयकविकृतेर्वर्णने लब्धजन्मा ।
सव्याख्यः संविता स प्रथयतु भुवने दर्शनाख्येन शश्वत्,
सूरीशा सज्जनानां मुदमतुलमरं वर्धयन् स्पर्धये वा ॥१॥

इति श्रीमन्मुनिभद्रसूरिकृतशान्तिनाथचरिते शासनसम्राट्-सूरिचक्रचक्रवर्ति—परमसद्गुरु-श्रीमद्विजयनेमिसूरीश्वरपट्टालङ्कारावाप्-न्यायवाचस्पति-शास्त्रविशारदविरुदश्रीमद्विजयदर्शनसूरीश्वरसन्दृब्धप्रबोधिनीव्याख्यायां—

पञ्चमः सर्गः समाप्तिमगात् ।

* अर्हम् *

## ॥ अथ षष्ठः सर्गः ॥

पाणिस्थं बदरं यथा कलयति द्रव्येण कालत्रये,
पर्यायेण तथाऽखिलं जगदमुं शान्तिं सदा शान्तिदम् ।
नत्वाऽनुग्रहकाम्यया रुचिमता सृष्टेव सर्गं मुदा,
नाम्ना दर्शनसूरिरेष शुभधी–र्व्याख्याति षष्ठं सुधीः ॥१॥

अथ षष्ठसर्गं प्रारभमाणः मङ्गलमाचरति--

कामधेनुसुरपादपचिन्ता–रत्नकामकलशा अपि सन्ति ।
यस्य कामजयिनः प्रतिहस्ताः, स श्रियेऽस्तु भवतां जिनशान्तिः ॥१॥

यस्य कामजयिनः कामविजेतुः वीतरागस्य श्रीशान्तिनाथस्य कामधेनुश्च सुरपादपः कल्प–वृक्षश्च चिन्तारत्नञ्च कामकलशश्च ते अपि । अपिना तेषां सर्वाभीष्टप्रदत्वे प्रसिद्धिः सूचिता । तादृशा अपि ते प्रतिहस्ताः प्रतिनिधयः एव सन्ति । प्रतिनिधिर्हि प्रतिनिधेयादपकृष्ट एव भवतीति कामधेन्वादेरपि (द्वितोऽपि) श्रीशान्तिजिनस्योत्कृष्टकामप्रदतोक्ता. (उत्कृष्टाभीष्टफलदातृत्वमुक्तम्)। स जिनो वीतरागश्चासौ शान्तिस्तदाख्यश्च तीर्थकरो भवतामध्येत्रध्यापकानां श्रिये कल्याणाय, अस्तु स्तात् ॥ १ ॥

કામદેવને જીતનાર એવા, જેના કામધેનુ કલ્પવૃક્ષ અને ચિંતામણિ તથા કામકલશ પ્રતિનિધિઓ છે તેવા શ્રીશાંતિજિન, આપ વાચકોના કલ્યાણ-માટે થાઓ. ॥૧॥

अथ पूर्वसर्गे उपक्षिप्तायाः धनदकथायाः वर्णनाय भूमिकामारचयति—

कः प्रभो ! धनद इत्युदितोऽपि, क्ष्माभुजा मुनिरुवाच तथाहि ।
द्वीपराजविनिवेवितजम्बू—द्वीपचक्रिकमलासुषमाकृत् ॥ २ ॥

क्ष्माभुजा राज्ञा अमिततेजसा, प्रभो ! कः धनदः भवदुक्त इत्युदितोऽपि पृष्टमात्र एव । एतेन कथावर्णने मुनेरुत्साहः सूचितः । मुनिः चारणमुनिः उवाच, किमित्यपेक्षायां निर्दिशति—तथाहि–द्वीपराजेन द्वीपान्तरेण विनिवेवितस्य परिवृतस्य जम्बूद्वीपस्य तदाख्यस्य चक्रिणः चक्रवर्तिनः कमलायाः लक्ष्म्याः सुषमां परमां शोभां करोति सम्पादयतीति तत्, तादृशम्, जम्बूद्वीपलक्ष्मीशोभा–धायकम् । अस्याग्रेतनपत्तनमस्तीत्यनेनान्वयः । स्वागतावृत्तम् । तल्लक्षणं यथा—"स्वागतेति रनभाद् गुरुयुग्मम्" ॥२॥

अस्ति याम्यभरतार्धधरित्री–भामिनीतिलकभूषणरूपम् ।
पत्तनं कनकपत्तनसंज्ञं, साम्पयं बुधजनैरपि वर्ण्यम् ॥३॥

याम्यं भरतस्यार्द्धं दक्षिणार्धभरतं तस्य धरित्री भूमिः सैव रम्यत्वाद् भामिनी स्त्री तस्याः तिलकरूपं यद्भूषणं तद्रूपम्, अत एव वर्ण्यम् प्रशंसनीयम्, बुधजनैः विद्वद्भिः सान्वयं समन्वितम्। यद्वा बुधजनैः वर्ण्यमित्यन्वयः। तथा च सान्वयमित्यस्य अन्वर्थमित्यर्थः। कनकस्य सुवर्णस्य पत्तनम् अत एव तत्संज्ञं तन्नाम, कनकपत्तनेतिनाम पत्तनं नगरमस्ति। "पूः स्त्री पुरीनगर्यौ वा पत्तनं प्रभेदन"मित्यमरः। नगर्यास्तिलकरूपत्वे एव धरित्र्याः भामिनीत्वेन रूपणमिति परम्परित-रूपकालङ्कारः ॥३॥

હે સ્વામી, ધનદ કોણ હતો ? એમ રાજા વડે પૂછાએ છતે મુનિ બોલ્યા જેમકે—

મોટા દ્વીપોથી યુક્ત જંબુદ્વીપનાં ચક્રવર્તીની લક્ષ્મીની શોભા કરનાર દક્ષિણ ભરતાર્ધની ભૂમિરૂપી સ્ત્રીનું તિલક સમાન એવું કનક પત્તન નામે નગર હતું, પંડિતો તેને સુવર્ણનગરીથી ઓળખે છે. ॥૨-૩॥

ईश्वरत्वमनुमापरिभाव्यं, विद्यते धनवतामपि यत्र ।
यद्द्विजिह्वपतिना सह योगो, नार्धचन्द्रपरिशीलनता यत् ॥४॥

यत्र पत्तने, अपिश्चार्थे धनवतां धनिनाम् ईश्वरत्वम् ऐश्वर्यवत्त्वम्, अनुमया अनुमानेन परिभाव्यम् अनुभवनीयम्, न तु साक्षादनुभवनीयम्, अपरिमितत्वेन साक्षात्कर्तुमशक्यत्वादिति भावः। तथा यद् यत्र द्विजिह्वानां पिशुनानां पतिः सूचकश्रेष्ठस्तेन सह योगः सम्बन्धो न धनवता-मिति शेषः। यत्र पिशुना न सन्तीति यावत्। "द्विजिह्वौ सर्पसूचकौ" इत्यमरः। तथा, यद्यस्मात् अर्धचन्द्रस्य गलहस्तस्य परिशीलनं व्यवहारस्तस्य भावस्तत्ता, गलहस्तप्रदानं न। देहलीदीपकन्यायेन नेत्यस्योभयत्राप्यन्वयः। नह्यत्र धनवद्भिर्याचकादीनां गलहस्तो दीयते, सर्वेषां दातृत्वादिगुणयुक्त-त्वादिति भावः। अत्र ईश्वरत्वं महादेवत्वं न उमा पार्वती अनुमा तया परिभाव्यमिति विरोधः। महादेवस्यावश्यमुमापरिभाव्यत्वात् पूर्वोक्तार्थकरणेन तु विरोधपरिहारः। तथा यत्रेश्वरत्वं तस्य ( यस्येश्वरत्वं तस्य ) द्विजिह्वपतिना—सर्पराजेन वासुकिनाऽसह्योगः (वसुकिना सह योगो न) इति विरोधः। ईश्वरेण वासुकेर्भूषणकरणात् तथा अर्धचन्द्रस्य बालचन्द्रस्य परिशीलनता नेति विरोधः। महादेवस्य सदा अर्धचन्द्रधारणात्। पूर्वोक्तार्थकरणेन तु विरोधपरिहारः। एवं चात्राऽपि शब्दाभावेन विरोधाभासोऽलङ्कारो व्यङ्ग्य इति बोध्यम् ॥४॥

જ્યાં ધનવાનોનું ઇશ્વરપણું—ધનાઢ્યપણું અનુમા—અનુમાનથી જાણી શકાય છે. અને (તેઓને) દ્વિજિહ્વપતિ બે જીભથી બોલનારા સાથે સંબંધ નથી ગુણવાન સાથે સંબંધ છે. અને (તેઓને કોઈ માગવા વાળાને) અર્ધચંદ્ર—(બોચી પકડી કાઢવા)નો અભ્યાસ નથી—બધા માંગણને સંતોષે છે બીજો અર્થ ઉમા વિના ઇશ્વર પણું શિવપણું જાણવું વિરુદ્ધ છે. તેમ જ શિવને દ્વિજિહ્વપતિ—શેષનાગ સાથે સંબંધ છે, ને અર્ધ-ચંદ્ર ધારણ કરે છે. તે નહિ હોવું તે વિરુદ્ધ છે. ઉપરોક્ત અર્થથી વિરોધ પરિહાર થાય છે. અથવા જ્યાં ધનવાનોનું ઇશ્વરપણું—શિવપણું અનુમા—ઉમા સિવાય જણાય છે. જેઓને દ્વિજિહ્વપતિ—શેષનાગ સાથે સંબંધ નથી ને જેઓ અર્ધચન્દ્રને ધારણ કરતા નથી. અર્થમાં અવિરોધ છે. વિરોધ પરિહાર જ્યાં ધનવાનોનું ઇશ્વર પણું ધનાઢ્યપણું અનુમા—નુમાનથી જાણી શકાય છે. તેઓને દ્વિજિહ્વપતિ લુચ્ચાઓની સાથે સંબંધ નથી તેઓને કોઇને પણ અર્ધચંદ્ર ગલહત્થા આપવાનો અભ્યાસ નથી. ॥૪॥

तत्र कोऽपि कनकादिरथोऽभू–न्मेदिनीपरिवृढोऽपि शुचिः सः ।
कुर्वता करतले करवालं, कीर्तिरापि युधि येन रिपूणाम् ॥५॥

तत्र कनकपत्तने नगरे, स प्रसिद्धः कोऽपि विलक्षणः शुचिः नीत्याद्याश्रयणेन कृत्वा पवित्रः, मेदिन्याः पृथिव्याः परिवृढः अधिपः महीपतिः, अपिश्चार्थे, कनकादिरथः कनकरथनामा अभूत् । येन कनकरथेन, युधि युद्धे करतले हस्ते करवालमसिं कुर्वता धारयता, रिपूणां शत्रूणां कीर्त्तिः यशः आपि प्रापि । रिपुहननेन तद्यशःप्राप्तिरिति भावः ॥५॥

त्यां पवित्र अने प्रसिद्ध एवो कनकरथ नामे एक राजा हतो, हाथमां तलवार धारण करतां एवा जेणे शत्रुओनी साथे युद्धमां कीर्ति मेळवी हती. ॥५॥

तत्र भूपपरमाभ्युपपत्ते–र्भाजनं सुजनरञ्जनधुर्यः ।
रत्नसार इति नाम महेभ्यः, पावनीकृतमहीतलकीर्त्तिः ॥६॥

तत्र नगरे, भूपस्य कनकरथस्य राज्ञः परमाया उत्कृष्टाया अभ्युपपत्तेः सम्मानस्य भाजनमास्पदम्, सुजनानां रञ्जने प्रीणने धुर्योऽग्रेसरः, पावनीकृतं महीतलं यया सा तादृशी भुवनव्यापिनी कीर्त्तिः यस्य स तादृशः, रत्नसार इति रत्नसारनामा, महेभ्यः श्रेष्ठी, नामेति प्रसिद्धौ, न तु समस्तम्, पुंस्त्वापत्तेः । आसीदिति शेषः ॥६॥

त्यां ज राजाना परम आदरनो पात्र सज्जनोने प्रसन्न राखनार पृथ्वीमां विस्तृत कीर्तिवाळो रत्नसार नामे शेठ हतो. ॥६॥

अथ श्रेष्ठिनमेव विशिनष्टि––

यस्य मानससरस्वति पुण्य–क्षीरनीरनिकरोत्थतरङ्गः ।
खेलति स्म सुतरां जिनहंसो, बुद्धिजातनलिनीवनपूर्णे ॥७॥

यस्य रत्नसारश्रेष्ठिनः, बुद्धिजातः प्रज्ञासमूह एव नलिन्याः कमलिन्याः वनं तेन पूर्णे, बुद्धिकमलाकरे । पुण्यमेव क्षीरं दुग्धं तदेव नीरनिकरः जलराशिः तेनोत्थः उद्भूतः तरङ्गो यत्र तस्मिन् पुण्यक्षीरनीरतरङ्गशालिनि, "मानसं मनः" इति हैमोक्तेः, मानसं मन एव सरस्वान् सागरः तस्मिन् "सरस्वान् सागरोऽर्णवः" इत्यमरः । जिनः अर्हन्नेव हंसः, स, सुतरामत्यन्तं खेलति संचरति स्म । कमलाकरे क्षीरोदधौ हंसक्रीडोचितैवेति भावः । (रूपकालङ्कारः, परम्परितश्च) ॥ ७ ॥

जेना सम्यग्ज्ञानरूपी कमलवनथी पूर्ण एवा मानसरूपी समुद्रमां पुण्यरूपी दूध अने जळसमूहथी थयेला तरंग समान जिनरूपी हंस सारी रीते रमता हता जे बुद्धिमान पुण्यशाळी ते जिन भक्त हतो. ॥७॥

प्रेयसी समभवन्मणिचूला, तस्य पुण्यकलिता सुचरित्रा ।
यां विलोक्य पतिभक्तिसमृद्धां, सा रतिर्न रतिमाप कथञ्चित् ॥८॥

तस्य रत्नसारस्य पुण्येन कलिता युक्ता, सुचरित्रा शीलवती मणिचूला नाम्नी प्रेयसी पत्नी समभवत्, यां मणिचूलां पत्युः भक्त्या समृद्धां गौरववतीं विलोक्य, सा रतिः कामदेवप्रिया, कथञ्चित् कथमपि रतिं प्रीतिं न आप स्वोत्कृष्टपतिभक्तां दृष्ट्वा ईर्ष्यया तस्या अशान्तिः, परोत्कर्षासहिष्णुता स्त्रीषु स्वाभाविकीति भावः ॥ ८ ॥

તેની પુણ્યશાળી અને સચ્ચરિત્ર એવી મણિચૂલા નામે પત્ની હતી. પતિમાં અત્યંત ભક્તિવાળી જેને જોઈને જાણે (તે) રતિ–કામદેવની સ્ત્રી કોઈપણ રીતે સુખ પામતી ન હતી. (રતિ પરપુરુષોને હોવાથી પતિવ્રતા નથી. (એમ સમજી શકાય છે) ॥૮॥

एतयोर्विषयजानुपभोगान्, भुञ्जतोरविरतं क्रमशोऽपि ।
सर्वलक्षणसुलक्षणमूर्त्या, शोभितः समभवत्तनुजन्मा ॥ ६ ॥

क्रमशः अपिश्चार्थे, अविरतं सततम्, विषयजान् लौकिकान्, उपभोगान् सुखानि, उपभुञ्जतोः अनुभवतोः एतयोः रत्नसारमणिचूलयोः सर्वलक्षणेन कृत्वा सुलक्षणा उत्तमलक्षणशालिनी दर्शनीया या मूर्त्तिः स्वरूपं तया, शोभितः तनुजन्मा पुत्रः समभवदजनि ॥ ९ ॥

હંમેશા વિષય સુખ ભોગવતા આ બન્નેને સર્વ લક્ષણ યુક્ત સુંદર સ્વરૂપ વાળો પુત્ર થયો. ॥૯॥

तस्य जन्मदिवसे स महेच्छो, यानि कानि विचिकाय वसूनि ।
तानि दुर्गतगृहेऽपि यदि स्यु–दुर्गतत्वमपि तद् गमयेयुः ॥१०॥

स महेच्छः उदारः, तस्य पुत्रस्य जन्मदिवसे, यानि कानि, वसूनि धनानि विचिकाय संगृहीतवान् वाणिज्यादिनेति भावः । तानि धनानि, यदि दुर्गतस्य दरिद्रस्य गृहेऽपि स्युः भवेयुः, तत्तस्यापि, दुर्गतत्वं दारिद्र्यं गमयेयुः दूरीकुर्युः, तानि वसूनि याचकस्य दीनस्य गृहे दानद्वारा गतानि सन्ति तद्दुर्गतत्वं व्यपाहार्षुरिति यावत् ॥१०॥

મહાન ઇચ્છા વાળો તે શેઠ તેના જન્મ દિવસે જે કાંઈ ધન એકઠું કર્યું તે જો દરિદ્રના ઘરે પણ હોત તો તેનું દારિદ્ર મટાડી નાખત. ॥૧૦॥

द्वादशे समधिजग्मुषि घस्रे, मानितेषु सुजनेषु यथार्हम् ।
आदधे धनद इत्यभिधानं, स्वात्मजस्य जनको महपूर्वम् ॥११॥

द्वादशे घस्रे दिने समधिजग्मुषि सम्प्राप्ते, जनकः पिता रत्नसारः, सुजनेषु मानितेषु सत्कृतेषु सत्सु, मान्यान्सत्कृत्येत्यर्थः । महपूर्वमुत्सवपूर्वकम्, यथार्हम् अनुरूपं स्वात्मजस्य धनद इत्यभिधानम् आदधे कृतवान् ॥११॥

બારમો દિન થયે છતે સજ્જનોનું સન્માન કરવા પૂર્વક તેણે પોતાના પુત્રનું ધનદ એવું નામ રાખ્યું. ॥૧૧॥

बालकः प्रववृधे बहुधात्री–लालितो नवनवैश्च रसौघैः ।
स द्विपत्रितसमुद्गतशाखी–वाङ्गभङ्गिभिरभङ्गुरशाखः ॥१२॥

स बालकः धनदः, नवनवैः नूतनप्रकारैः, रसानां शरीरपोषकद्रव्याणाम् ओघैः समूहैः, पक्षान्तरे नूतनजलधाराभिः, बहुभिः धात्रीभिरुपमातृभिः "धात्री तु स्यादुपमाता" इति हैमः । लालितः सेवितः, अथ च बहु यथास्यात्तथा धात्र्या पृथिव्या "धात्री धरित्री धरणी" इति हैमः । लालितः । अङ्गानामवयवानां भङ्गिभिः रचनाभिः कृत्वा, द्विपत्रं जातमस्येति द्विपत्रितः प्ररूढः यः समुद्गतः उत्पन्नः शाखी वृक्षः, सः, अभङ्गुरा अभग्नाः शाखाः विटपाः यस्य स तादृशः सन्निव, अभङ्गुरदेहावयवविशिष्टः प्रववृधे वर्धते स्म । (श्लेषपुष्ट उपमालङ्कारः) ॥१२॥

અનેક ધાવ માતાઓથી નવા નવા રસોના સમૂહોથી પાલન કરાતો અંગ રચનાથી સરલ શાખા અવનવો વાળો તે બાળક બે પત્ર વાળા (જન્મેલા) વૃક્ષની જેમ વધવા લાગ્યો. ॥૧૨॥

उत्सवेन पितरौ हृदि हृष्टौ, तं कलाविदमवापयतः स्म ।
साक्षिमात्रमुपलभ्य तमुत्कोऽभ्यस्यति स्म स कलाः सकलास्ताः ॥१३॥

हृदि हृष्टौ पितरौ मातापितरौ तं धनदम्, उत्सवेन महपूर्वकम्, कलाविदं पण्डितम् अवापयतः प्रापयतः स्म । स धनदः, तं कलाविदम्, साक्षिमात्रम् । एतेन कलाविदां नात्रायासविशेषः, तस्यालौकिकप्रतिभासम्पन्नत्वादिति सूचितम् । उपलभ्य प्राप्य, उत्कः विद्याध्ययनोत्कण्ठितः, सकलाः समस्ताः, ताः प्रसिद्धाः कला विद्याः, अभ्यस्यति स्म ॥१३॥

મનમાં પ્રસન્ન એવા માતા પિતાએ તેને કલાચાર્ય પાસે ઉત્સવ પૂર્વક મોકલ્યો. તે કલાચાર્ય ઉત્સુક થઈને તે બાળકને સાક્ષામાત્ર રૂપે મેળવી બધી પ્રસિદ્ધ કલાઓ ભણાવી. ॥૧૩॥

कामिनीनयनमत्तचकोर–चक्रचङ्क्रमणयन्त्रणपाशः ।
प्रत्यपद्यत स यौवनमिच्छा–हस्तिनीवनविलासनिवासः ॥१४॥

कामिन्याः स्त्रियाः नयनान्येव सोत्कण्ठत्वाच्चकोरचक्राणि चकोरपक्षिवृन्दानि तेषां चङ्क्रमणे कुटिलक्रमणक्रियायाम् दर्शनीयत्वेन स्थिरतापादकत्वात् यन्त्रणपाशः बन्धनरज्जुरिव, यं दृष्ट्वा स्त्रीणां नयनानि स्थिराणि भवन्तीति यावत् । तथा. इच्छा काम एव हस्तिनीनां वनं समूहः तस्य विलासस्य क्रीडायाः निवासः आस्पदम्, स धनदः यौवनं तारुण्यं प्रत्यपद्यत प्राप्तवान् ॥१४॥

ઈચ્છારૂપી કામરૂપી હસ્તિનીનાં વનવિહારના સ્થાન જેવો ને સ્ત્રીઓના નેત્રરૂપી મત્ત ચકોરના સમૂહને બાંધવામાં બંધન પાશ જેવો કામેચ્છાનો અવસરવાળો ને જેને જોતાં સ્ત્રીઓનાં નેત્રો સ્થિર થઈ જાય એવો તે યૌવનને પામ્યો. ॥૧૪॥

आपणे स निषसाद विषादं, सादयन् पितुरजस्रमितश्च ।
द्यूतकृत् सुकृतकुञ्जरसिंहः, सिंहलोऽत्र नगरे विदितोऽभूत् ॥१५॥

स धनदः पितुः जनकस्य रत्नसारस्य आपणे हट्टे "हट्टो विपणिरापणः" इति हैमः । अजस्रं

सन्ततं विषादं खेदं सादयन् अवगच्छन् निषसाद उपविशति स्म । तारुण्यस्य स्वतन्त्रविहारप्रियत्वा-दापणे तथाकर्तुमशक्यत्वादिति विषाद इति भावः । इतश्च अत्र नगरे कनकपत्तने सुकृतं पुण्यमेव कुञ्जरः गजस्तस्य विनाशकत्वात् सिंह इव, द्यूतकृत् द्यूतव्यसनी, सिंहलस्तन्नामा विदितः प्रसिद्धः अभूदासीत् ॥१५॥

તે પિતાના વિષાદ કામકાજનેથી થતાં ખેદ, થાકને નાશ ઓછો કરતાં દુકાન પર હંમેશા બેસવા લાગ્યો. આ બાજુ આ નગરમાં સદાચારરૂપી હાથીને મારે સિંહ સમાન સિંહલ નામે પ્રસિદ્ધ જુગારિયો રહેતો હતો. ॥૧૫॥

द्यूतमुख्यगहनं व्यसनाना–माकरः स्वपरवञ्चनचुञ्चुः ।
सोऽपि पूःपरिसरे पुरदेव्या, मन्दिरेऽरमत नित्यश एव ॥१६॥

द्यूते मुख्यं प्रधानं गहनं धूर्तः व्यसनानामसदासक्तीनामाकरः निधिः । स्वस्य स्वीयस्य परस्य च वञ्चने चुञ्चुः प्रसिद्धः । स सिंहलः, पूःपरिसरे नगरसीम्नि पुरदेव्याः, मन्दिरेऽपि नित्यशः, अरमत दिव्यति स्म ॥१६॥

જુગાર વિગેરે ઘોર વ્યસનોની ખાણ જેવો પોતાના ને બીજાને ઠગવામાં ખ્યાત એ [illegible] હંમેશા નગરની આગળ નગરદેવીના મંદિરે જુગાર રમતો હતો. ॥૧૬॥

किञ्चनापि न जयत्यपि लाभ–स्यान्तरायकरणेन स जातु ।
सर्वकर्म कुरुतां पुरुषो वा, पुण्यसन्ततिमृते न फलानि ॥१७॥

लाभस्य अन्तरायकरणेन लाभान्तरायकर्मणा स सिंहलः जातु कदाचिदपि, किञ्चनापि न जयति, किन्तु गमयत्येव । ननु नित्यं द्यूतकृतो जयेनावश्यंभाव्यमिति चेत्तत्राह—पुरुषः सर्वं द्यूतादि कर्म वा, कुरुताम्, पुण्यसन्ततिम् पूर्वभवोपार्जितप्रबलपुण्यम् ऋते विना, फलानि लाभादीनि, न भवन्तीति शेषः, अतस्तस्य न कदापि जय इति भावः ॥१७॥

લાભાન્તરાય કર્મ હોવાથી તે કદી કંઈ પણ જીતતો ન હતો પુરુષ બધા કર્મો ભલે કરે પણ પુણ્ય વગર ફળ પામતો નથી. ॥૧૭॥

अन्यदा स दृषदं परिगृह्य,देवतां प्रणिजगाद दुरात्मा ।
त्वामनेन दलितास्मि न चेन्मे, देवि ! देहि विपुलानि धनानि ॥१८॥

अन्यदा स दुरात्मा धनदः, दृषदं पाषाणं परिगृह्य गृहीत्वा, देवतां प्रणिजगादोचे, त्वामनेन पाषाणेन, दलिता भञ्जकोऽस्मि, न चेत्, मे मम, देवि ! विपुलानि धनानि देहि ॥१८॥
એકદિને તે દુષ્ટાત્માએ પત્થર લઈ દેવતાને કીધું કે હું આ પત્થર વડે તને તોડી નાંખીશ નહિતર હે દેવી ! મને ઘણું ધન આપ.

मातुरप्यपहरेत् परिधानं, द्यूतकृज्जगति विश्रुतमेतत् ।
अभ्युपेत्य भयविह्वलचित्ता, देवता प्रवदति स्म तमेवम् ॥१९॥

द्यूतकृत्, मातुः, अपि, अपिना अन्यस्य का कथेति सूच्यते । परिधानं वस्त्रादि, अपहरेत्, लुम्पेत् एतत् जगति विश्रुतं प्रसिद्धम् । इति विचार्येति शेषः । भयेन भङ्गभयेन, विह्वलं व्याकुलं चित्तं यस्याः सा तादृशी, देवता, अभ्युपेत्यागत्य, तं सिंहलम् एवं वक्ष्यमाणप्रकारं वदति स्म ॥१९॥

જુગારિયો માતાના પહેરણનું પણ અપહરણ કરે આ પ્રસિદ્ધ વાતને લક્ષ્ય કરી ભયથી વ્યાકુળ ચિત્તવાળી દેવતાએ તેને એમ કીધું કે ॥૧૯॥

किं जगादेत्याह—

कर्मठं जगति कर्म तदेकं, सर्वकर्मसु निबोध सुबोध ! ।
तद्विलङ्घ्य भवतो वितरीतुं, स्वापतेयमहमस्मि किमीशा ? ।२०॥

सुबोध ! धीमन् ! अनुकूलनाय प्रशस्तं सम्बोधनम्, मूर्खा हि शमसाध्या भवन्तीति न्यायात् ! विपरीतलक्षणया तु दुर्बोध ! इत्यर्थः । जगति, सर्वकर्मसु शुभेष्वशुभेषु च तत्प्रसिद्धं कर्म भाग्यम्, एकं केवलं कर्मठम् फलसाधकम्, तत्कर्म विलङ्घ्य अतिक्रम्य, भवतस्तव, स्वापतेयं धनम् "वित्तं रिक्थं स्वापतेयम्" इति हैमः । वितरीतुं दातुम्, अहं देव्यपि, ईशा समर्था, अस्मि किम् ? नैवेत्यर्थः । भाग्यसम्पन्नं एवाहं निमित्तम्, न तु स्वसामर्थ्येन: किञ्चिदपि दातुं शक्नेति भावः ॥२०॥

હે બુદ્ધિમાન ! સંસારમાં બધા કામોમાં ફક્ત કર્મ જ ફળ આપવા સમર્થ છે. તો તેને ઓળંગીને તને ધન આપવા શું હું સમર્થ છું ? નથી જ. ॥૨૦॥

ननु मम कुतो न तादृशं भाग्यमिति चेत्तत्राह--

अन्तरायमकृथा जनुषि त्वं, प्राचि तेन तव नास्ति धनायः ।
श्लोकपत्रकमिदं मम लात्वा, याहि दास्यति तथापि धनं ते ॥२१॥

त्वं प्राचि पूर्वस्मिन्, जनुषि जन्मनि, अन्तरायं लाभान्तरायाख्यं कर्म, अकृथाः कृतवान्, तेन हेतुना, तव, धनस्य आयः लाभो नास्ति, तथापि देवदर्शनस्यामोघत्वात्, ममेदं श्लोकपत्रकं लात्वा आदाय याहि, ते तव धनं दास्यति, लोकः ॥२१॥

તેં પૂર્વજન્મમાં અન્તરાય કર્મ ઉપાર્જન કર્યું હતું તેથી તને ધનનો લાભ થતો નથી. છતાં મારો આ શ્લોકનો પત્ર લઈને જા તને ધન મળશે ॥૨૧॥

पत्रकं तदुपगृहय च देवी-भाषितं भवति नैव वृथेति ।
आगतः स च चतुष्पथमिभ्यैः, पृच्छयते स्म करपत्रकमूल्यम् ॥२२॥

स सिंहलश्च देवीभाषितं, वृथा निष्फलं नैव भवति इति, विचिन्त्येति शेषः । तद्देवीप्रदत्त पत्रकं पत्रमुपगृह्य गृहीत्वा, चतुष्पथम् आगतश्च, इभ्यैः धनिकैः करस्थितस्य पत्रकस्य मूल्यं पृच्छयते स्म पृष्टम् ॥२२॥

'દેવીનું વચન વ્યર્થ હોય નહિ' એમ માની તે પત્ર લઈ ચોક ઉપર આવ્યો ત્યારે શેઠીઆઓ તેના હાથમાં રહેલા પત્રનું મૂલ્ય પુછવા લાગ્યા. ॥૨૨॥

तद्गिरा प्रणिगदन् स सहस्रं, हस्यते स्म वणिजैरतिवेलम् ।
युक्तिरिक्तमतिरिक्तमविद्वा–नुच्चरन् क इव वा न विहास्यः ॥२३॥

स सिंहलः, तन्मूल्यं सहस्रं गिरा वाण्या प्रणिगदन् कथयन् वणिजैः, अतिवेलमत्यन्तं हस्यते स्म, एतावन्मात्रस्य साधारणस्यैव पत्रस्येयन्मूल्यं किं स्यादित्येवमिति भावः । अतिरिक्तं विशेषमविद्वान् अजानानः, युक्तिरिक्तम् अयुक्तम्, उच्चरन् कथयन् क इव न वा विहास्यः, अपि तु हास्य एव भवतीत्यर्थः ॥२३॥

'तुं शुं कहे छे' એમ તેના વચનથી એક હજાર સોનામહોર મૂલ્ય બોલતા વેપારીઓ ઘણું હસ્યા જે મૂર્ખ અયોગ્ય રીતે અધિક મૂલ્ય કહે તે કોને હાસ્યાસ્પદ ન બને ? બધાને જ બ ે. ॥૨૩॥

पर्यटन्नविकटं प्रतिहट्टं, खिन्न एव धनदाट्टमुपेतः ।
पत्रमूल्यममुनापि स पृष्टः, शिष्टवत् प्रणिजगाद सहस्रम् ॥२४॥

खिन्नः हासाद्धेतोः विक्रयाभावाद्वा ग्लान एव, प्रतिहट्टं प्रत्यापणम्, अविकटं सौकर्येण, पर्यटन् भ्रमन्, धनदस्याट्टं हट्टमुपेतः प्राप्तः, 'अट्टो हट्टः' इति हैमः । अमुना धनदेनापि पत्रमूल्यं पृष्टः सः, शिष्टवत् शिक्षितवत्सहस्रं प्रणिजगाद कथयामास ॥२४॥

તે સહજ રીતે દરેક દૂકાને ઘૂમતો ધનદની દુકાને આવી પહોંચ્યો. તેના વડે પણ પત્રનું મૂલ્ય પૂછાયું ત્યારે તે શિખાઉની જેમ હજાર સોનામહોર પડશે એમ બોલ્યો. ॥૨૪॥

स स्वयं गणकवद्गणयित्वा, सारमस्य विततार ससारः ।
श्लोकनिष्ठमविचार्य तमर्थं, दातुरस्ति यदि वा न विचारः ॥२५॥

स ससारः उत्तमः धनदः श्लोकनिष्ठं तमर्थं वाच्यमविचार्य श्लोकस्य कोऽर्थ इत्यविचार्यैव गणकवत् गणयितृवत् गणयित्वा अस्य सिंहलस्य, कृते इति शेषः । सारं धनं विततार ददौ, "सारो धने" इति मेदिनी । ननु परिचयं विनैव तन्मूल्यदानं मन्दबुद्धिविलसितमेवेति चेत्तत्राह—यदि वा, दातुः विचारः न अस्ति भवति, यो हि क्रयणच्छलेन किञ्चिद्दातुमिच्छति, तस्य वस्तुपरिचयो नावश्यक इति ॥२५॥

ધનવાન એવો તે જોષીની જેમ તે પત્રનો સાર હોતે જ ગણ્યું વિચારીને તે જુગારિયાને ધન આપ્યું કેમકે શ્લોકમાં રહેલ પ્રસિદ્ધ અર્થને વિચાર્યા સિવાય દાતાને આપવાનો વિચાર હોય નહિ. ॥૨૫॥

तत्र यातवति जातविधेये, द्यूतकर्मपरिकर्मविदग्धे ।
बुद्धितर्जितबृहस्पतिरेष, श्लोकमेतमपि वाचयति स्म ॥२६॥

द्यूतकर्मणः द्यूतक्रियायाः परिकर्मणि विधिविधाने विदग्धश्चतुरस्तस्मिन् द्यूतकारे जातं सम्पन्नं विधेयं कार्यं यस्य तस्मिन्, तत्र तस्मिन् सिंहले, यातवति गतवति सति, बुद्ध्या तर्जितः भर्त्सितः बृहस्पतिः येन स तादृशः एव, धनदः एतं क्रीतं श्लोकमपि वाचयति पठति स्म ॥२६॥

તે જુગારના કામમાં ચતુર એવો જુગારિયો પોતાનું કામ થયે ગયે છતે બુદ્ધિથી બૃહસ્પતિને હરાવનાર આ ધનદે તે શ્લોકને વાંચ્યો. ॥૨૬॥

कस्तत्र श्लोक इत्याह—

यद्यदस्ति विधिना लिखितं तत्तन्नृणां परिणमत्यनिवार्यम् ।
इत्यवेत्य मनसैव महान्तः, कातरा न विधुरेऽपि भवन्ति ॥२७॥

विधिना दैवेन यद्यत् लिखितमस्ति ललाट इति शेषः, नृणां तत्तत्, अनिवार्यमवश्यं परिणमति फलति, इतीत्थं मनसा एव अवेत्य ज्ञात्वा, महान्तः मनस्विनः, विधुरे विपद्यपि कष्टसाध्यकार्येऽपि च कातरा अधीरा न भवन्ति, अधैर्येऽपि विधिलिखितस्यावश्यं भावात् धैर्येणैव वर्तन्ते ॥२७॥

વિધાતાએ મનુષ્યને જે કર્મ લખી દીધું છે તે અનિવાર્ય-અવશ્ય ફલિત થાય છે, આમ જાણીને મહાત્માઓ કઠણ સમયમાં પણ મનથી પણ કાયર થતા નથી. ॥૨૭॥

तस्य चिन्तयत एव तदर्थं, चेतसा विदितमर्घ्यमनर्घ्यम् ।
आससाद जनको जनवाक्यै–रापणं व्ययितहेमसहस्रम् ॥२८॥

तस्य धनदस्य, अनर्घ्यममूल्यमत एव अर्घ्यं प्रशस्यम्, विदितं स्वयं ज्ञातं च, तस्य श्लोकस्यार्थं परिचिन्तयतः एव, जनकः तत्पिता जनवाक्यैः जनपरम्पराश्रुततद्वृत्तैः हेतुभिः, व्ययितं हेमसहस्रं यत्र तत्, आपणं विक्रयगृहमाससाद प्राप ॥२८॥

તે ધનદ જ્ઞાત, પ્રશંસનીય અને અમૂલ્ય એવા તે શ્લોકનો અર્થ મનથી વિચારતો છતાં તેનો પિતા લોકવાયકાથી હજાર સોનામહોર ખર્ચનાર પુત્રની દુકાનમાં આવી ગયો. ॥૨૮॥

आः ! किमेतदविचारितमाधा, दुर्मते ! पठितमूर्ख ! विवर्ण ! ।
श्लोककक्रयविधौ ननु तादृ–क्को व्ययीकुरुत एव सहस्रम् ॥२९॥

आः ! सभर्त्सनसम्बोधने, दुर्मते ! पठितमूर्ख ! विवर्ण ! किमेतत्, अविचारितम् आधाः कृतवानसि, श्लोकस्य अल्पस्य असारत्वात्कुत्सितस्य अज्ञातस्य वा श्लोकस्य क्रयविधौ क्रयणे, क एव, ननु, तादृक् तथा, सहस्रं व्ययीकुरुते ? नहि दुर्मतेरन्यः कोऽपि तथा कुर्यादित्यर्थः ॥२९॥

આઃ દુર્બુદ્ધિ ! ભણેલા મૂર્ખ ! બદજાત ! તેં વિચાર્યા વગર જ આ શું કર્યું ? એવો કોણ છે. જે શ્લોક ખરીદવામાં હજાર સોના મહોર ખર્ચી નાખે છે. ॥૨૯॥

त्वं मुखानि मुखराणि खलानां, पश्य हास्यचतुराणि निकामम् ।
तद्विधेयमपि कर्म मनुष्यैः, स्यान्न येन पिशुनस्य हि हास्यम् ॥३०॥

त्वं निकाममत्यन्तं हास्यचतुराणि परिहासपटूनि दुर्जनानां मुखराणि वाचालानि मुखानि,

पश्य कया रीत्या त्वां हसन्ति ? येनैते हसन्ति तथापि मूर्खतया हसेयुस्तेन किम् ? खला इति पश्येति भावः । ननु मया न किमपि दुष्कृतमाचरितम् । एवं च एते हसन्ति तेन किम् ! इति चेत्तत्राह—मनुष्यैः तदपि तदेव, कर्म कार्यं विधेयं कर्त्तव्यं, येन, पिशुनस्य खलस्य हास्यं हसनीयं तत्कर्म, न स्यात्, त्वया तथा कृतं येन ते हसन्तीति भावः ॥३०॥

तुं दुर्जनोना बोलता अने अत्यंत विद्रप हसतां मुख जो, माणुसोए ते काम करवुं के जेनाथी लुच्चाओ हसे नहि. ॥३०॥

निर्विमर्शमथितारणिजात–कोपपावकशिखाज्वलितस्य ।
एवमादिवचनैरपि तस्य, स द्विजिह्ववचनैरिव दूनः ॥३१॥

निर्विमर्शोऽविचारः स एव, मथितः घृष्टः अरणिः निर्मन्थदारु "अरणिर्निर्मन्थदारुणि" इति हैमः । तस्माज्जातः कोप एव पावकाऽग्निः, तस्य शिखया ज्वालया ज्वलितस्य सन्तप्तस्य तस्य स्वपितुः रत्नसारस्य, एवमादिवचनैः पूर्वोक्तप्रकारैरन्यैरपि वचनैः, स धनदः अपि द्विजिह्वानां सूचकानां वचनैरिव दून उपतप्तः "पिशुनः सूचको नीचो द्विजिह्वः" इति हैमः ॥३१॥

आ विचाररूपी मन्थन करायेला अरणी काष्ठथी उत्पन्न थयेल क्रोधरूपी अग्निनी शिखाओथी बळता एवा ते पिताना लुच्चाना के सर्पना वचनो जेवा आवा वचनोथी पीडित थयो. ॥३१॥

अथ दूनस्य तस्य प्रवृत्तिमाह—

मातुरप्यसुखहेतुमनुक्त्वा, तं पराभवमदृष्टचरं सः ।
नक्तमात्मसदनान्निरयासीद्, दुष्करं किमिव तस्य तदेतत् ॥३२॥

स धनदः, असुखस्य दुःखस्य ग्लानिरूपस्य हेतुं कारणम्, अदृष्टचरं पूर्वमननुभूतं तं पराभवं तिरस्कारं मातुरपि अनुक्त्वा, नक्तं रात्रौ 'नक्तमुषा रात्रौ' इति हैमः । आत्मसदनात्स्व-गृहात्, निरयासीत् निःसृतवान् तस्य धनदस्य तदेतत् गृहान्निष्क्रमणं, किं दुष्करमिव ? ग्लानस्य तथाकरणं न दुष्करमिति भावः ॥३२॥

माताने पण दुःख करे एवा ते कदी नहि अनुभवेला अपमानने कह्या विना धनद रात्रे पोताना घरथी निकळीने जतो रह्यो तेना माटे ते कंई दुष्कर न हतुं. ॥३२॥

अथ गृहान्निःसृतस्य तस्य प्रवृत्तिमाह—

उत्तरां ककुभमाश्रयतः स्या–द्भानुमालिन इवाधिकधाम ।
एवमात्महृदये स विचिन्त्या–शोत्तरां सहृदयः प्रचचाल ॥३३॥

उत्तरां ककुभं दिशाम्, आश्रयतः गच्छतः ममेति शेषः, भानुमालिनः सूर्यस्य धाम वर्द्धते इति भावः । अधिकमुत्कृष्टं धाम प्रभावः स्यात् । एवमात्मनः स्वस्य हृदये विचिन्त्य, सहृदयः प्रशस्तचित्तः मनस्वी स धनदः, आशासु दिक्षु उत्तरां दिशं प्रचचाल जगाम ॥३३॥

તે સહૃદય ધનદ ઉત્તર દિશામાં જવાથી સૂર્યની જેમ પ્રતાપની વૃદ્ધિ થશે. એમ પોતાના મનમાં વિચારી ઉત્તર દિશા તરફ ચાલ્યો. ॥૩૩॥

उत्तराशागमने हेत्वन्तरमप्याह—

उत्तराधिपतितां भजतः स्या-द्राजराजपदमित्यवधृत्य ।
श्रेष्ठिसूः स धनदो धनदाशां, प्रास्थित स्थितिविदामवतंसः ॥३४॥

उत्तरस्याः दिशायाः अधिपतितां स्वामित्वम्, ताम् भजतः आश्रयतः, राजराजस्य धनदो राजराजो धनाधिप" इत्यमरवचनाद् धनाधिपस्य कुबेरस्य पदं स्थानं स्यात् । यथा कुबेरस्योत्तराधिपतित्वे राजराजपदं तथेति भावः । इतीत्थमवधृत्य विचार्य, स्थितिविदाम् अवसरज्ञानाम् मर्यादाविदुराणाम् अवतंसः भूषणं श्रेष्ठिसूः स धनदः, धनदस्य धनदेवताकाम आशां दिशं प्रास्थित ॥३४॥

મર્યાદાના જાણકારોનાં શિરોમણિ એવો શ્રેષ્ઠીનો પુત્ર તે ધનદ ઉત્તર દિશામાં અધિક દૂર જવાથી કુબેરની જેમ રાજરાજનુ પદ થાય એમ નિશ્ચય કરી કુબેરની દિશા–ઉત્તર દિશા તરફ ગયો. ॥૩૪॥

अथ तस्य पथि तडागवर्णनं त्रिभिराह--

राजहंस-बक-सारस-चक्र-मुख्यपक्षिकुलतारविरावैः ।
स्वादु-शीतल-सुगन्धिजलानि, वर्णयन्तमिव वार्धिजयाय ॥३५॥

वार्धेः समुद्रस्य जयाय समुद्रं जेतुं, वार्धौ ह्येतादृशसलिलाभावात्, तत्र क्षारस्यैव जलस्य सत्त्वात् तज्जय इति भावः, राजहंसाः बकाः सारसाः चक्राः चक्रवाकाश्च मुख्या येषु तेषां पक्षिणां कुलानां समुदायानां तारैरुच्चैः विरावैः शब्दैः कृत्वा, स्वादूनि मधुराणि शीतलानि सुगन्धीनि च जलानि वर्णयन्तं प्रशंसयन्तमिवेत्युत्प्रेक्षा, तडागमित्यग्रिमेणान्वयः ॥३५॥

पिञ्जराणि सलिलानि जिनाना-माप्लवाय घुसृणैरिव देवैः ।
निर्मितानि दधतं रविरश्मि-बोधिताब्जपतयालुपरागैः ॥३६॥

रवेः सूर्यस्य रश्मिभिः किरणैः बोधितेभ्यः विकासितेभ्यः अब्जेभ्यः कमलेभ्यः पतयालुभिः पतनशीलैः परागैः रजोभिः कृत्वा, एतेनात्र कमलातिशय उक्तः । नह्यल्पकमलपरागेण पिञ्जरतासंभव इति भावः । पिञ्जराणि पिङ्गलानि कपिलानीति यावत् । 'पिञ्जरः कपिलः पिङ्गल' इति हैमः । सलिलानि, जिनानाम् आप्लवाय स्नात्राय, देवैः घुसृणैः कुङ्कुमैः, इव, निर्मितानि संस्कारितानि दधतं बिभ्रतम्, तडागमित्यग्रिमेणान्वयः । ( उत्प्रेक्षालङ्कारः ) ॥३६॥

क्षीरनीरनिधिमानममानं, तर्जयन्तमतिमात्रवितत्या ।
पान्थवर्गहृदयाहितरागं, यत्नसौ पथि ददर्श तडागम् ॥३७॥ (त्रिभिर्विशेषकम्)

अतिमात्रमत्यधिका या विततिः विस्तारः तया कृत्वा, क्षीरनीरनिधिः क्षीरसमुद्रस्तस्य मानं

परिमाणं तर्जयन्तं तिरस्कुर्वन्तम् , पान्थवर्गाणां हृदये आहितः कृतः रागः प्रीतिः येन तं तादृशम् अमानमनुपमं तडागं कासारं "तडागस्यात् कासारः सरसो सरः" इति हैमः पथि मार्गं यन् गच्छन् असौ धनदः ददर्श ॥३७॥

તે ધનદે જતાં જતાં માર્ગમાં તળાવને જોયું જે તળાવ. પોતાના મધુર શીતળ સુગંધિત જળનું રાજહંસ, બક, સારસને ચક્રવાક વિગેરે પક્ષીસમૂહોના ઊંચા શબ્દોથી સમુદ્રવિજયનું જાણે વર્ણન કરતો હતો, તથા જે જિનના અભિષેક માટે દેવોએ કુંમકુંમથી (કેસરથી) પીળું કર્યું હોય નહિ. તેમ સૂર્યના કિરણોથી વિકસિત કરાયેલા કમળોના પડતા પરાગોથી પીળા જળને ધારણ કરતું હતું તથા જે પોતાના અત્યન્ત વિસ્તારથી અપરિમિત એવા ક્ષાર સમુદ્રના પ્રમાણને તુચ્છ કરતો હોય નહિ એવો હતો, તથા જે તે કારણોથી મુસાફરોના હૃદયમા પ્રેમ ઉપજાવતો હતો. ॥૩૫-૩૬-૩૭॥

तं दृष्ट्वा किं कृतवानित्यत आह--

पाणिपादवदनं परिमृज्य, वस्त्रपूतममृतं परिपीय ।
तत्तटे वटतरोस्तल एव, स स्मरंस्तदपि वृत्तमशेत ॥३८॥

पाणी करौ च पादौ च वदनं मुखं च, परिमृज्य प्रक्षाल्य, वस्त्रेण कृत्वा पूतं गालितम् "वस्त्रपूत जलं पिबेत्" इत्युक्तेरिति भावः, अमृतं पयः "पयः कीलालममृतं जीवनं भुवनं वनम्" इत्यमरः । परिपीय पीत्वा, तस्य तडागस्य तटे एव, वटतरोः तले अधः, स धनदः, तत् पूर्वोक्तं वृत्तं पद्यं श्लोकं "वृत्तं पद्ये" इत्यमरः तत पूर्ववृत्तं वृत्तमुदन्तं स्मरन् अशेत शेते स्म ॥३८॥

તે હાથ પગને ધોઇને કપડામાં ગાળીને પાણી પીને તે તળાવમાના કાઠે વડની નીચે તે શ્લોક સંભારતો-સંભારતો સૂઈ ગયો. ॥૩૮॥

अथ तदा सूर्यास्तमाह--

तस्य दुःखमपमेतुमिवासा-वक्षमो दिनपतिर्निपपात ।
अस्तशैलमधिरुह्य तदाब्धौ, क्वौचिती स्खलति धामवतां हि ॥३९॥

तस्य धनदस्य दुःखम् , अपनेतुं दूरीकर्तुम् अक्षमः असमर्थ इव, तदा तस्य शयनकाले, असौ दिनपतिः सूर्यः, अस्तशैलमस्ताचलमधिरुह्याश्रित्य अब्धौ समुद्रे निपपात, हि यतः, धामवतां तेजस्विनाम् , औचिती औचित्यं क्व कुत्र स्खलति ? न कुत्रापीत्यर्थः, अन्योऽपि हि तेजस्विनाम् , परोकारे असमर्थः ग्लानेः पर्वतपतनादि कुर्यात्, अत्र अक्षम इति हेतूत्प्रेक्षाऽप्राणितः सूर्यस्याब्धिपतनातिशयोक्तिः, सा च धामवतामौचिती न स्खलतीत्यर्थान्तरन्यासस्याङ्गमिति सङ्करालङ्कारः ॥३९॥

તે સમયે તેના દુઃખને દૂર કરવાને અસમર્થ હોવાથી જાણે તે સૂર્ય અસ્તાચલ ઉપર જઈ સમુદ્રમાં પડી ગયો. (સૂર્યાસ્ત થઈ ગયો.) કેમકે તેજસ્વીઓ ક્યા ઔચિત્યનો ત્યાગ કરે છે? ક્યાંય નહિ. ॥૩૯॥

अथ तमो वर्णयति--

अस्तभूधरतिरोहितभाना-वन्धकारनिकरः प्रससार ।
एकवर्णपरिमृष्टमशेषं, विष्टपं समजनिष्ट किमन्यत् ॥४०॥

अस्तभूधरेण अस्ताचलेन कृत्वा तिरोहिते दृग्गोचरे भानौ सूर्ये सति, अन्धकारस्य निकरः समूहः प्रससार विसस्तार। अशेषं समस्तं विष्टपं भुवनम् एकेन वर्णेन कृष्णेन परिमृष्टं संस्कृतं सत्, अन्यत् समजनिष्ट । किमित्युत्प्रेक्षायाम्, अन्यदिवाजनीत्यर्थः ॥४०॥

सूर्य अस्ताचल वडे तिरोहित थये छते अन्धकार समूह फेलावया लाग्यो. जाणे एक ज वर्णे बनावेलो लोक उत्पन्न थयो शुं ? ॥४०॥

शुष्कपत्रपरिकल्पिततल्पे, खेदभेदनकृते शयितस्य ।
यावदेव कियती क्षणदाऽगा-त्तत्र तस्य मधुराकृतिभाजः ॥४१॥

तत्र वटतरोस्तले तस्य मधुराकृतिभाजः मनोहररूपस्य धनदस्य, खेदस्याध्वश्रमस्य भेदनकृते परिहाराय शुष्कैः पत्रैः परिकल्पिते निर्मिते तल्पे शय्यायां शयितस्य सुप्तस्य सतः, यावद्यदव्येव कियती क्षणदा रात्रिरगाद्व्यतीयाय । अस्य तावदित्यग्रिमेणान्वयः ॥४१॥

स्कन्धदेशविधृतेषुधिरेकः, पाणिपद्मकृतकार्मुकयष्टिः ।
तावदेव मृगयुः समियाय, नीलनूतनयवाङ्कुरवेषः ॥४२॥

तावत्तदव्येव, एकः, स्कन्धदेशे विधृतः धृतः इषुधिस्तूणीरः येन स तादृशः, तथा, पाणिपद्मे कृता कार्मुकस्य धनुषः यष्टिः येन स तादृशः तथा नीलः नूतनोऽचिरप्ररूढः यो यवाङ्कुरः स इव वेषः यस्य स तादृशः मृगयुः लुब्धकः, समियाय समागतवान् ॥४२॥

त्यां सूकां पांदडांथी बनावेली शय्या उपर थाक दूर करवाने सुतेला ते सौम्यमूर्ति धनदने जेटलामां थोडी रात्री वीति तेटलामां त्यां खांध उपर भाथाने लीधेलो ने हाथमां धनुषबाण धारण करनारो लीला नवा जवना अंकुरा जेवा वेष वाळो व्याध-शीकारी आवी पहोंच्यो. ॥४१-४२॥

नन्वागतः किं चकारेत्याह—

तस्य पार्श्वपरिवर्त्तनजात-मर्मरैर्हरिणसंशयतोऽसौ ।
व्याध एव चरणेऽकरुणस्तं, विध्यति स्म निशितेन शरेण ॥४३॥

तस्य धनदस्य पार्श्वपरिवर्त्तनेन जातैः मर्मरैः पत्रशब्दैः "मर्मरो वस्त्रपर्णादेः" इति हैमः । हरिणस्य संशयतः सन्देहात्, असौ व्याधः अकरुणः निर्दय एव निशितेन तीक्ष्णेन शरेण, तं धनदं चरणे विध्यति स्म ॥४३॥

ते धनदना पडखा फेरववाथी थयेला मर्मर अवाजथी हरणना संदेहथी ते निर्दय व्याधे तीक्ष्ण शरथी ते धनदना पगने वींधी नाख्यो. ॥४३॥

यद्यदेव विधिनेति च जल्प-न्नुत्थितो मृगयुणा धनदोऽपि ।
प्रोच्यतेति भयका हरिणस्य, भ्रान्तिमाश्रितवता निहतस्त्वम् ॥४४॥

यथादेव विधिना इति पूर्वोक्तं श्लोकं जल्पन् च उत्थितः धनदः अपि मृगयुणा व्याधेन इति प्रोच्यत । इतीति किमित्याह—मुग्धका मया, हरिणस्य भ्रान्तिम् आश्रितवता, न तु मनुष्यबुद्ध्या, त्वं विहतः शरेण ताडितः असि ॥४४॥

तत्सहस्व मम मन्तुमसह्यं, सह्यसारनृवरेति निरूप्य ।
पत्त्रिणं स परिगृह्य निवृत्तो-ऽस्रं पदेऽथ निरगाद् बहु चास्य ॥४५॥

तत्तस्माज्ज्ञात्वा अकरणाद्धेतोः, सह्य इव सह्याद्रिरिव, यद्वा सह्यः सहनशीलः सारो बलं यस्य स चासौ नृवरः पुरुषश्रेष्ठश्च तत्संबोधने, मम असह्यं मन्तुमपराधं सहस्व क्षमस्व इति निरूप्य कथयित्वा, पत्त्रिणं बाणं परिगृह्य, स व्याधः निवृत्तः निर्जगाम । अथानन्तरम्, अस्य धनदस्य पदे चरणे, बहु अस्रं शोणितं निरगाच्च बहिर्निर्ययौ । 'लोहितास्ररक्तेत्यमरः' ॥४५॥

"વિધાતાએ જે જે" આમ પૂર્વ શ્લોકનાં અર્થને બોલતા ઊભા થઈ ગયેલા તે ધનદને વ્યાધે કહ્યું કે મેં હરણના ભ્રમથી તને હણ્યો છે. માટે હે સહનશીલ મનુષ્ય શ્રેષ્ઠ તે અસહ્ય એવો મારો અપરાધ ખમો. એમ કહીને બાણ લઈને તે શીકારી પાછો ફર્યો અને તે ધનદના પગમાંથી લોહી નીકળવા લાગ્યું. ॥૪૪-૪૫॥

भादिरुण्डपतगेन स रुण्ड—भ्रान्तिमूलकरणेन तदेषः ।
उन्नमय्य जलधेरपि मध्ये, द्वीपके क्वचिदमोचि जवेन ॥४६॥

तदा स एव तादृशः धनदः भादिरुण्डपतगेन भारुण्डपक्षिणा, रुण्डस्य रक्ताक्तमुण्डस्य भ्रान्तिरेव मूलं तदेव करणं यस्य तेन तादृशेन रुण्डभ्रान्तिमुपागतेन रुण्डभ्रान्त्या वा, उन्नमय्योत्थाप्य, जलधेः मध्ये क्वचिदपि द्वीपके द्वीपे जवेन वेगेन, अमोचि त्यक्तः ॥४६॥

રુંડનું (ભક્ષ્ય) મૃતકના ભ્રમરૂપી મૂળ કારણે ભારુંડ પક્ષીએ તેને ઊંચકી સમુદ્રની વચ્ચે વેગથી કોઈ દ્વીપ ઉપર છોડી દીધો દીધો ॥૪૬॥

सोऽपि तेन पतगेन सजीव, इत्यवेत्य मुमुचे बुभुजे न ।
आससाद च निशाप्यवसानं, प्रीतिभक्तिरिव वाररमण्याः ॥४७॥

स धनदः अपि, तेन भारुण्डनाम्ना पतगेन पक्षिणा, सजीव इति अवेत्य ज्ञात्वा मुमुचे त्यक्तः न बुभुजे भक्षितः । निशा रात्रिरपि, वाररमण्याः वेश्यायाः प्रीतेः प्रेम्णः भक्तिः रचनेव अवसानं विराममासमाद प्राप । वारवधूः पुनः सा वारमुख्या' इति हैमः ॥४७॥

તે પક્ષી પણ સજીવ છે એમ સમજી તેને છોડી દીધો, ખાધો નહિ. અને વેશ્યાની પ્રેમક્રિયાની જેમ રાત્રી પણ પૂરી થઈ ॥૪૭॥

अथ सूर्योदयमाह—

पूर्वपर्वतमहोन्नतसानुं, भानुमान् समधितिष्ठति यावत् ।
अभ्यघानि तिमिरं किरणौघै-स्तावदस्य पुरतः प्रसरद्भिः ॥४८॥

भानुमान् सूर्यः, पूर्वपर्वतस्योदयाचलस्य महोन्नतमत्युच्चं सानुं प्रस्थं यावदेकभागं यावत् अधितिष्ठति समाश्रयति, तावत्, अस्य सूर्यस्य पुरतोऽग्रतः, प्रसरद्भिः विस्तारं गच्छद्भिः, किरणानामोघैः समूहैः, तिमिरं तमः अभ्यघानि विनाशितम् ॥४८॥

જ્યાં સુધી સૂર્ય પૂર્વ ઉદયાચલના મોટા ઉંચા શિખરનો આશ્રય કરે તેટલામાં આગળ ફેલાતા તેના કિરણોના સમુહોએ અન્ધકારનો નાશ કર્યો. ॥૪૮॥

उद्गते बत सहस्रमरीचौ, चक्रवाकशतपत्रदिनानि ।
संमदं कमपि तं दधुरुच्चै–र्बन्धुतैव विदिताऽजनि येन ॥४९॥

सहस्रमरीचौ सूर्ये उद्गते उदयं प्राप्ते, बतेति हर्षे आश्चर्ये वा, चक्रवाकाः शतपत्राणि कमलानि दिनं च, कमपि तमनिर्वचनीयं संमदं हर्षं विकासं रागं वा, उच्चैरत्यन्तं दधुः, येन कृत्वा विदिता प्रसिद्धा, बन्धुता, प्रियत्वम्, अर्थात्सूर्येण सह, अजनि जाता संमदधारणाद्धेतोरेव सूर्यस्य पद्मबन्धु–रित्याद्योऽभिधेयाः, बन्धुवत्सम्मदप्रदत्वादिति भावः ॥४९॥

સૂર્ય ઉદય પામે છતે ચક્રવાક કમલ ને દિન આ બધા તેવા વિલક્ષણ ઉત્તમ હર્ષ પામ્યા કે જેના લીધે તેની સાથે પ્રસિદ્ધ ભાઇબંધી જ થઇ. ॥૪૯॥

भास्करस्य रजनीदयितेन, ज्यौतिषं निरुपपत्तिकमेव ।
मित्रतां वदति तेन मनो मे, न प्रतीतिमपि तस्य विधत्ताम् ॥५०॥

ज्यौतिषं ज्योतिःशास्त्रं, भास्करस्य सूर्यस्य रजनीदयितेन चन्द्रेण निरुपपत्तिकं निर्युक्तिकमेव मित्रतां मित्रभावं वदति कथयति, सूर्योदये चन्द्रस्य क्षयादिति भावः। नहि मित्रं मित्रापकर्षाय कदापि प्रभवतीति ज्यौतिषस्य मित्रताकथनं निर्युक्तिकमेवेति । तेन निर्युक्तिकत्वेन हेतुना, मे मम मनः तस्य* चन्द्रस्य, प्रतीतिम् अनुभवमपि न विधत्ताम् कुरुताम्, सूर्योदये सतीति शेषः। अस्तंगतत्वात्सूर्योदये चन्द्रस्य प्रतीतिरपि नेति भावः ॥५०॥

જ્યોતિષશાસ્ત્ર સૂર્યની સાથે ચંદ્રમાની મિત્રતા યુક્તિ વિના જ કહે છે. તેથી મારૂં મન તેનો વિશ્વાસ કરતો નથી. ॥૫૦॥

मित्रताया निरुपपत्तिकत्वमेवाह—

संपदि श्रयति संपदभाव–मापदि श्रयति चापदभावम् ।
यस्य यः स कथमस्तु सुहृद्वा, सत्यता न गणितागम एव ? ॥५१॥

यः जनः यस्य जनस्य, सम्पदि समृद्धौ सत्याम्, सम्पदः अभावं श्रयति, आपदि च आपदः अभावं श्रयति, स तस्य सुहृन्मित्रं कथमस्तु ? नैव स्यादित्यर्थः। एवं च सूर्योदये चन्द्रापद्, सूर्यापदि चन्द्रोदय इति द्वयोर्न मित्रता संगता । ननु तर्हि गणितागमे कथमेवामुक्तमिति चेदत्राह—वा यद्वा,

* तस्य ज्योतिःशास्त्रस्य प्रतीतिं विश्वासं न विधत्ताम् कुरुताम् ।

गणितागमे ज्योतिःशास्त्रे परमार्थतः सत्यता नैव । एवं च तत्र कल्पनया तथोक्तावपि न क्षतिरिति भावः ॥५१॥

જેની આબાદીમાં બરબાદી થાય, ને જેની બરબાદીમાં જે આબાદ થાય તેનો તે મિત્ર કેમ કહેવાય, માટે ગણિતશાસ્ત્રમાં સત્યતા નથી. ॥૫૧॥

कैरवाण्यपि निशाप्रियबन्धु—भावविश्रुततयैव विरोधम् ।
बिभ्रते तरणिना सह तस्य, नोदये विकसितं यदमीभिः ॥५२॥

कैरवाणि कुमुदान्यपि, निशायाः प्रियश्चन्द्रस्तेन बन्धुभावस्य बन्धुतायाः, चन्द्रस्य कुमुदबन्धुत्वादिति भावः । तथा चामरः—"इन्दुः कुमुदबान्धवः" इति । विश्रुततया प्रसिद्धतया एव हेतुना, तरणिना सूर्येण सह, विरोधं विद्वेषं बिभ्रते धारयन्ति । बन्धुता हि द्वयोस्समशत्रु—मित्रत्व एव निर्वहतीति भावः । ननु कुत एतदवगतम्! तत्राह—यद्यस्मात्, अमीभिः कुमुदैः, तस्य सूर्यस्योदये विकसितं प्रफुल्लं न । यदि हि विरोधो न स्यात्तर्हि चन्द्रस्येव सूर्यस्योदयेऽपि विकसेयुः कुमुदानि न च तानि तदानीं विकसितानीति भावः । अत्राविकसितत्वेन विरोधानुमानादनुमानाऽलङ्कारः, स च विरोधाभावेऽपि तदुक्तेरतिशयोक्त्यङ्गमिति सङ्करः ॥५२॥

સફેદ કુમુદ પણ ચન્દ્ર સાથે ભાઈબંધીને લીધે પ્રસિદ્ધ હોવાથી જ સૂર્ય સાથે વિરોધ રાખે છે તેથી સૂર્યને ઉદય થયે છતે વિકસિત થયા નહીં. ॥૫૨॥

वेधसा कुमुदकोशगतानि, संविधाय तिमिराणि कथञ्चित् ।
रक्षितापि समुदञ्चति भानौ, नास्ति वृद्धिरिह बीजमृते यत् ॥५३॥

वेधसा दैवेन, भानौ सूर्ये समुदञ्चति उदयं गच्छति, तिमिराणि तमांसि, कुमुदानां कोशे गतानि विधाय कृत्वा कथञ्चिन्महता प्रयत्नेन, रक्षितानि पालितानि, ननु वेधसः तादृशक्लेशकरणे को हेतुः, अलं नश्यन्तु तमांसीति चेत्तत्राह—यद्यस्मात्, इह संसारे बीजम् ऋते विना, वृद्धिः पुनरुत्पत्तिर्नास्ति । एवं च यदि वेधास्तथा तमः न रक्षेत्, तदा तमः सबीजं विनश्येदिति अन्धकारात्यन्ताभाव एव स्यात्, न च विधिविधाने सबीजोच्छेदः कस्यापि इति तत्र तद्रक्षितमिति भावः । सूर्योदये कुमुदमुखमुद्रणात्, तत्राशुप्रवेशाभावेन अन्धकारसत्ता तत्रैव, नान्यत्र, सर्वत्र रविकरस्य जागरूकत्वादिति समन्तादालोकः प्रसृतवानित्यर्थः ॥५३॥

સૂર્યોદય થયે છતે વિધાતા કોષ જેવા કોષમાં બીજરૂપે મૂકી કષ્ટથી અંધકારનું રક્ષણ કરે છે. કારણ કે આ સંસારમાં બીજ વગર વૃદ્ધિ નથી. ॥૫૩॥

अथ कमलविकासं श्लोकद्वयेन वर्णयति—

ध्यानमीलितसरोरुहनेत्रा, यामिनीविततयामचतुष्कम् ।
भृङ्गहुङ्कृतिमिषस्मरमन्त्रं, पद्मिनी यदजपद्विजने सा ॥५४॥

तेन पुण्यपरिपाकवशेन, जीवनं विमलमाश्रयमाणा ।
हंसयोगपरभागनिमित्तं, सा परां सपदि निर्वृतिमाप ॥५५॥ (युग्मम्।)

सा प्रसिद्धा पद्मिनी कमलिनी विजने जनरहिते तडागादौ, ध्यानेन मीलितं मुद्रितं सरोरुहं कमलमेव नेत्रं यस्याः तादृशी सती, यामिन्याः रात्रेः विततं विस्तृतं यद्यामानां प्रहराणां चतुष्कं चतुष्टयं तद्यावत्, भृङ्गस्य भ्रमरस्य या हुङ्कृतिः गुञ्जनं रात्रौ कमलमुखमुद्रेण भ्रमरस्य तत्र विहितत्वाद्‌गुञ्जनाच्चेति भावः। सैव मिषं व्याजस्तेन स्मरस्य मन्त्रं यद्यस्मात् अजपत् जपति स्म। तेन हेतुना पुण्यस्य जपजन्यपुण्यस्य यः परिपाकः फलप्रदानाभिमुख्यं तद्वशेन, विमलं निर्मलम् अथ च रागादिमलरहितं जीवनं जलम्। अथ च प्राणान् सूर्योदये जलस्य नैर्मल्यादिति भावः। आश्रयमाणा धार्यमाणा सा पद्मिनी, हंसेन तदाख्यपक्षिणा, यद्वा हंसस्य, तदाख्यपक्षिणः, अथ चात्मनः, यः योगः संयोगः। अथ च साक्षात्कारः, सूर्योदये हंसस्य कमलाकरे आगमनादिति भावः स एव परभागः अनुत्तमभाग्यम्, तन्निमित्तं सपदि, परामुत्कृष्टा निर्वृतिं सुखं विकासमिति यावत्। अथ च निर्वाणम् आप प्राप। कमलानि विकसितानि हंसाश्च तत्र समागताः इत्यर्थः। अन्योऽपि हि ध्यानस्थः रात्रौ विजने मन्त्रं जप्त्वा पुण्यतः, रागादिरहितः सन् आत्मसाक्षात्कारान्मुक्तिमाप्नोति। एवं चात्र हंसादिश्लिष्टनेत्रादिरूपितविशेषणमहिम्ना कमलिन्यां मुनिव्यवहारसमारोपात्समासोक्त्यलङ्कारः ॥ ५४। ५५ ॥

કમલિની એકાન્તમા ધ્યાનથી જાણે મિચાયેલા કમલરૂપી નેત્ર વાળી થઈ રાતના લાંબા ચાર પહોર સુધી ભમરાઓના ગુંજારવના બહાનાથી કામદેવના મંત્રના જપને કરતી હતી. ॥૫૪॥

તે પુણ્યના ઉદયના લીધે નિર્મલ જળને આશ્રય કરતી હંસ સાથે સંબંધ રૂપી ઉત્કૃષ્ટ ક્રિયાના કારણે તત્કાલ પરમ સુખને પામી (કોઈ જીવ આખી રાત આંખો મીંચીને ધ્યાનપૂર્વક મંત્ર જપે છે. ને પુણ્ય બળે શુદ્ધ જીવ થવાથી પરમ ગુરુ મલવાથી મોક્ષ પામે છે? તે વાત કમલને વિષે ઘટાવાઈ છે જીવન પાણી, જીવ, હંસપક્ષી પરમહંસ ગુરુ નિર્વૃત્તિ સુખ, મોક્ષ) ॥૫૫॥

अथ धनदप्रवृत्तिमाह—

भास्करं समुदितं समवेक्ष्य, रत्नसारतनयः समुदस्थात् ।
पादपावलिसमाकुलमेकं, काननं च समवेक्षत शून्यम् ॥५६॥

भास्करं सूर्यं समुदितं उदयप्राप्तं समवेक्ष्य विलोक्य, रत्नसारतनयः धनदः, समुदस्थात् उत्थितवान्। पादपानां वृक्षाणामावलिभिः पङ्क्तिभिः समाकुलं व्याप्तम्, एकं शून्यं विजनं काननं वनं च समवेक्षत, चेन तदुत्थानदर्शनयोरेककालता सूचिता ॥५६॥

રત્નસારનો પુત્ર ધનદ સૂર્યને ઉગેલો જોઈ ઊઠયો ને વૃક્ષોના સમૂહોથી ગીચ એવું એક શૂન્ય વન જોયું. ॥૫૬॥

वारिराशिपुलिने विपुलेऽसौ, सञ्चरंश्चरणचारितयैव ।
शून्यपत्तनसमीपमुपेतः, कूपकं मधुरवारिमदर्शत् ॥५७॥

असौ धनदः विपुले विशाले वारिराशेः समुद्रस्य पुलिने सैकते 'पुलिनं तज्जलोज्झितं सैकतम्' इति हैमः । वालुप्रचुरस्थाने तटे इत्यर्थः । चरणेन या चारिता चलनं तयैव, पदगत्यैव, पदातिरेवेत्यर्थः । संचरन् अटन् शून्यस्य विजनस्य पत्तनस्य नगरस्य समीपम् उपेतः प्राप्तः सन् मधुरं स्वादु वारि जलं यस्मिन् तत् कूपकमल्पकूपमदर्शत् अवलोकितवान् ॥५७॥

तथावने કાંઠે વિશાલ પથરાયેલી રેતી પર પગે ચાલતો એક શૂન્ય નગરની પાસે પહોંચ્યો ને મધુર પાણી વાળો કુવો જોયો. ॥૫૭॥

तत्र पत्रपुटकं परिमाय, वल्लरीततरज्जुभिरेषः ।
सन्निकृष्य सलिलं परिपीय, प्राणवृत्तिमकरोत् फलपुष्पैः ॥५८॥

तत्र एषः धनदः पत्रस्य पुटकं परिमाय निर्माय, वल्लर्यः लता एव वितताः दीर्घा रज्जवः, यद्वा वल्लरीणां लतानां वितताः दीर्घा रज्जवः ताभिः कृत्वा, सलिलं जलं सन्निकृष्य आकृष्य भरित्वा, परिपीय पीत्वा च, फलपुष्पैः, प्राणवृत्तिमाजीविकामकरोत्, फलपुष्पाणि भक्षयित्वा जीवनयापनमकरोदित्यर्थः ॥५८॥

तेणे त्यां पांदडांनो पडीयो बनावी वेलडीयोनी लांबी दोरीथी पाणी काढी पीने फलफूलो खाईने प्राणनी रक्षा करी. ॥૫૮॥

अस्तमीयुषि पुनर्दिनराजे, भूधरप्रवरपादतटस्थः ।
जाड्यपातचकितः शमिकाष्ठै-राशुशुक्षणिमतीतपदेषः ॥५९॥

पुनः दिनराजे सूर्ये अस्तम् ईयुषि गतवति सति, भूधरस्य पर्वतस्य प्रवरस्योत्तमस्य पादस्य प्रत्यन्तपर्वतस्य "पादाः प्रत्यन्तपर्वताः" इत्यमरः । तटे तिष्ठतीति स तादृशः, एषः धनदः जाड्यस्य हिमस्य पातेन, 'शीतलो जडो हिमः, इति हैमः । चकितः आकुलः सन्, शमिकाष्ठैः, तस्याग्निभूयिष्ठत्वात्तत: अग्निमुत्पाद्य, आशुशुक्षणिमग्निमतीतपत्, तपति स्म ॥५९॥

फरी सूर्य अस्त थये छते पर्वतना सारा पगथारे रहेला तेणे ठंडी पडवाथी चकित थईने शमीना लाकडाथी, अग्नि सळगाव्यो. ॥૫૯॥

इत्थमेष रजनीमतिवाह्य, प्रातरेव वसुधां शिखिदग्धाम् ।
आत्यकाञ्चनमयां समवेक्ष्य, चेतसेति परिचिन्तयति स्म ॥६०॥

इत्थमुक्तप्रकारेण, एष धनदः, रजनीं रात्रिमतिवाह्य व्यतीत्य, प्रातः एव, शिखिनाऽग्निना दग्धां वसुधां भूमिम्, आत्यकाञ्चनमयीमुत्कृष्टकाञ्चनरूपां समवेक्ष्य, चेतसा इति वक्ष्यमाणप्रकारं परिचिन्तयति स्म ॥६०॥

आम रात्रिने पसार करीने ते सवारे अग्निथी बळेली भूमिने उत्तम सुवर्णमय जोई मनमां विचार लाग्यो. ॥૬૦॥

तच्चिन्तामेवाह—

नूनमेव कनकाङ्कितनामा, द्वीप एव भविता यदिला स्यात् ।
स्वर्णमग्निसमवायमवाप्य, तत्करोमि कनकं किमपीह ॥६१॥

नूनं निश्चितम् एव द्वीपः, कनकाङ्कितं कनकयुक्तं नाम यस्य स तादृशः कनकद्वीपः रत्नद्वीप एव, अयमयं भविता भविष्यति । यदस्य द्वीपस्य, इला पृथिवी अग्निना समवायं संयोगम् अवाप्य स्वर्णं स्यात्, तत्तस्मादिह भूमौ, किमपि कियन्मात्रं कनकं करोमि ॥६१॥

નક્કી આ કનક દ્વીપ છે. કેમકે ત્યાં જ અગ્નિના સંયોગે ભૂમિ સુવર્ણમય થાય, તેથી આ સુવર્ણનું કાંઈક કરવું જોઈએ. ॥૬૧॥

इत्युदारमतिरेष विमृश्य, मृत्तिकाभिरवनेरपि तस्याः ।
इष्टका व्यतत संपुटरूपाः, स्वीयनामकलिता ललिताशः ॥६२॥

इति पूर्वोक्तप्रकारं विमृश्य विचार्य एष धनदः, ललिता मनोहरा आशा यस्य स तादृशः उत्कृष्टाशयः, तस्याः अपि एव, अवनेः भूमेः, मृत्तिकाभिः, स्वीयनाम्ना कलिताः युक्ताः, संपुटमिव रूपमाकृतिर्यस्यास्सा तादृशी लम्बचतुरस्रा इष्टकाः व्यतत विरचितवान् ॥६२॥

ઉદાર બુદ્ધિ વાળો તે શુભ ઇચ્છાથી એમ વિચારી તે ભૂમિની માટીથી પોતાના નામથી યુક્ત એવા સંપૂટ રૂપે ઇંટો બનાવી. ॥૬૨॥

दारुभारखचिते ज्वलनेऽथ, प्रज्वलत्यपि धृताः कनकस्य ।
भावमेव दधति स्म ततोऽन्धोः, सन्निधौ बुधवरो व्यमुचत्ताः ॥६३॥

अथान्तरम्, दारूणां काष्ठानां भारेण खचिते समन्विते अत एव प्रज्वलति, अप्येव, ज्वलनेऽग्नौ धृताः निक्षिप्ताः ताः इष्टकाः, कनकस्यैव भावं धर्मं दधति स्म, ततः बुधवरः धीमान् धनदः, ताः कनकीभूता इष्टकाः, अन्धोः कूपस्य "पुंस्येवान्धुः प्रहिः कूपः" इत्यमरः । सन्निधौ, व्यमुचत् निहितवान् ॥६३॥

લાકડાના ઢગલાઓથી ભરેલા બળતા અગ્નિમાં મુકાયેલી તે ઇંટો સોનાની થઇ ગઇ પછી તે બુદ્ધિમાને તે ઇંટોને કુવાની પાસે રાખી. ॥૬૩॥

भ्राम्यता क्वचन तेन च रत्ना—न्यापिरे जलनिधेरपि तानि ।
कूपसन्निविधृतार्जुनहारा—ऽभ्यासके निदधिरे रुचिराणि ॥६४॥

क्वचन कुत्रापि भ्राम्यता संचरता तेन धनदेन, जलनिधेरपि रत्नानि आपिरे प्राप्तानि, रुचिराणि उत्तमानि तानि रत्नानि, कूपस्य सन्निधौ धृतानां स्थापितानां अर्जुनानां कनकानां हारस्य पङ्क्तेरभ्यासके समीपे निदधिरे रक्षितानि च ॥६४॥

અને ભમતા તેને સમુદ્રનાં પ્રસિદ્ધ ઉત્તમ રત્નો મળ્યા. તે પણ કૂવા પાસે નાના ઢગલાઓ બનાવી રાખ્યા. ॥૬૪॥

अन्यदा प्रवहणादवतीर्णैः, पोतवाणिजसुदत्तनरैस्तम् ।
द्वीपमेव सलिलार्थमुपेतैः, पृच्छयते स्म सलिलाशय एषः ॥६५॥

अन्यदा एकदा तं द्वीपं रत्नद्वीपं सलिलार्थम् उपेतैः प्राप्तैः, प्रवहणात्पोतादवतीर्णैः पोतवाणिजस्य पोताधिपतेस्सुदत्तस्य नरैः, एष धनद एव सलिलाशयः जलाशयः पृच्छयते स्म। क्वास्ति सलिलाशय इत्येवमिति ॥६५॥

એક દિને વહાણથી ઉતરેલા પાણી માટે દ્વીપ પર આવેલા વહાણ વેપારી સુદત્તના માણસોએ તેને જલ-સ્થલ માટે પૂછ્યું. ॥૬૫॥

तेन तूर्णमुपदर्शितकूपे, वारि लाद्भिरथ तैस्तट एव ।
वीक्ष्य रत्नकनकैष्टकभारः, कस्य चेति धनदोऽप्यनुयुक्तः ॥६६॥

अथानन्तरम्, तेन धनदेन, उपदर्शितकूपे, तूर्णं शीघ्रं जलं लाद्भिः गृह्णद्भिः तैः पुरुषैः तटे कूपतटे एव, वीक्ष्य कनकाद्यवलोक्य, कस्य रत्नस्य कनकेष्टकस्य च भारः समूहः इतीत्थं च, धनदः अप्येषः अनुयुक्तः पृष्टः ॥६६॥

તે ધનદ વડે કાંઠે જ તરત જ બતાવાયેલા કૂવામાં પાણી લેતા તેઓએ રત્નને સોનાની ઇંટોના ઢગલા જોઈ 'કોના આ છે' એમ ધનદને પૂછ્યું ॥૬૬॥

स्वर्णमेतदपि मे खलु तस्मै, तुर्यभागमहमेव ददामि ।
यस्तु मां नयति रोधसि वार्धे-रित्यभण्यत नरान्प्रति तेन ॥६७॥

एतदपि स्वर्णं मे मम, खल्विति निश्चये, यस्तु मां वार्धेः सागरस्य रोधसि परे तीरे "कूलं रोधश्च तीरं प्रतीरं तटं त्रिषु" इत्यमरः। नयति प्रापयति, तस्मै अहं तुर्यं चतुर्थं भागं ददाम्येव; इतीत्थं तेन धनदेन, नरान् प्रति अभण्यताकथ्यत ॥६७॥

તે ધનદે કહ્યું કે આ સોનું મારું જ છે. જે મને સમુદ્રને કાંઠે લઈ જશે તેને હું ચોથો ભાગ આપીશ. ॥૬૭॥

तद्वचोऽनुगमुखेन सुदत्त-स्तद्यथास्थितमसौ प्रतिपद्य ।
स्वर्णलोलुपतया निजभृत्यैः, कैतवेन तमपीपतदन्धौ ॥६८॥

तत्तदनन्तरम्, अनुगानां भृत्यानां मुखेन, यथास्थितं यथार्थं तस्य धनदस्य वचः प्रतिपद्य निश्चित्य स्वर्णलोलुपतया लुब्धतया हेतुना, असौ सुदत्तः पोतवणिक्; कैतवेन कपटेन; निजभृत्यैः प्रयोज्यकर्तृभिः तं धनदम्, अन्धौ कूपे अपीपतत् पातयति स्म ॥६८॥

सुदत्ते पोताना नोकरोना मोढेथी ते वात जेम कही हती तेम स्वीकारी, सोनाना लोभथी छळथी पोताना माणसो द्वारा धनदने कुवामां नंखावी दीधो. ॥६८॥

धर्ममेव जनकं प्रणिहन्ति, क्षुद्रसंश्रयतया परिभूय ।
यः कृपामपि निजां जनयित्रीं, तं स्तुवन्ति सुधियः कथमर्थम् ? ॥६९॥

यः अर्थः क्षुद्रस्य नीचस्य संश्रयतया आश्रयणाद्धेतोः, नीचपुरुषहस्तगतः सन्नित्यर्थः, परिभूय पराभवं प्रापय्य अन्तर्भूतण्यन्तत्वात् धर्मं जनकम् उत्पादकमेव, कृपां दयां निजां जनयित्रीं मातरमपि, धर्मदयाभ्यां जनस्यार्थोत्पत्तेरिति भावः । प्रणिहन्ति नाशयति, धनम्, सुधियः कथं स्तुवन्ति ? नैव स्तोतव्यमित्यर्थः । नहि मातृहा पितृहा च कदाचिदपि स्तुतियोग्य इति भावः ॥६९॥

जे धन ! क्षुद्र माणुसोने आश्रय पामी पोताने उत्पन्न करनार एवा पिता धर्मने अने जन्म आपनारी माता दयाने ज पराभव आपी नाश करे छे. विद्वानो ते धनना प्रशंसा केम करे ? न करे ! ॥६९॥

नीरमध्यपतितच्छदनान्तः—पाततो निधनमाप न चायम् ।
ना न मृत्युमधियाति हि दैवे, संप्रसेदुषि पतत्यपि वज्रे ॥७०॥

अयं धनदः, नीरस्य जलस्य मध्येऽन्तःपतितानां छदनानां वृक्षपत्राणामन्तः मध्ये पाततः पतनाद्धेतोः निधनं मृत्युं न च आप । छदनानां कोमलतया तत्र पतनेऽपि अधिकाघाताभावादिति भावः । "पत्रं पलाशं छदनं" इति हैमः । नन्वत्युच्चैः पतितस्य जीवनमाश्चर्यमेव । किञ्च किमिति छदनेष्वेवापतन्नान्यत्रेति चेत्तत्राह । दैवे विधौ सम्प्रसेदुषि प्रसन्ने सति, वज्रे अपि पतति सति, किमुतान्यत्र, ना मनुष्यः, मृत्युं न अधियाति प्राप्नोति, दैवं हि सर्वत्र तं रक्षति, अत एव छदनेष्वेव तत्पात इत्यर्थः ॥७०॥

पाणी वच्चे पडेला पांदडाओमां पडवाथी ते धनद मृत्यु पाम्यो नहि, बची गयो. जो भाग्य अनुकूळ होय तो वज्र पडता छतां मनुष्य मृत्यु पामतो नथी. ॥७०॥

रत्नहेमनिकरं स सुदत्तः, सर्वमेव परिगृह्य जगाम ।
अन्तरीपमपरं न परस्व-ग्राहिणां क्वचन जातु समाधिः ॥७१॥

स सुदत्तः तन्नामा पोतवणिक्, सर्वमेव, न तु किमप्यवशेषितम्, रत्नहेम्नां निकरं राशिं परिगृह्य, अपरम् अन्तरीपं द्वीपं जगाम । ननु पूर्णधनलाभात् किमिति तत्रैव न स्थितवानित्यत आह— परस्य स्वस्य धनस्य ग्राहिणामपहारिणाम् "स्वो ज्ञातावात्मनि धने स्वम्" इत्यमरः । क्वचन कुत्रापि जातु कदाचिदपि, समाधिः स्थिरता न । परस्वहारिणां स्वस्वहरणस्याप्यन्यतो भयादिति भावः ॥७१॥

ते सुदत्त बधा रत्नने सोनाना ढगला लई बीजा द्वीपमां जतो रह्यो केमके पारका धननुं अपहरण करवा वाळाने क्यांय कदी चेन होतुं नथी. ॥७१॥

इत्थसंभ्रतमसावपि चार्थ, चिन्तयन्नवटभित्तितटान्तः ।
द्वारमक्षिपथमाप्य तृणौघै-र्मन्दमन्दमविशत् पिहितं तत् ॥७२॥

असौ धनदोऽपि च वृत्तसंगतम् "यथैव विधिना लिखितम्" इत्यादि पूर्वश्लोकार्थं चिन्तयन् "गर्त्तोऽवटौ भुवि श्वभ्रे" इत्यमरोक्तेः अवटस्य गर्त्तस्य भित्तितटस्यान्तर्मध्ये, द्वारमक्षिपथमाप्य दृष्ट्वा, तृणौघैः तृणसमूहैः पिहितमाच्छादितं तद् द्वारं मन्दमन्दम् अविशत् प्रविशति स्म ॥७२॥

ते धनद पण अवसरोचित वात विचारतो विचारतो कुवानी भींतनी अंदर द्वारने जोई घास ढंकायेला तेमां धीमे धीमे पेठ्यो. ॥७२॥

ग्रावबद्धपदमानपदव्या, सोऽवतीर्य शनकैरपि तत्र ।
शून्यपत्तनमवैक्षत रम्यं, देवसद्मसुषमारमणीयम् ॥७३॥

स धनदः, ग्राव्णा पाषाणेन बद्धया, पदमात्रं मानं परिमाणं यस्यास्तया पदव्या पथा, शनकैः शनैः अवतीर्य, तत्रापि देवसद्मनः देववेश्मनः "वेश्म सद्म निकेतनमित्यमरः । सुषमा इत्र सुषमा अतिशायिनी शोभा "सुषमा साऽतिशायिनी" इति हैमः, तया रमणीयमतः स्वर्गस्य सुषमा परमशोभेव रमणीयमत एव रम्यं शून्यं विजनं पत्तनं नगरमवैक्षत ॥७३॥

पत्थरथी बंधायेला पग प्रमाण मार्गे ते धीमेथी नीकळी त्यां देव भवननी परमशोभाथी शोभतो एवुं रम्य शून्य नगरने जोयुं. ॥७३॥

चित्तरागसुपरागसमेते, चारुचित्रमकरन्दरसाढ्ये ।
पुण्डरीकमनुकुर्वति लक्ष्म्या, यत्र दृष्टिमधुपी विनिविष्टा ॥७४॥

उपरागेण रञ्जनद्रव्येण समेते युक्ते, अथ च उ इति वितर्के, परागेण रजसा समेते, चारुचित्राणि एव मकरन्दरसः तेन आढ्ये समन्विते पूर्णे वा, लक्ष्म्या शोभया, पुण्डरीकं कमलम्, अनुकुर्वति सदृशे, यत्र पत्तने दृष्टिरेव मधुपी भ्रमराङ्गना सा उपविष्टा लग्ना अत एव चित्तरागं चित्तस्य राग आसक्तिः प्रीतिर्वा यतस्तत्तादृशम्, पत्तनमिति पूर्वेणान्वयः । (रूपकश्लेषानुप्राणितोपमालङ्कारः) ॥७४॥

कालिमानमपनेतुमिवान्तः–स्थायिनं कलयितुं स्थिरतां वा ।
ईदृशं क्वचन किञ्चन रम्यं, नात्र भावि वसुधासरसीह ॥७५॥

पुण्यमन्त्रपरिपाकवशेन, स्तम्भिता निगडिता किमु बद्धा ।
कुर्वती मतिमतामिति तर्कं, नेहते स्म परमीक्षितुमेव ॥७६॥ (त्रिभिर्विशेषकम्)

यत्र विनिविष्टा दृष्टिमधुपी, अन्तःस्थायिनं कनीनिकागतं कालिमानं कृष्णताम् अपनेतुं दूरीकर्तुमिव स्थिरतां वा कलयितुं प्राप्तुमिव, दृष्टेः स्वभावतश्चञ्चलत्वादिति भावः । कृष्णतायाः अपनयनं पत्तनरागासङ्गात्, स्थिरताया आकलनं च तदधिकदर्शनीयवस्त्वन्तराभावादिति भावः । अत्र इह वसुधारूपे सरसि तडागे, क्वचन कुत्रापि, ईदृशम् रम्यं किञ्चन किमपि, न भावि संभवि, इतीति शेषः ॥७५॥ पुण्यस्य पुण्यजनकस्य पवित्रस्य मन्त्रस्य परिपाकः परिणामस्तद्वशेन स्तम्भिता निगडिता शृङ्खलिता, किमु वितर्के किमु-किम्, बद्धा नियन्त्रिता ? इति इत्थं मतिमतां

तर्कं कुर्वती समुत्पादयन्ती परमन्यत् वीक्षितुं न ईहते स्म चेष्टते स्म, तत्पत्तनं दृष्ट्वा निर्निमेषा स्थिरा च दृष्टिर्जातेति भावः ॥७६॥

સુંદર ચિત્રરૂપી મકરંદ રસથી સમૃદ્ધ, મનને રાગ નિપજાવે એવા રંગોથી યુક્ત શોભાથી કમલનું અનુકરણ કરતા એવા જે નગરમા પોતાની કાલાશને દૂર કરવાને અથવા તેમાં રહેલી સ્થિરતાને લેવાને બેઠેલો-લાગી ગયેલો નેત્રરૂપ ભ્રમર આ પૃથ્વી રૂપી તલાવમાં ક્યાંય કંઈ પણ આવું સુંદર હશે નહિ. આવા પવિત્ર પુણ્ય મંત્રના ઉદયથી થંભી ગયો કે સાંકળી દેવાયો કે બંધાયો શું ! આમ તર્ક બુદ્ધિમાનોને કરાવતો બીજું કાંઈ પણ જોવા ઇચ્છતો જ ન હતો, ॥૭૪-૭૫-૭૬॥

एष वीक्ष्य तदवीक्षितपूर्वं, संमतस्फुरितदृग् हृदि दध्यौ ।
पुण्यबद्धमनसां पुरुषाणां, राशिरेष यशसां किमुदीर्णः ? ॥७७॥

एष धनदः अवीक्षितपूर्वम् अदृष्टपूर्वं तत्पत्तनं वीक्ष्य, संमदेन हर्षेण स्फुरिता विस्फारिता दृग् यस्य स तादृशः उत्फुल्ललोचनः सन् हृदि दध्यौ । किमित्याह—एष पुण्ये बद्धमासक्तं मनः येषां तेषां पुण्यानुरागिणां पुरुषाणां सम्बन्धिनां यशसां कीर्तीनां राशिः समूहः उदीर्णः उद्भूतः किमिति वितर्के । (उत्प्रेक्षा) ॥ ७७ ॥

તે ધનદ પૂર્વે નહિ જોએલા એવા તે નગરને જોઈ હર્ષથી ફરકતા નેત્રવાલો છતો મનમાં વિચારવા લાગ્યો કે પુણ્યમા લાગેલા મનવાળા પુરુષોનો યશોપુંજ આ ઉગ્યો કે શું ? ॥૭૭॥

शारदाभ्रनिकरानवलम्बे, व्योमनि स्थितिविधावसमर्थः ।
भूमिमण्डलगतः किमयं वा, कौमुदीसमुदयः किमुदञ्चन् ॥७८॥

अयं पुरो दृश्यमानः पदार्थः "चन्द्रिका कौमुदी ज्योत्स्ना" इत्यमरोक्तेः कौमुदीनां चन्द्रिकाणां समुदयः राशिः, उदञ्चन् उपरि गच्छन्, भूमिमण्डलं पृथ्वीतलं गतोऽवतीर्णः, किमिति वितर्के । ननु तस्य भूमिमण्डलगतत्वसम्भावना न युज्यते, सर्वदा आकाशगतत्वादिति चेत्तत्राह—वा अथवा, शारदाभ्राणां शरन्मेघानां निकरेण समूहेन अनवलम्बे अनाश्रिते, शून्ये इति यावत् । व्योमनि आकाशे, स्थितिविधौ अवस्थाने असमर्थः किम् वितर्के । शारदाभ्रसत्त्वे तु तस्याधारत्वं कथञ्चित्कल्पयितुं शक्यं तच्छून्ये तु निर्मले व्योम्नि क्व स तिष्ठतामिति भूमिमण्डलगत इति संभाव्यते इति भावः । निर्मलाम्बरशरज्ज्योत्स्नेव भासमानं तत्पत्तनमिति साराथः । उत्प्रेक्षालङ्कारः स्पष्ट एव ॥७८॥

શરદઋતુનાં વાદળાઓને જે આશ્રય ન થઇ શક્યો. અથવા તે વાદળાઓ હોવાને લીધે આશ્રય ન થઈ શકે એવા આકાશમા રહેવામા અસમર્થ થઇને પૃથ્વી ઉપર આવેલો ચંદ્રકિરણોનો સમૂહ ઉપર ઉડે છે શું ? ॥૭૮॥

चिन्तयन्निति मण्डपमाप–तत्र च स्थितिमयं विदधानः ।
सुप्रभावविदितामथ चक्रेड्–देवतां नयनमार्गमनैषीत् ॥७९॥

इति पूर्वोक्तप्रकारेण चिन्तयन् स धनदः मण्डपं देवालयमण्डपम् आपत्प्रापत्। अथानन्तरम् तत्र मण्डपे स्थितिं विदधानः आश्रयाश्रयं च सुप्रभावेणोत्कृष्टसामर्थ्येन विदितां प्रसिद्धां चक्रेश्वरीं चक्रेश्वरीं नाम देवीं, नयनमार्गमनैषीत्, दृष्टवान् ॥७९॥

આમ વિચારતો તે મંડપ પાસે પહોંચ્યો, બેઠો બેઠો પોતાના ઉત્તમ પ્રભાવથી પ્રસિદ્ધ એવી ચક્રેશ્વરી દેવીને આંખ સામે જોઈ. ॥૭૯॥

अथ तदवलोकनानन्तरं तत्कृत्यमाह—

तां विनम्य विनयादरपूर्वं; नाकनायकनिकायविनम्याम् ।
योजिताञ्जलिपुटः स्तवमस्याः, कर्त्तुमप्ययमुपक्रमते स्म ॥८०॥

नाकस्य स्वर्गस्य नायकाः अधिपाः इन्द्रा तेषां निकायेन समूहेन विनम्यां नमनीयां तां चक्रेश्वरीम्, विनयः आदरश्च तौ पूर्वं यथा स्यात्तथा विनम्य नत्वा योजितः कृतः अञ्जलिपुटः येन स तादृशः बद्धाञ्जलिः सन् अयं धनदः, अस्या देव्याः स्तवमपि कर्त्तुमुपक्रमते स्म ॥८०॥

ઇન્દ્રના સમૂહોથી વંદનીય એવી તેને વિનયને આદર પૂર્વક નમી તે ધનદ હાથ જોડી તેની સ્તુતિ કરવા લાગ્યો. ॥૮૦॥

अथ स्तुतिमेवाह—

भारती भगवती भवतीह, ख्यातिमागतवती गुरुवाचा ।
बिभ्रती सुभगतां विगतांशां, त्वं जगज्जननि ! हैमवतीति ॥८१॥

जगज्जननि जगन्मातृस्वरूपे ! इह संसारे, भवती त्वं, भगवती ऐश्वर्यशालिनी भारती सरस्वती असि तत्र हेतुमाह—गुरूणां[१] जिनेश्वराणां वाचा वाण्या, ख्यातिं प्रसिद्धिमागतवती प्राप्ता, जिनेश्वरवाक्त्वं कथ्यसे इत्यर्थः। तथा विगतः[२] विनष्टः अंशः भागः यतः तां तादृशीं सम्पूर्णाम-विकलाङ्गामिति यावत्। सुभगतां सौन्दर्यं सामर्थ्यं वा बिभ्रती धारयन्ती, त्वं हैमवती इति, कथ्यसे इति शेषः। पार्वत्यपि हैमवती सुभगत्वादेवेति त्वमपि तथैव तथेति भावः। यद्वा त्वमेव हैमवती, अन्या तु नाममात्रेणेत्यर्थो वा ॥८१॥

હે ભગવતી આપ ગુરુશ્રી જિનેશ્વરની વાણીથી પ્રસિદ્ધિને પામેલી સરસ્વતી છો ? હે જગ-માતા—આપ અખંડ સૌભાગ્ય વાળા પાર્વતી છો ? ॥૮૧॥

त्वं पुनः कमलमाश्रयमाणा, विश्रुतात्र कमला विमलात्मा ।
सर्वकामफलदानविधाना—न्मातरस्यनुपमा कुरुकुल्या ॥८२॥

---

१. गुरोर्बृहस्पतेर्वाचा वाण्या गुरूणां सद्धर्मोपदेष्टॄणां वाचा वाण्या वा ।

२. विशेषेण सम्पूर्णतया गताः प्राप्ताः अंशा यया तां तादृशीम् ।

पुनः त्वमत्र कमलम् आश्रयमाणा सती । विमलात्मा कमला लक्ष्मीति विश्रुता प्रसिद्धा, तथा मातः, सर्वेषां कामानां मनोरथानां फलस्य दानस्य विधानात्करणात् अनुपमा अद्वितीया, कुरुकुल्या कुरूणां कुल्या सरिदिव सा. "जलधिगा कुल्या च जम्बालिनी" इति हैमः । कुरुकुल्या देवीव सा वाऽसि कुरुकुल्या हि सर्वकामदा ख्याता, त्वमपि अत एव तथा ख्याताऽसि इत्यर्थः ॥८२॥

આપ આ સંસારમાં કમલને આશ્રય કરનારી નિર્મલ સ્વરૂપ વાળી પ્રસિદ્ધ એવી લક્ષ્મી છો. તથા હે માત ! સર્વ ઈષ્ટ ફળ આપવાને માટે આપ અનુપમ એવી કુરુકુલ્યા છો. ॥૮૨॥

क्रीडयैव धरणोरगराजं, संश्रिता त्वमसि किं न न पद्मा ? ।
चक्रमात्मकरपङ्कज एव, स्थापयन्त्यपि च चक्रधरा त्वम् ॥८३॥

क्रीडया अनायासेनैव. धरणस्तदाख्यश्चासावुरगाणां नागानां राजा तं धरणेन्द्रम् संश्रिता त्वं पद्मा 'न' न असि किम् ? अपि पद्मैवासि, नञ्द्वयस्य प्रकृतार्थगमकत्वात् । अपि च तथा, चक्रं तदाख्यमस्त्रम् आत्मनः स्वस्य करः पङ्कजमिव तत्र स्थापयन्ती धारयन्ती त्वं चक्रधरा, असीति शेषः ॥ ८३ ॥

તમે ક્રીડાથી જ નાગરાજ ધરણેન્દ્રને આશ્રય કરવા વાળી પદ્મા નથી, એમ નથી શું ? પદ્મા જ છો ? અને તમે પોતાના કરકમલમાં ચક્રનું ધારણ કરવા વાળી ચક્રધરા છો ? ॥૮૩॥

श्रीयुगादिजिनशासनभक्ता, विघ्नवारविनिवारणशक्ता ।
देवतासु सकलास्वपि चक्रे-श्वर्यपि त्वदपरा न परास्ति ॥८४॥

श्रीयुगादिजिनस्य वृषभप्रभोः शासनस्य भक्ता सेविका, विघ्नानां वारस्य समूहस्य विनिवारणे दूरीकरणे शक्ता समर्था, सकलास्वपि देवतासु परा उत्कृष्टा चक्रेश्वरी अपि, त्वदपरा त्वदन्या नास्ति, त्वमेव सर्वश्रेष्ठा चक्रेश्वरी, न तु त्वदन्या काऽपीत्यर्थः ॥८४॥

શ્રી જિનેશ્વર આદિનાથના શાસનમાં ભક્તિ વાળી વિઘ્ન સમૂહોનો નાશ કરવાના સામર્થ્ય વાળી સકલ દેવતાઓમાં ચક્રેશ્વરીપણે તમારા શીવાય બીજી નથી. ॥૮૪॥

तावदापदमुपैति मनुष्यो, दुर्भगत्वमपि विंदति तावत् ।
दुःस्थतां समधिगच्छति ताव-द्यावदाचरति देवि ! न तेऽर्चाम् ॥८५॥

देवि ! मनुष्यः तावत्तदवध्येव, आपदम् उपैति प्राप्नोति, दुर्भगत्वं दुर्भाग्यतामपि तावद्विन्दति, दुःस्थतां दारिद्र्यमपि तावत्समधिगच्छति यावत्ते तव, अर्चां पूजां नाचरति, करोति । कृतायां तु तवार्चायां सर्वानिष्टपरिहार एव भवतीति भावः ॥८५॥

હે દેવી મનુષ્ય ત્યાં સુધી જ આપત્તિ, દુર્ભાગ્ય ને દરિદ્રતાને પામે છે. જ્યાં સુધી તમારી પૂજા કરતો નથી. ॥૮૫॥

आन्तराणि करणानि नराणां, न स्वरूपमवधारयितुं ते ।
विस्फुरन्ति धिषणा धिषणानां, बोधवारिधुतकर्ममलानि ॥८६॥

धिषणानां बृहस्पतितुल्यानां "गीःपतिर्धिषणो गुरुः" इत्यमरः । धिषणाः बुद्धयः । 'बुद्धिर्मनीषा धिषणे' त्यमरः । ते तव स्वरूपं तत्त्वम्, अवधारयितुम् निश्चेतुं न, विस्फुरन्ति प्रभवन्ति, बुद्ध्यगम्यत्वात्तवेति भावः । ननु यद्बुद्धेर्विषयः सोऽस्त्येव नेति चेत्तत्राह्—बोधः तत्त्वज्ञानमेव वारि जलं तेन धुतं प्रक्षालितं कर्मैव मलमावरकत्वाद्येषां तानि. आवरणीयकर्मक्षयोपशमविशिष्टानि, नराणाम् आन्तराणि करणान्युपयोगेन्द्रियाणि विस्फुरन्ति ते स्वरूपमवधारयितुं, यावद्धि न त्वत्स्वरूपज्ञानप्रतिबन्धककर्मक्षयोपशमस्तावन्न तव तत्त्वानुभवः । एवं च धिषणायाः तादृशत्वाभावे कुतस्तद्गोचरता तवेति भावः ॥८६॥

મનુષ્યની અંતર ઇંદ્રિયો પણ તમારું સ્વરૂપ નિશ્ચય કરવાને સમર્થ નથી. કેવળ સમ્યગ્જ્ઞાનરૂપી જળથી જેના કર્મરૂપી મલ ધોઇ ગયા છે તેવા જ્ઞાનીઓની બુદ્ધિ જ તમારો સ્વરૂપનો નિશ્ચય કરી શકે છે. ॥૮૬॥

कामधेनुमपि कामितलब्ध्यै, कल्पवल्लिमपि वेल्लितपापः ।
प्रार्थये न भवतीमपहाय, स्वामिनि ! प्रणतदुःखनिहन्त्रि ! ॥८७॥

स्वामिनि ! प्रणतानां दुःखस्य निहन्त्रि ! भवतीं त्वामपहाय त्यक्त्वा वेल्लितः* आलुठितः पापो येन स पापात्मा, अहमिति शेषः । कामितस्येष्टस्य लब्ध्यै प्राप्तये, कामधेनुमपि कल्पवल्लीं कल्पवृक्षम्, सर्वकामप्रदत्वेन प्रसिद्धमपि, न प्रार्थये, त्वादृशप्रभावशालित्वाभावात्तेषामिति भावः ॥ ८७ ॥

નમન કરનારના દુઃખનો નાશ કરનારી હે સ્વામિની પાપથી પીડાયેલો એવો હું આપને છોડીને પોતાનું ઇષ્ટ મેળવવા માટે કામધેનુ કે કલ્પવૃક્ષની પણ પ્રાર્થના કરતો નથી. ॥૮૭॥

आश्रये विकचचम्पकचञ्चत्पुष्पदामकमनीयशरीरम् ।
आधिधूननविधौ विबुधानां, वन्दनीयचरणां मनसा त्वाम् ॥८८॥

विकचानां विकसितानां चम्पकस्य तदाख्यवृक्षविशेषस्य चञ्चतां शोभमानानां पुष्पाणां दाम्ना स्रजा कमनीयं मनोहरं शरीरं यस्यास्ताम्, तथा विबुधानां देवानां बुधानाञ्च वन्दनीयौ चरणौ यस्यास्ताम्, त्वाम् आधेः मनोव्यथायाः "पुंस्याधिर्मानसी व्यथा" इत्यमरः । विधूननस्य विनाशस्य विधौ विधिनिमित्तम्, मनसा आश्रये श्रयामि ॥८८॥

હું પોતાના દુઃખનાશ કરવા સારૂ વિકસિત એવા ચંપાના શોભના ફૂલોની માળા જેવું મનોહર શરીર વાળી દેવોના પણ વંદનીય ચરણ વાળી એવું આપનું મનથી આશ્રયણ કરું છું. ॥૮૮॥

*वेल्लितं गमितं नाशितं पापं येन स तथा वेल्लिता निकम्पितानि पापानि यस्य वा स तादृशोऽहं तव दर्शनेनेति शेषः ।

अथ देवीप्रसादमाह--

इत्थमादरपरः स्तुतिमेतां, यावदेव विरचय्य स तस्थौ ।
तावदेव मुदिता हृदि देवी, रत्नपञ्चकमदादियमस्मै ॥८९॥

इत्थमुक्तप्रकाराम एतां स्तुतिं विरचय्य कृत्वा, आदरपरः सादरम् स यावदेव तस्थौ विरराम, तावदेव हृदि मुदिता प्रसन्नता इयं चक्रेश्वरी देवी, अस्मै धनदाय, रत्नपञ्चकं पञ्च-रत्नानि अदात् ॥८९॥

આમ આદરપૂર્વક આવી સ્તુતિ કરી જેટલામાં તે સ્થિર થયો તેટલામાં મનમાં પ્રસન્ન થયેલી તે દેવીએ તેને પાંચ રત્નો આપ્યા. ॥૮૯॥

अथ रत्नानां गुणानाह—

आद्यमापदपसारणकर्म, श्रीविलासकरणं च ततोऽन्यत् ।
द्वन्द्वमस्ति विषदुर्भगताभि–द्रोगभङ्गकुशलं खलु शेषम् ॥९०॥

आद्यं प्रथमम् आपदामपसारणं दूरीकरणमेव कर्म कार्यं यस्य तत्तथा, आपन्निवारक-मित्यर्थः । ततः प्रथमादन्यद्द्वितीयं च, श्रियः लक्ष्म्याः विलासस्य समृद्धेः करणम् जनकम्, द्वन्द्वं तृतीयतुर्यं विषस्य दुर्भगतायाश्च भिद् भेदकम्, अस्ति, शेषमन्त्यं पञ्चमम्, खलु निश्चयेन, रोगस्य भङ्गे कुशलं समर्थं जानीहि इति शेषः ॥९०॥

તેમા પહેલું આપત્તિઓ દૂર કરવાનું ને બીજું લક્ષ્મીને શોભા અથવા ધન સમૃદ્ધિ કરવા વાળું ત્રીજું ને ચોથું એ વિષયને દૌર્ભાગ્ય નાશ કરનાર ને પાંચમું રત્ન રોગ નાશક હતું. ॥૯૦॥

रत्नपञ्चकमहामहिमानं, श्रोत्रमार्गमवतार्य स देव्याः ।
जङ्घिकां क्षुरिकयैव विदार्य, स्वां न्यवीविशदिदं च तदन्तः ॥९१॥

देव्याः देवीसकाशात्, रत्नपञ्चकस्य महान्तम् असाधारणं महिमानं प्रभावं श्रोत्रमार्गमवतार्य श्रुत्वा, स धनदः, क्षुरिकया शस्त्र्या छुरिकया एव "स्याच्छस्त्री चासि पुत्री च क्षुरिका चासिधेनुके"-त्यमरः । स्वां जङ्घिकां जङ्घां विदार्य, तदन्तस्तन्मध्ये च, इदं रत्नपञ्चकं न्यवीविशत् निवेशितवान् ॥९१॥

દેવીથી પાંચે રત્નોનો મહાન મહિમા પ્રભાવ સાંભળ્યા પછી તે ધનદે ચપ્પુથી પોતાનો જાંઘ ચીરી તેની અંદર તે રત્નો મુકી દીધાં. (ગુપ્ત કર્યા.) ॥૯૧॥

भेषजैरुपचितां निजजङ्घां, स प्रणीय पटुबुद्धिनिधानम् ।
यत्नगप्रसुबलो नगरान्ता, राजमन्दिरमुदैक्षत रावत् ॥९२॥

पटोः कुशलायाः बुद्धेः निधानमाकरः स धनदः, निजजङ्घां शस्त्रीविदारिताम्, भेषजैरौषधैः,

रचयितां निश्रेणीं प्रणीय कृत्वा *नगप्रभुरिव बलं यस्य स नगेन्द्रतुल्यसत्त्वशाली सन्, यन् गच्छन्, नगरान्तः पुरीमध्ये, राजन्, दीप्यमानं राजमन्दिरम् राजप्रासादम् उदैक्षत विलोकितवान् ॥८२॥

સારી બુદ્ધિનો ભંડાર એવો તે ઓસડથી પોતાના બાંધને સાજી કરી (ત્યાંથી) જતો નગરાજ સમાન બળ વાળો તે નગરની અંદર શોભાયમાન એવા રાજભવનને જોતો હતો. ॥૯૨॥

तत्र चित्रवति सप्तमभूमि–स्थायिनीं नयनयोर्विषयं मः ।
चित्तसंमदकरीं नयति स्म, क्षीरनीरधिसुतामिव कन्याम् ॥९३॥

चित्रवति आलेख्ययुक्ते साश्चर्ये वा "आलेख्याश्चर्ययोश्चित्रम" इत्यमरः । तत्र राजमन्दिरे स धनदः, सप्तमभूमौ हर्म्यसप्तमतले स्थायिनीं क्षीरनीरधेः क्षीरोदधेः सुताम् पुत्रीं लक्ष्मीमिव, चित्तस्य संमदं हर्षं करोतीति तां तादृशीं मनोहरां कन्याम, नयनयोः विषयं गोचरं नयति स्म ॥९३॥

આશ્ચર્યકારક અથવા ઉત્તમ ચિત્રો વાળા એવા તે રાજભવનમાં સાતમા મહેલે રહેલી ચિત્તને આનંદ આપનારી લક્ષ્મી જેવી સુંદર કન્યાને તેણે જોઈ. ॥૯૩॥

एणनाभिघृतपत्रकमस्या, यन्मुखं कमलराजिमजैषीत् ।
तद्ध्रुवं द्विजपतिः प्रपलाय्य, व्योम केवलमशिश्रियदेवः ॥९४॥

अस्याः कन्यायाः मुखम्, एणनाभेः कस्तूर्याः धृतं पत्रकं पत्ररचना येन तत्तादृशं सत्, यद्यस्मात् कमलस्य राजिं श्रेणिमजैषीत्, तत्तस्माद्धेतोः, एष द्विजपतिश्चन्द्रः प्रपलाय्य, स्वस्य पराजयभयेन नंष्ट्वा केवलं शून्यं व्योम अशिश्रियत् कमलचन्द्रतुल्यं मुखं तस्या इत्यर्थः। यदुक्तम्—'सतां माने म्लाने मरणमथवा दूरगमनम' इति । ध्रुवमित्युत्प्रेक्षायाम ॥९४॥

જે કારણથી કસ્તૂરીથી બનાવેલા પત્રક વાળું તેનું મુખ કમલ સમૂહને જીતતું હતું, કમલ કરતાં પણ સુંદર હતું. તેથી હું માનુ છું કે તેનાથી જીતવાના ભયથી તે ચંદ્રે ભાગીને આકાશનો આશ્રય કર્યો છે. ॥૯૪॥

अङ्गचङ्गिमरुचिर्मयकास्या, नो मनागपि हृतेत्यधुनापि ।
स्वस्य शुद्धिविषये ज्वलनान्तः, काञ्चनं विशति विश्वसमक्षम् ॥९५॥

मयका मया अस्याः कन्यायाः, अङ्गस्य चङ्गिमा मनोहारिणी या रुचिः कान्तिः सा मनागीषदपि नो नैव हृता, इति प्रमाणयितुमिति शेषः । काञ्चनं सुवर्णम् अधुनापि स्वस्य, शुद्धिविषये स्वं निर्दोषं प्रमाणयितुम्, विश्वस्य सर्वस्य समक्षम्, ज्वलनस्याग्नेरन्तः मध्ये, प्रविशति अन्योऽपि हि चौर्यारोपपरिहारायाग्निप्रवेशरूपं दिव्यं करोतीति भावः । स्वर्णवर्णेत्यर्थः । सुवर्णं हि मलापकर्षणाय अग्नौ विक्षिपन्ति जनाः । तत्र चौर्यारोपशुद्धिरसम्बन्धेऽपि सम्बन्धरूपेत्वतिशयोक्तिः ॥९५॥

---

*नगप्रभुर्हिमालयः स इव बलं यस्य स तादृशः हिमालयतुल्यपराक्रमशाली सन् ।

જાણે આ કન્યાનાં શરીરની મનોહર કાંતિનું સહેજ પણ મેં હરણ કર્યું નથી. તે સિદ્ધ કરવા સારું જાણે સોનું હમણાં પણ પોતાની શુદ્ધિ માટે બધાની સામે અગ્નિમાં પ્રવેશ કરે છે. (કોઇની શુદ્ધિ અગ્નિમાં પ્રવેશ કરવાથી સીતાની જેમ જણાય છે ॥૯૫॥

एतदीक्षणयुगेन कुरङ्गी, लोचने तु विजिते निजकीये ।
संविमृश्य वनवासमयासी–द्दुःसहः परिभवो हि जगत्याम् ॥९६॥

एतस्याः कन्यकायाः ईक्षणयुगेन नेत्रद्वयेन, निजकीये स्वकीये, लोचने विजिते पराजिते संविमृश्य विचार्य कुरङ्गी हरिणी वनवासमयासीन्नु इति वितर्के । तादृशवितर्के उपपत्तिमाह— हि यतः जगत्यां लोके परिभवोऽनादरः दुःसहः असह्यः, अन्योऽपि हि अनादृतः (पराजितः) दूरदेशादि (दौ) गच्छति इति भावः । हरिणीसदृशे लोचने तस्या इत्यर्थः ॥९६॥

હરણીએ આ કન્યાના બે નેત્રો વડે પોતાના નેત્રનો પરાભવ થયેલો જાણી વનવાસમાં વાસ કર્યો છે. (હારેલો વનમાં ભાગી જાય છે.) ખરેખર સંસારમાં પરાજય દુઃસહ હોય છે. ॥૯૬॥

रूपधेयमवलोक्य यदस्या, लज्जितैव कमला निममज्ज ।
सागरप्रमथने परिक्लृप्ते, सोन्ममज्ज दिविषद्भिरशेषैः ॥९७॥

अस्याः कन्यकाया एव, नत्वन्यस्याः, तादृशरूपाभावादिति भावः । रूपधेयं सौन्दर्यमवलोक्य लज्जिता कमला लक्ष्मीः यत्, निममज्ज सागरे ब्रुडितवती, सा, अशेषैः सर्वैरेव, न तु कतिपयैः दिविषद्भिः देवैः, न तु मनुष्यादिभिः, सागरस्य प्रमथने, अतिमथने, न तु सामान्यमथने, परिक्लृप्ते विहिते उन्ममज्जोपयोगता, लज्जाधिक्येन स्वल्पप्रयासेन तदुन्मज्जनासम्भवादिति भावः । श्रीतुल्या सेत्यर्थः ॥९७॥

જે કારણથી આ કન્યાનું સુંદર રૂપ જોઇ લજ્જિત થઈને જાણે લક્ષ્મી ડૂબી ગઈ હતી (તેથી) બધા દેવો વડે સાગર મંથન કરવાથી તે ઉપર આવી હતી. ॥૯૭॥

नास्यमेतदलिकस्य पुरस्ता–दर्धचन्द्रपरिकल्पनमिन्दोः ।
अष्टमीशशिनमारचयंस्तं, स्वाभिसन्धिमकरोद्विधिशिल्पी ॥९८॥

विधिः एव शिल्पी निर्माता स तं प्रसिद्धम्, अष्टम्यास्तिथेः शशिनं चन्द्रम् आरचयन् निर्मिमाणः सन्, एतत् अस्याः कन्यकायाः दृश्यमानम् आस्यं मुखं न, किन्तु 'ललाटमलिक'मित्यमरोक्तेः अलिकस्य ललाटस्य पुरस्तादग्रतः इन्दोः चन्द्रस्य, अर्धचन्द्रस्य अर्धभागस्य परिकल्पनं निर्माणम् इति, स्वस्य अभिसन्धि मनोभावमकरोत्, तथाऽऽशयवानेवाष्टमीचन्द्रं तथैव व्यधाद्विधिरिति तादृशचन्द्रतुल्यं तन्मुखमिति भावः । यो हि यथाऽऽशयवान्, स तथैवारचयत्यपि इति यावत् ॥९८॥

વિધાતારૂપી શિલ્પીએ અષ્ટમીમાં ચંદ્રને બનાવતા પોતાનો એવો અભિપ્રાય પ્રગટ કર્યો છે કે ચં:

આ કન્યાનું મુખ છે માટે આના લલાટની આગળ ચંદ્રને અર્ધચંદ્ર ન કરાય, લલાટને માટે ચંદ્રને કાપીને અર્ધો ન કરાય તે માટે જુદો જ અર્થ જોઇએ. ॥૯૮॥

वर्णयन्निति समीपमुपेतः, सत्कृतः समुचितप्रतिपत्त्या ।
अभ्यधायि स तया किमिहागा, भद्र ! दैवविमुखः सुमुख ! त्वम् ॥९९॥

इत्युक्तप्रकारम् वर्णयन् अर्थात् ताम्, स धनदः, समीपम्, अर्थात्तस्याः, उपेतः प्राप्तः, समुचितप्रतिपत्त्या उचिताचारेण सत्कृतः, तया कन्यकया, अभ्यधायि कथितः । किमित्याह— भद्र ! सुमुख ! त्वं दैवं विमुखं यस्य स तादृशः दुर्भाग्यः, इह आगाः किम् अनुकूलदैवस्य त्वत्रागमनं न संभवतीति भावः ॥९९॥

આમ તે કન્યાનું વર્ણન કરતો તે ધનદ તેની પાસે પહોંચ્યો. ને તેનાથી ઉચિત ઉપચારથી સત્કાર પામી તે કન્યાથી પૂછાયો કે હે ભદ્ર ! હે સુંદર મુખકમળ વાળા ! તમે દુર્ભાગ્યને લીધે અહીં શું કામ આવ્યા ? ॥૯૯॥

चन्द्रसुन्दरमुखि ! त्वमपीदं, साध्वसाप्लुतवचाः स्म किमात्थ ?
सा जगाद भरतेऽत्र समृद्धं, श्रीचितं तिलकपत्तनमस्ति ॥ १०० ॥

चन्द्रसुन्दरमुखि ! त्वमपि इदं पूर्वोक्तप्रकारम्, साध्वसेन भयेन प्लुतं सम्भिन्नं वचो वचनं किं कुतः कारणादाऽऽत्थ स्म कथितवती । यद्वा किमिति निषेधकाकुः, नैवं वक्तव्यमित्यर्थः । धनदकृतदक्षोक्तिः । सा कन्यका जगाद । किमित्याह– अत्र भरतक्षेत्रे, समृद्धं श्रिया समृध्द्या चितं पूर्णं तिलकपत्तनं तन्नाम नगरमस्ति ॥१००॥

ત્યારે તે બોલ્યો કે હે ચંદ્રમુખી તમે આમ ભયભીત વચન કેમ બોલો છો ? ત્યારે તેણે કીધું કે આ ભારતમાં સમૃદ્ધ એવું તિલકપુર નામનું નગર છે. ॥૧૦૦॥

ऋद्धिसंहतिनिरस्तमहेन्द्र—स्तत्र भूपतिरभूत्स महेन्द्रः ।
नैव यः कृपणतां स्पृशति स्म, दातृराड् परवधूमिव जातु ॥१०१॥

तत्र नगरे, स तादृशः, ऋद्धेः लक्ष्म्याः संहत्या राशिना निरस्तः पराजितः महेन्द्रः नाम भूपतिरभूत् । यः महेन्द्रः दातृषु राजते सर्वोत्कर्षेण वर्तते इति सः । परवधूं परस्त्रियमिव, जातु कदाचिदपि कृपणतां कदर्यतां नैव स्पृशति स्म । कृपणतोज्झित आसीदित्यर्थः ॥१०१॥

ત્યાં પોતાના સમૃદ્ધિ—સમૂહથી ઇન્દ્ર કરતાં પણ ચઢિયાતો મહેન્દ્ર રાજા હતો દાતાઓમાં સજા-તુલ્ય એવો તે પરસ્ત્રીની જેમ કદી પણ કૃપણતાને સ્પર્શ્યો ન હતો. ॥૧૦૧॥

तद्गृहिण्यजनिरपरेधुरस्या-स्तर्पितैः सुरभिवृक्षवरैः ।
वारिदैरिव विकर्तनबिम्बं, वारदैर्विहितमर्जितपोरैः ॥१०२॥

अपरेद्युरेकदा असूयया दोषारोपेण सूचिताः व्याप्तास्तैः । यद्वा असूयासु उचितैः अभ्यस्तैः "अभ्यस्तेऽप्युचितं न्याय्यम्" इत्यमरः । द्विषद्भिः शत्रुभिः, बलानां सैन्यानामोघैः समूहैः, तस्य महेन्द्रस्य पुरं तिलकपत्तनम्, ×विहितैः कृतैः गर्जितैः घोरैः भयानकैः शारदैः शरद्भवैः, वारिदैः मेघैः, शरत्पदेन तेषां निष्फलतोक्ता । विकर्त्तनस्य सूर्यस्य "विकर्त्तनार्कमार्तण्डे"त्यमरः । बिम्बं मण्डलमिव, अरोधि रुरुधे ॥१०२॥

એક દિને તેના શત્રુઓએ ઈર્ષ્યાથી ઘોર ગર્જના કરતા એવા શરદ ઋતુના વાદળાઓ વડે સૂર્યની જેમ સૈન્યો વડે તેના નગરને ઘેરો ઘાલ્યો. ॥૧૦૨॥

तं तदा वसुमतीशतमन्युं, व्यन्तरोऽभ्यधित कोऽपि सुपर्वा ।
पूर्वजन्मसुहृदस्मि तवाहं, वारिवाह इव तापनिहन्ता ॥१०३॥

तदा, तं वसुमत्यां पृथिव्यां शतमन्युरिन्द्र इव तं महीमहेन्द्रम्, कोऽपि अज्ञातनामा, सुपर्वा देवः व्यन्तरः व्यंतरनिकायवर्त्तिदेवः अभ्यधित अचकथत । किमित्याह—तव अहं वारिवाहः मेघ इव तापस्य आतपजन्यस्य, अथ च विपज्जन्यस्य निहन्ता, छायाजलादिप्रदत्वेन, सहायसम्पादनेन च विनाशकः, पूर्वजन्मनि सुहृन्मित्रमस्मि, अतो मत्तो वैरितो मा भैषीरिति भावः ॥१०३॥

ત્યારે તે રાજાને કોઈ વ્યંતર દેવે કીધું કે વાદળની જેમ તાપનો નાશ કરનાર હું તમારો પૂર્વજન્મનો મિત્ર છુ. ॥૧૦૩॥

भूभुजापि कथमित्यनुयुक्ते, व्यन्तरः प्रणिजगाद सहर्षम् ।
दक्षिणार्धभरतावनिवामा-भूषणं जयति चन्द्रपुरं तत् ॥१०४॥

भूभुजा राज्ञा महेन्द्रेण, कथं केन प्रकारेण पूर्वजन्मसुहृत्त्वं मे, इतीत्थम्, अनुयुक्ते पृष्टे सति व्यन्तरः, सहर्षं जगाद । तदेवाह—दक्षिणे अर्धभरते दक्षिणार्द्धभरते भरतार्द्धे या अवनिः पृथ्वी सैव वामा स्त्री तस्याः भूषणम्, तत्प्रसिद्धं चन्द्रपुरं तन्नामपुरं जयति सर्वोत्कर्षेण वर्त्तते ॥१०४॥

રાજા વડે કેમ? એ પ્રમાણે પુછાયે છતે ખુશ થઈ તે વ્યંતર કહેવા લાગ્યો કે દક્ષિણાર્ધભરતરૂપી સ્ત્રીના ભૂષણ સમાન ચંદ્રપુર નામનું પ્રસિદ્ધ નગર છે.

रक्षति स्म किल चन्द्रयशास्त-त्पत्तनं वसुमतीहृदयेशः ।
खेचरीभिरुदगीयत यस्य, व्योम्नि विक्रमकथा दयितेषु ॥१०५॥

तत् चन्द्रपुरं नाम पत्तनं पुरम्, वसुमत्याः पृथिव्याः हृदयेशः पतिः, चन्द्रयशाः तन्नामा राजा, रक्षति स्म, किलेत्यैतिह्ये । यस्य चन्द्रयशसः, विक्रमस्य शौर्यस्य कथा आख्यानम्, व्योम्नि आकाशे, खेचरीभिः विद्याधराङ्गनाभिः, दयितेषु प्रियेषु विषये (स्वस्वपतिं प्रति), उदगीयत गीयते

×विहितानि कृतानि गर्जितानि गर्जनानि यैस्तैर्घोरैः ।

स्म । न केवलं पृथिव्यामेव, किन्तु आकाशेऽपि तद्यशो व्याप्तमिति भावः ॥१०५॥

તે નગરનું ચંદ્રયશા નામે રાજા પાલન કરતો હતો. વિદ્યાધરીઓ જેના પરાક્રમનું વર્ણન કરતી પતિઓની આગળ ગાન કરતી હતી. ॥૧૦૫॥

राजराज इति शब्दमुवाह, भूतनायकसखः स कुबेरः ।
यत्र शासति परं क्षितिचक्रं, चक्रपाणिसमविक्रमधाम्नि ॥१०६॥

यत्र यस्मिन्, चक्रपाणिः विष्णुः तेन समस्य तुल्यस्य विक्रमस्य धामास्पदं तस्मिन्, विष्णु-तुल्यपराक्रमे महेन्द्रे, परमुत्कृष्टम्, क्षितिचक्रं पृथ्वीमण्डलं शासति सति स्वशासनकाले इति यावत् स महेन्द्रः भूतानां जनानां नायकः नेता सामन्तः तस्य सखा मित्रं सन्, सामन्तानुगतः सन्नित्यर्थः । अथ च भूतनायकः भूतेशः शिवः "भूतेशः खण्डपरशु" रित्यमरः । तस्य सखा मित्रं सन्, कुबेरः यक्षराडिव "कुबेरस्त्र्यम्बकसखो यक्षराट्" इत्यमरः । राजराजः राज्ञां राजा स इति शब्दम्, राज-राजशब्दवाच्यत्वमुवाह । कुबेरोऽपि भूतनायकसखः राजराजः । "राजराजो धनाधिपः" इत्यमरः । अत्र श्लेषानुप्राणिता लुप्तोपमा ॥१०६॥

વિષ્ણુ સમાન પરાક્રમી ને તેજસ્વી જે રાજા પૃથ્વીનું શાસન કરતો છતો શિવનો મિત્ર તે કુબેર રાજરાજ એવા શબ્દને ધારણ હતો. ॥૧૦૬॥

सा बभूव दयिता शशिकान्ता, नाम तस्य जलधेरिव गङ्गा ।
शीलमुज्ज्वलमवर्णयदिन्द्रः, प्रेयसीषु निखिलास्वपि यस्याः ॥१०७॥

तस्य महेन्द्रस्य, जलधेः समुद्रस्य गङ्गा इव, शशिकान्ता नाम सा तादृशी दयिता भार्या बभूव, यस्याः शशिकान्तायाः, निखिलास्वपि प्रेयसीषु भार्यासु, उज्ज्वलं पवित्रं शीलं चारित्रम्, इन्द्रः पृथिवीन्द्रः राजा अवर्णयत् ॥१०७॥

તે રાજાની સમુદ્રની ગંગાની જેમ શશિકાન્તા નામે પત્ની હતી જેનું ઇન્દ્રે પોતાની પત્નીઓ આગળ (શીલથી પવિત્ર) વર્ણન કર્યું હતું. ॥૧૦૭॥

तत्र केलिसदनं करुणाया, दीनदौस्थ्यविनिवर्हणकर्मा ।
वाणिजो निवसति स्म जिनेन्द्रो-पासनाप्रवणहृज्जिनदत्तः ॥१०८॥

तत्र पुरे करुणायाः, केलेः क्रीडायाः सदनमास्पदं दयालुः, दीनस्याकिञ्चनस्य दौस्थ्यस्य दारि-द्र्यस्य विनिवर्हणं दूरीकरणं कर्म यस्य स तादृशः दीनदुःस्थजनपालकः, जिनेन्द्रस्योपासनायां प्रवणमनुरक्तं हृदयं यस्य स जिनसेवापरायणः, जिनदत्तः तन्नामा वाणिजः वणिक् निवसति स्म ॥१०८॥

ત્યાં કરુણાના ક્રીડાસ્થાન જેવો અત્યંત દયાળુ, દીન માણસના દરિદ્રતાનો નાશ કરવાવાળો જિનેશ્વરની ઉપાસનામાં તત્પર હૃદયવાળો જિનદત્ત નામે વણિક રહેતો હતો. ॥૧૦૮॥

शङ्खदत्त इति नाम वयस्य–स्तस्य शङ्ख इव गौरगुणोऽभूत् ।
साधुशब्दवसतिः कुटिलत्वं, नो बभार हृदि यो वणिजोऽपि ॥१०९॥

तस्य जिनदत्तस्य, शङ्खदत्त इति नाम । शङ्ख इव गौरः विशुद्धः धवलगुणः रूपं धर्मश्च यस्य स तादृशः वयस्यः अभूत् । यः शङ्खदत्तः, साधु इति शब्दस्य वसतिरास्पदम्, साधुशब्दवाच्यः, वणिजः वणिगपि सन् हृदि कुटिलत्वं वक्रत्वं दौर्जन्यं नो बभार धारयामास, वणिजो हि स्वभावत एव कुटिला भवन्ति, किन्तु स पूर्वसुकृतादिना न तथेति भावः । कतिपयस्थाने वणिजः साधुरिति उपनाम, नामोपाधिर्वा भवति, साधुरिति वणिक्शब्दपर्यायश्च, एवं च यः साधुशब्दवसतिः तस्य हृदि कुटिलता नेति युक्तमेवेति भावः । श्लेषानुप्राणितोपमा ॥१०९॥

તેનો શંખની જેમ પવિત્ર ગુણ વાળો શંખદત્ત નામે મિત્ર હતો. સાધુ એવો અટકવાળો જે શંખદત્ત વણિક હોવા છતાં મનમાં કુટિલતા રાખતો હતો નહિ. ॥૧૦૯॥

हट्टविष्टरनिविष्टमदुष्टं, शङ्खदत्तमपरेद्युरुपेत्य ।
कोऽपि तस्करवरोऽतिमहार्घं, रत्नमेकमुपदर्शयति स्म ॥११०॥

अपरेद्युरेकदा कोऽपि तस्करवरः, चौरसमः, उपेत्यागत्य, अदुष्टं निर्दोषं साधुचरितम्, हट्टस्यापणस्य विष्टरे आसने निविष्टमुपविष्टं शङ्खदत्तम्, अतिमहार्घं बहुमूल्यमेकं रत्नमुपदर्शयति स्म ॥११०॥

એક દિને આસન ઉપર બેઠેલા નિર્મલ એવા તે શંખદત્તને કોઇ ચોરે પાસે આવીને એક અમૂલ્ય રત્ન બતાવ્યું હતું. ॥૧૧૦॥

मूल्यमस्य वणिजाप्यनुयुक्त––स्तस्करः प्रवदति स्म स तेन ।
किञ्चनापि यदिदं लभते द्राक्, साधुरत्न ! मम यच्छ तदेव ॥१११॥

तेन वणिजा शङ्खदत्तेनापि, अस्य रत्नस्य मूल्यम्, अनुयुक्तः पृष्टः स तस्करः प्रवदति स्म । साधुरत्न ! साधुशिरोमणे ! इदं रत्नं यत्किञ्चनापि स्वल्पमपि लभते प्राप्नोति, तदेव मम द्राक् शीघ्रं यच्छ । यत्किञ्चित्तव योग्यं प्रतिभाति तदेव यच्छेत्यर्थः ॥१११॥

તે વણિકે તે રત્નનું મુલ્ય પૂછયું ત્યારે તે ચોર બોલ્યો કે હે મોટા સાધુ, જે કાંઈ આ રત્નનું મળતું હોય તે જલદી મને આપી દો. ॥૧૧૧॥

दस्युमेतमनवेत्य स चापि, मुग्धमेव कलयन् कलयापि ।
संमदेन कनकस्य सहस्रा–ण्यार्पयद्दश तदैव धनाढ्यः ॥११२॥

स धनाढ्यः शङ्खदत्तः एतं दस्युं चौरमनवेत्याज्ञात्वा, कलया आचरणेन, बुत्या अपि च मुग्धं भद्रिकपरिणामं [illegible] [illegible] आगत, नहि [illegible] रत्नं [illegible]किञ्चिन्मूल्येन विक्रीणा–

तीति भावः । तदैव, संमदेन, स्वल्पमूल्येनैव रत्नं मिलतीति हर्षेण कनकस्य दीनारस्य दश सहस्राणि आर्पयत् ददौ ॥११२॥

त्यारे धनाढ्य એવો તે વણિક તેને સહેજ પણ ચોર નહીં પણ ભોળો સમજતો ત્યારે જ હર્ષથી દશ હજાર સોના મહોર આપી રત્ન લીધું. ॥૧૧૨॥

यावदेव नगरे स नु तत्र, स्वेच्छयैव वसु तद्विललास ।
तावदेव नृपतेरधनोऽन्यः, कोऽपि कोशमपि लुण्टयति स्म ॥११३॥

तत्र तस्मिन् चन्द्रपुरे नगरे यावदेव स तस्करः नु इति वाक्यालङ्कारे, स्वेच्छया एव, तद्वसु धनं, विललास व्ययति स्म, तावदेव कोऽपि अन्यः, अधनः तस्करः दीनः, नृपतेः कोशं निधिमपि लुण्टयति स्म अचूचुरत् ॥११३॥

જેટલામાં તે ચોર નગરમાં તે ધનને સ્વેચ્છાએ ખર્ચતો હતો તેટલામાં કોઈ બીજા ચોરે રાજાનો ખજાનો લુંટીલીધો. ॥૧૧૩॥

तद्गवेषणकृते भ्रमतैवा--रक्षकेण निखिले नगरेऽपि ।
स व्ययन् समवलोक्य धनानि, तद्भ्रमेण विनिबन्धित एव ॥११४॥

तस्य लुण्टितस्य धनस्य गवेषणकृते अन्वेषणार्थम् एव सकलेऽपि नगरे, भ्रमता, आरक्षकेण रक्षानियुक्तराजपुरुषेण, स तस्करः, धनानि व्ययन्, समवलोक्य, तद्भ्रमेणैव कुतोऽस्यैतद्धनमिति कोशलुण्टाकोऽयमिति वा सन्देहेन विनिबन्धितः निगडितः ॥११४॥

તે શોધવાને આખા નગરમાં ભમતા સિપાઈઓએ તે ચોરને ધન ખર્ચ કરતો જોઈ ચોરીના ધનના ભ્રમથી તેને બાંધ્યો. ॥૧૧૪॥

सर्वमर्पितमनेन च लोप्त्रं, दस्युना निविडताडनभीत्या ।
प्रत्यपादि पुररक्षितुरग्रे, शङ्खदत्तवणिजस्य च वृत्तम् ॥११५॥

अनेन दस्युना तस्करेण निबिडात् अतिमात्रात्ताडनाद्या भीतिः तया, सर्वं लोप्त्रं चोरितम्, अर्पितम् दत्तम्, पुररक्षितुरारक्षकस्य अग्रे, शङ्खदत्तवणिजस्य वृत्तं रत्नकयादिरूपमुदन्तम्, प्रत्यपादि कथितम् ॥११५॥

તે ચોરે ઘણા માર પડવાના ભયથી ચોરેલું બધું ધન આપી દીધું અને નગર રક્ષકની આગળ શંખદત્ત વણિકનો વૃત્તાંત પણ બોલ્યો. ॥૧૧૫॥

तत्स्वरूपमधिगम्य नृपेणा--रक्षकादथ वणिग्विधृतोऽपि ।
श्रावकस्य जिनदत्तमहेभ्य--स्याग्रहेण मुमुचे स इतश्च ॥११६॥

अथ, आरक्षकात्, तस्य शङ्खदत्तस्य स्वरूपं वृत्तान्तमभिगम्य, स वणिक् शङ्खदत्तोऽपि विधृतः गृहीतः, श्रावकस्य जिनदत्तमहेभ्यस्य आग्रहेण इतः बन्धनान्मुमुचे च ॥११६॥

પછી તે વાત જાણી રાજાએ આ રક્ષક પાસેથી તે વણિકને પકડાવ્યો ને મોટા શેઠ એવા જિનદત્ત શ્રાવકના આગ્રહ થી છોડી દીધો. ॥૧૧૬॥

सोमराज इति तत्र कुटुम्बी, न्यायवित्तपरिपोष्यकुटुम्बः ।
रुक्मिणी प्रियतमाजनि तस्य, रुक्मिणीव सुभगत्वमहर्घ्या ॥११७॥

तत्र नगरे, न्यायेन यद्वित्तं तेन परिपोष्यं कुटुम्बं यस्य स, न्यायोपार्जितधनेन कुटुम्बपरिपालकः, सोमराज इति नाम, कुटुम्बी गृहस्थः, प्रतिवसति स्मेति शेषः । तस्य सोमराजस्य, रुक्मिणी कृष्णपट्टराज्ञी इव, सुभगत्वस्य सौन्दर्यस्य महर्घ्या आधिक्येन, रुक्मिणी प्रियतमा अतिप्रिया दयिता अजनि बभूव ॥११७॥

આ બાજુ ત્યાં ન્યાયે ઉપાર્જિત ધનથી કુટુંબને પોષવા વાળો સોમરાજ નામ ગૃહસ્થ રહેતો હતો. તેની રુક્મિણીની જેમ અત્યંત સુંદર એવી રુક્મિણી નામે પત્ની હતી. ॥૧૧૭॥

रेवणाख्यपुरुषे मनसः सा-वस्थितिं व्यधित भर्तृविरागा ।
विश्रुता चपलता चपलाया, वस्तुतः स्फुरति सा वनितानाम् ॥११८॥

सा, भर्तरि पत्यौ विरागा विरक्ता सती, रेवणाख्यपुरुषे, मनसः अवस्थितिं मनोऽनुरागं व्यधित कृतवती, चपलाया विद्युतः लक्ष्म्या वा, चपलता अस्थिरस्थायिता, विश्रुता प्रसिद्धा, किन्तु, वस्तुतः यथार्थतः, सा चपलता, वनितानां स्त्रीणां स्त्रियां स्फुरति प्रकाशते प्रसिद्धिस्तु प्रत्यक्षाभावान्तत्रैवेत्यन्यदेतत् ॥११८॥

તેણે પોતાના પતિમા વિરાગવાળી થઈ રેવણ નામના પુરુષમાં પોતાના મનને લગાવ્યું હતું. જો કે વીજળીની કે લક્ષ્મીની ચંચલતા પ્રસિદ્ધ છે પણ સ્ત્રીઓમાં તે સાફ દેખાય છે. ॥૧૧૮॥

तत्प्रियोऽप्युपपतिं विबुभुत्सु-र्गुप्त एव तदनु भ्रमति स्म ।
सापरेद्युरपसूचितमेका, शून्यदेवकुलमैदविलम्बम् ॥ ११९ ॥

तस्याः रुक्मिण्याः प्रियः पतिरपि, उपपतिं जारम्, विबुभुत्सुः विजिज्ञासुः गुप्त एव, तदनु रुक्मिणीमनु भ्रमति स्म । अपरेद्युरेकदा सा रुक्मिणी एका एकाकिन्येव, अपसूचितं सङ्केतितम्, शून्यं निर्जनं देवकुलं देवमन्दिरम्, अविलम्बं शीघ्रम् ऐत् गतवती ॥११९॥

તેનો પતિ તેના ઉપપતિને જાણવાને ગુપ્તરીતે તેની પાછળ ભમતો હતો. તે રુક્મિણી એક દિવસ એકલી જ સંકેત પ્રમાણે જલ્દીથી શૂન્ય મન્દિરમાં ગઈ. ॥૧૧૯॥

व्यग्रतां क्वचन कर्मणि विभ्र-द्रेवणोऽद्यपि न तत्र समागात् ।
तत्र देवमभिवन्दितुकामः, शङ्ख एव स तदा प्रविवेश ॥१२०॥

रेवणः, क्वचन कस्मिन्नपि कर्मणि कार्ये व्यग्रतां व्यापृतत्वं बिभ्रत् गच्छन्, तत्र तस्मिन् अह्नि दिने, न समागात्, तदा तस्मिन् काले, तत्र देवमन्दिरे, स शङ्खः शङ्खदत्त एव, देवम् अभिवन्दितुकामः, प्रविवेश ॥१२०॥

પણ કોઈ કાર્યમાં વ્યગ્ર હોવાને લીધે તે દિવસે રેવણ ત્યાં આવ્યો નહિ પણ ત્યાં દેવનું વંદન કરવાની ઇચ્છાથી શંખે તે મન્દિરમાં પ્રવેશ કર્યો. ॥૧૨૦॥

रुक्मिणीपतिरवेक्ष्य विशन्तं, तत्र तं स रहसि स्थित एव ।
स्वप्रियोपपतिशङ्कितचेताः, संविधृत्य नयति स्म नृपान्तम् ॥१२१॥

रहसि एकान्ते स्थितः स रुक्मिणीपतिः सोमराजः, तत्र देवमन्दिरे तं शङ्खदत्तमेव विशन्तमवेक्ष्य, स्वप्रियायाः उपपतिः इति शङ्कितं चेतः यस्य स तादृशस्सन् संविधृत्य तं गृहीत्वा, नृपान्तं राजसमीपे नयति स्म ॥१२१॥

ત્યા એકાન્તમા રહેલો રુક્મિણીનો પતિ તેને ત્યાં પ્રવેશ કરતો જોઈ પોતાની સ્ત્રીના ઉપપતિના ભ્રમે તેને પકડીને રાજા પાસે લઈ ગયો. ॥૧૨૧॥

विज्ञपय्य नृपतिं जिनदत्तो, भूय एनमपि मोचयति स्म ।
तापसस्य सविधे स तपस्या-मग्रहीद्भवपराभवशङ्की ॥१२२॥

जिनदत्तः, भूयः पुनरपि, नृपतिं राजानं विज्ञपय्य प्रार्थ्य, एनं शङ्खदत्तं मोचयति स्म । स शङ्खदत्तः भवस्य पराभवं दुःखं शङ्कते इत्येवंशीलः सन् भवपराभवभयादिति भावः । तापसस्य मुनेः सविधे तपस्यां दीक्षामग्रहीत् ॥१२२॥

ફરીથી જિનદત્તે રાજાને વિનંતી કરીને તે શંખને છોડાવ્યો. સંસારના પરાભવની આશંકાવાળા તેણે તાપસની પાસે વ્રતનું-તપસ્યાનું ગ્રહણ કરી સંન્યાસ લઈ લીધો. ॥૧૨૨॥

संविधाय घनबालतपांसि, स्वायुषः स निधनं प्रतिपद्य ।
व्यन्तरत्वमनुभूय भवं च, व्यन्तरोऽहमभवं पुनरेव ॥१२३॥

घनानि प्रचुराणि बालानि अज्ञानानि तपांसि, संविधाय कृत्वा, स्वायुषः निजायुषः निधनं मृत्युं प्रतिपद्य प्राप्य, व्यन्तरत्वं भवं अन्तरा मनुष्यादि जन्म च अनुभूय सः अहम् पुनरेव व्यन्तरः अभवम् ॥१२३॥

ઘણાં બાલતપો કરીને આયુષને અન્તે મરણ પામીને વ્યંતરપણાનો ને ભવોનો અનુભવ કરી હું ફરીથી વ્યંતર જ થયો છું. ॥૧૨૩॥

आर्हतः स परमो जिनदत्तः, स्वर्गमाद्यमधिगम्य ततश्च ।
विच्युतो नृप ! भवानपि जज्ञे, देव [illegible]व्यपदकस्मि [illegible] ॥१२४॥

परमः आर्हतः आर्हद्धर्मभक्तः स जिनदत्तः, आद्यं [illegible] स्वर्गमधिगम्य, ततः

भायस्वर्गाच्च विच्युतः च्यवितः भवानपि अभ्रे । नृप ! तेन हेतुना, तव अहं मैत्र्यपदं मित्रमस्मि ॥ १२४ ॥

हे राजा ! परम श्रावक એવો તે જિનદત્ત સૌધર્મ દેવલોકમાં ઉત્પન્ન થઈ, ત્યાંથી ચ્યવી આપ થયા છો તેથી તમારો હું મિત્ર છું. ॥૧૨૪॥

ये त्वया विरचिता उपकारा—स्तानहं गणयितुं कथमीशः !
काञ्चनक्षितिधरस्य सुवर्णं, कः प्रभुस्तुलयितु यदि वा स्यात् ? ॥१२५॥

त्वया, ये उपकारा विरचिताः कृताः, तानुपकारान् गणयितुं अहं कथमीशः समर्थः ? न कथमपीत्यर्थः । उपकाराणामत्यधिकत्वादिति भावः । यदि वा, काञ्चनक्षितिधरस्य सुमेरोः सुवर्ण तुलयितुमियत्तयाऽवधारयितुं कः प्रभुः स्यात् ? न कोऽपीत्यर्थः । यथा सुमेरुसुवर्णतोलनमसंभवि, तथा तवोपकारगणनमपीति । बिम्बप्रतिबिम्बभावेनोपन्यासान्निदर्शनाऽलङ्कारः ॥१२५॥

આપે મારી ઉપર જે ઉપકાર કર્યો હતો હું તે ગણવાને સમર્થ શી રીતે થઈ શકું ? મેરુ પર્વતનું સોનું તોલવાને કોણ સમર્થ થઈ શકે ? ॥૧૨૫॥

मोचितो नरपतेर्भवताऽहं, यद् द्विरस्मि तदिदं हृदयं मे ।
सर्वदा न विजहाति ततस्त्वं, कृत्यमादिश किमप्युचितं मे ॥१२६॥

भवता अहं यत् नरपतेः राज्ञः द्विः द्विवारं मोचितः रक्षितः अस्मि, तदिदं रक्षणं सर्वदा मे मम हृदयं न विजहाति विस्मरति, ततस्तस्माद्धेतोः, त्वं मे मम उचितं योग्यं किमपि कृत्यं कार्यम् आदिश आज्ञापय ॥१२६॥

આપે જે રાજા પાસેથી મને બેવાર છોડાવ્યો હતો, તે વાતને મારું મન કદી ભુલતું નથી. તેથી જે મારે યોગ્ય હોય તેવા કોઈ કાર્યની કૃપા કરો. ॥૧૨૬॥

ननु उपकारः कर्त्तव्यः, न तु प्रत्युपकारः नैय एवेति नियम इत्येतदाह—

उत्तमा उपकृतेर्निरपेक्षाः, संभवन्त्युपकृतीरपि कृत्वा ।
वर्षुको जलधरोऽमृतवृष्टि—मादधत्किमपि वाञ्छति किं वा ॥१२७॥

उत्तमाः महीयांसः, उपकृतीः कृत्वा अपि, उपकृतेः प्रत्युपकृतेः, निरपेक्षा निराकांक्षाः संभवन्ति वा यथा, वर्षुकः वर्षणोन्मुखः जलधरः मेघः, अमृतस्य जलस्य वृष्टिमादधत् कुर्वन्नपि किमपि प्रत्युपत्कारं वाञ्छति किम् ? नैव वाञ्छतीत्यर्थः । तथा त्वमपि मत्तः किमपि प्रत्युपकृतिं न वाञ्छसीति संभवति, इत्यर्थः । अत्र सामान्यस्य विशेषणसमर्थनादर्थान्तरन्यासः ॥१२७॥

ઉત્તમ પુરુષો ઉપકાર કરીને (તેના બદલામાં) ઉપકારની અપેક્ષા રાખતા નથી. શું વરસવાવાળો મેઘ જલને વરસાવતો કંઈ ઇચ્છે છે ? નથી જ ઇચ્છતો. ॥૧૨૭॥

ननु तर्हि कुतः तदर्थं प्रार्थयसे इति चेत्तत्राह--

मां तथाप्यनृणमाचर राजन् ! स्वेप्सितप्रथनताविनियुक्त्या ।
क्वापि न प्रतिहता खलु शक्ति-र्व्यन्तरस्य करणीयपरस्य ॥१२८॥

तथापि प्रत्युपकारस्यानपेक्षणीयत्वेऽपि, राजन् ! स्वेप्सितस्य निजेष्टस्य प्रथनतायां करणे विनियुक्त्या व्यापारणेन माम्, अनृणम् ऋणरहितमाचर कुरु । स्वानृण्यायैव प्रार्थयामीति भावः । ननु त्वया मम किं साध्यं तत्राह—खलु यतः, करणीयपरस्य कार्यव्यापृतस्य व्यन्तरस्य शक्तिः, क्वापि, प्रतिहता कुण्ठिता न, सर्वमेव कार्यं व्यन्तरः साधयितुं शक्नोति, अप्रतिहतशक्तिकत्वात्, एवं च अन्येनासाध्यमपि कार्यमादेष्टुमर्हसि, इति भावः ॥१२८॥

छतां हे राजन् ! पोताने ईष्ट एवा कार्यनी आज्ञा करीने मने ऋणमुक्त करो. कार्य करवामां तत्पर एवा व्यंतरनी शक्ति क्याय पण अवरोधाती नथी. ॥१२८॥

एवमस्य वचनं विनिशम्य, क्षोणिनायकवरः स बभाषे ।
त्वत्प्रसादगरुडादरिनागा, मत्पुरं परिभवन्ति यथा न ॥१२९॥

व्यन्तरामर ! विधेहि तथा त्व–मागमं सफलयन्निजमेव ।
इत्युदारवचसाऽवनिभर्त्तुः, सोऽत्र पत्तनमिदं निरमासीत् ॥१३०॥

अस्य व्यन्तरस्य एवमुक्तप्रकारं वचनं विनिशम्य, क्षोणिनायकवरः राजप्रवरः स महेन्द्रः बभाषे, तदेवाह— त्वत्प्रसादः कृपा एव गरुडः तस्मात्, अरयः शत्रवः एव नागाः सर्पाः, यथा येन प्रकारेण मत्पुरं न परिभवन्ति, व्यन्तरामर ! त्वं निजागमं स्वागमनम्, एव सफलयन्, तथा विधेहि कुरु । इतीत्थम् अवनिभर्त्तुः राज्ञः उदारवचसा, स व्यन्तरः, अत्र इदं शून्यपत्तनं नाम पत्तनं नगरं निरमासीत् ॥१२९-१३०॥

ते व्यंतरनुं आवुं वचन सांभळी ते राजा बोल्यो के—हे व्यंतर देव, तमे पोताना आगमनने सफल करतां मारा नगरने तमारी कृपारूपी गरुडना प्रभावे शत्रुरूपी सर्पो पीडे नहि तेम करो, ते व्यंतरे राजाना उदार वचनथी अहीं आ नगर वसाव्युं हतुं ॥१२९॥१३०॥

---

टी० अजितप्रभाचार्यकृतशान्तिचरित्रे—

पुरं चाकारि तेनेदं, पातालपुरनामकम् ।
प्रवेशनिवेशावेक—कूपेनैवास्य सुन्दर ॥३३२॥ [ पृ० २१ मां ]
रक्षार्थं कूपकस्यापि, द्वितीयं विहितं पुरम् ।
ततः प्रवहणैरत्र, नानावस्तुसमागमः ॥३३३॥
एवं च विहिता तेन, शून्येयं नगरद्वयी ।
एकैव रक्षिताऽहं तु, परिणेतुं दुरात्मना ॥३३४॥

कीदृशमेतत्पुरमित्याह—

संप्रवेशनविनिर्गमनाभ्यां, युक्तमन्धुविनिबन्धलसद्वाः ।
न स्वचक्रपरचक्रभयाभ्यां, संश्रितं जितमहेन्द्रपुरश्रि ॥१३१॥

संप्रवेशः पुरप्रवेशद्वारम्, तेन, विनिर्गमनम् नगराद्बहिर्गमनद्वारं च तेन चोभाभ्यां युक्तम्, अन्धोः कूपस्य विनिबन्धेन निर्माणेन कृत्वा लसत् शोभनं वाः जलं यस्मिन् तत्तादृशम्; स्वचक्रं निजराष्ट्रम् परचक्रं परराष्ट्रं च ताभ्यां भीतिभ्यां संश्रितं न, निर्भयमित्यर्थः । जिता महेन्द्रपुरस्य स्वर्गस्य श्रीः येन तत्तादृशमेतत्पुरं निरमासीदित्यर्थः ॥१३१॥

આ નગરમાં પ્રવેશ અને નિર્ગમ—નિકળવાના માર્ગોથી યુક્ત એવા કુવામાં અથાગ પાણી રહેલું છે. અને આ નગરને સ્વચક્ર ને પરચક્રનો ભય નથી. ઈન્દ્રપુરને જીતે એવી શોભાવાળું છે. ॥૧૩૧॥

सत्क्रयाणकततिर्विषयेभ्यो—ऽभ्यागमत्प्रवहणैरपरेभ्यः ।
श्रीयुगादिजिनराज्यवदस्मिन्, भिक्षुकस्य विदितं न च नाम ॥१३२॥

अस्मिन् पुरे अपरेभ्योऽन्येभ्यो विषयेभ्यो देशेभ्यः, प्रवहणैः पोतद्वारा, सतामुत्तमानां क्रयाणकानां प्रयोजनीयखाद्यादिवस्तूनां ततिः राशिः, अभ्यागमत् । तथा, श्रीयुगादिजिनस्य वृषभप्रभोः राज्यवत्, भिक्षुकस्य याचकस्य नाम च विदितं ज्ञातं न । सर्वे अत्र श्रीमन्त एव सन्तीति भावः ॥१३२॥

અહીં બીજા દેશોથી વહાણો દ્વારા સારા કરીયાણાના ગંજો આવતા હતા, ને આદિનાથ જિનેશ્વરના રાજ્યની જેમ અહીં ભિક્ષુકનું નામ પણ કોઈને જ્ઞાત ન હતું. ॥૧૩૨॥

अध्युवास सकलैः सह पौरै—र्भूपतिस्तदिदमेव सुखाय ।
इत्यतुल्यमुपकृत्य नृपाय, व्यन्तरः स निजधाम जगाम ॥१३३॥

ततस्तस्माद्धेतोः भूपतिः सकलैः पौरैः सह सुखाय परचक्रादिकृतभयोद्वेगाभावाय, इदमेव पुरमध्युवास । इतीत्थं नृपाय, अतुल्यम् अद्वितीयं यथा स्यात्तथोपकृत्य. स व्यन्तरः, निजधाम निजस्थानं जगाम ॥१३३॥

આ નગરમાં રાજા બધા નગરવાસિયો સાથે સુખપૂર્વક રહેતા હતા. આમ રાજાનો અનુપમ ઉપકાર કરી તે વ્યંતર પોતાના સ્થાને ગયો. ॥૧૩૩॥

वत्सरेष्वतिपतत्सु मुदैव, पौरकल्मषसमुच्छ्रयनुन्नः ।
कोऽपि मर्त्यपिशिताशनविद्या—भृत्समागमदिहानुपलक्ष्यः ॥१३४॥

मुदैव प्रमोदेनैव वत्सरेषु वर्षेषु अतिपतत्सु व्यतिपतत्सु, पौराणां कल्मषस्य पापस्य समुच्छ्र-

येण वृद्धया नुन्नः प्रेरितः इव, नहि पापवृद्धिं विनोपद्रवोपपात इति भावः । अनुपमौजाः महासत्वः मर्त्यानां पिशितस्य मांसस्य अशनस्य भक्षणस्य विद्यां बिभर्त्तीति स तादृशः मर्त्यमांस-भक्षकः कोऽपि विद्याधरः इह नगरे समागमत् ॥१३४॥

હર્ષપૂર્વક ઘણાં વર્ષો પસાર થતાં નગરવાસીઓના મોટા મહાન્ પાપોથી પ્રેરાયેલો મનુષ્યનાં માંસ ખાવાની વિદ્યાનો જાણકાર એવો અનુપમ તેજસ્વી કોઇ પુરુષ અહીં આવ્યો હતો. ।।૧૩૪।।

तेन पौरनिकुरम्बमशेषं, प्राणवृत्तिमुपकल्पयतैव ।
ग्रस्तमेतदुभयोरपि पुर्यो-र्नष्टमन्यदविनष्टबलं च ॥१३५॥

तेन विद्याधरेण पौरनिकुरम्बं पौरसमूहं प्राणवृत्तिमाजीविकामुपकल्पयता कुर्वता एव एतत् नगरं ग्रस्तं भक्षितम् । उभयोरपि पुर्योरेतन्नगरपूर्वनगरयोश्च अविनष्टं बलं सैन्यं कथंचिद्भ-क्तावशिष्टं बलं चान्यत्सर्वं नष्टं पलायितम् ॥१३५॥

તે નગરવાસીઓના સમૂહને પોતાના પ્રાણ રક્ષણનું સાધન બનાવી આ નગરના લોકોનો કોળીયો કરી ગયો. બન્ને નગરમાં જે કંઇ બલવાન હતું તે બધું નષ્ટ થઇ ગયું. ।।૧૩૫।।

सम्प्रति स्ववृत्तान्तमाह--

कन्यकाऽहमपि भूपुरहूत-स्याख्यया तिलकसुन्दरिकेति ।
सप्तमेऽह्नि भणिताऽहमतोऽह्नः, कौणपेन शृणु सुन्दरि ! किञ्चित् ॥१३६॥

भुवि पुरहूत इन्द्र इव तस्य महीन्द्रस्य महेन्द्रस्य, आख्यया नाम्ना तिलकसुन्दरी इति कन्यका अहमपि, अतः अस्मात् अह्नः दिवसात्, सप्तमे व्यतीते अह्नि [1]कौणपेन [2]राक्षसेन "राक्षसः कौणपः क्रव्याद्" इत्यमरः । भणिता कथिता । किमित्याह-सुन्दरि ! किञ्चित् शृणु ॥१३६॥

હું રાજાની તિલકસુંદરી નામે કન્યા છુ. આ દિવસથી ગયા સાતમે દિવસે તે રાક્ષસે મને કીધું કે હે સુંદરી, કાંઇ સાંભળો. ।।૧૩૬।।

किं किञ्चिदित्याह--

रत्नसञ्चयपुरे किल वैता-ढ्याद्रिमण्डनमणौ समभूवम् ।
भूपतिः पवनवेग इतीड्यो, मर्त्यजाङ्गलरतिः क्रमतोऽयम् ॥१३७॥

वैताढ्याद्रेः मण्डनेऽलंकरिष्णौ "अलंकरिष्णुस्तु मण्डनः" इति हैमः [3]मणिरिव तत् तस्मिन् रत्नसञ्चयपुरे पवनवेग इतीड्यः इत्याख्यः भूपतिः अहं क्रमत क्रमात् मर्त्यस्य मनुष्यस्य [4]जाङ्गले

१--कौणप इव कौणपस्तेन ।
२--राक्षसतुल्येन विद्याधरेण ।
३--भूषणे मणौ मण्युपमे ।
४--मांसे--तद्भक्षणे इत्यर्थः ।

भक्षणे रतिः प्रीतिर्यस्य स तादृशः मनुष्यमांसभक्षकः समभूवम् ॥१३७॥

હું વૈતાઢય પર્વતના ભૂષણુ મણિસમાન રત્નસંચયપુરમાં પવનવેગ નામે પ્રશંસનીય રાજા હતો. હું ક્રમે ક્રમે મનુષ્ય માંસ ખાવાની રુચિવાળો થઇ ગયો. ॥૧૩૭॥

यातुधानकुलसंप्रतिपन्नं, कर्म तद्विरचयन् सचिवार्यैः ।
त्याजितो नृपपदं छलवृत्त्या, विभ्रमँस्तव पितुः पुरमागाम् ॥१३८॥

यातुधानस्य राक्षसस्य "कौणप-यातुधानौ" इति हैमः । कुलेन संप्रतिपन्नं स्वीकृतं तन्मनुष्यभक्षणरूपं कर्म कृत्यं विरचयन् कुर्वन्, सचिवार्यैः आर्यैः सज्जनैः "सभ्यार्यसज्जनाः" इति हैमः । सचिवैः, नृपपदं राजत्वं राज्याधिकारं वा त्याजितः, छलवृत्त्या कपटवेषेण विभ्रमन् तव पितुः पुरम् आगाम्, अहमिति शेषः ॥१३८॥

મંત્રિશ્રેષ્ઠોએ મારું તે કામ રાક્ષસ કુલને યોગ્ય ઠરાવીને છલથી મારું રાજાનું પદ છોડાવી દીધું પછી ભમતો ભમતો હું તમારા પિતાના નગરે આવ્યો. ॥૧૩૮॥

त्यक्तवानहमशेर्भवतीं य-त्तेन विद्धि नियतं परिणेता ।
इत्युदीर्य स जगाम च सम्प्र-त्यागमिष्यति गमी निरयान्तः ॥१३९॥

अहम् अशेः भोजनक्रियातः, भवतीं त्वाम्, यत्त्यक्तवान् त्वां नादमित्यर्थः । तेन हेतुना नियतं निश्चयेन, परिणेता विवोढा, त्वामिति शेषः, विद्धि जानीहि । इतीत्थमुदीर्य उक्त्वा, निरयान्तः नरके "स्यान्नारकस्तु नरको निरयो दुर्गतिः स्त्रियाम्" इत्यमरः । गमी गमिष्यन्, स राक्षससदृशः पवनवेगः जगाम, सम्प्रति च आगमिष्यति ॥१३९॥

મેં તમારું ભક્ષણ કર્યું નહિ તેથી નિશ્ચયે તમને પરણીશ એમ જાણો. એમ કહીને ક્યાંક ગયો છે હમણાં જ તે નરકગામી આવશે. ॥૧૩૯॥

नन्वागच्छतु स, तेन किमित्यत आह—

तत्प्रयाहि परिहाय विलम्बं, जीवितं निजमवेति कुमार्या ।
व्याहृतः प्रवदति स्म स भीतिं, मा कृथास्तमहमद्य निहन्मि ॥१४०॥

तत्तस्माद्धेतोः, विलम्बं परिहाय त्यक्त्वा शीघ्रमेवेत्यर्थः । प्रयाहि गच्छ । निजं जीवितं प्राणान् अव रक्ष, आगमने हि स त्वामपि अत्स्यतीति तव जीवितनाशो ध्रुवं स्यादिति भावः । इतीत्थं कुमार्या व्याहृतः उक्तः स धनदः, प्रवदति स्म, किमित्याह—भीतिं भयं मा राक्षसवृत्तिं पवनवेगं कृथाः, अहमद्य, तं राक्षसं निहन्मि नाशयामि ॥१४०॥

માટે તમે અહીંથી વિના વિલંબે જતા રહો, પોતાનો જીવ બચાવો. એમ તે કુમારીએ કીધું ત્યારે તે ધનદ બોલ્યો કે તમે ભય કરો નહિ, હું તેને આજે હણું છું. ॥૧૪૦॥

साऽप्युवाच हृषिताखिलरोमा, यद्यवश्यमिदमाचरितासि ।
देवतार्चनमसौ विदधान–स्तन्न वक्ति गदितोऽपि मघोना ॥१४१॥
*मत्समर्पितपितुर्निशितासि–प्रेरणान्निधनमापय चैनम् ।
जल्पतोरिति तयोरविशङ्क–माययौ स लघुखेचरपाशः ॥१४२॥

हृषितम् अखिलं रोम यस्याः सा तादृशी पुलकिता सा तिलकसुन्दरी अपि उवाच, यदि अवश्यम् इदम् तद्धननम्, आचरिता असि करिष्यसि, तदा, असौ राक्षसः, देवतार्चनं विदधानः कुर्वन्, पूजासमये इत्यर्थः, मघोना इन्द्रेणापि गदितः पृष्टः न वक्ति तदा नितरां ध्यानस्थो जायते इत्यर्थः । तत्तस्माद्धेतोः । मया समर्पितस्य दत्तस्य ( मम समर्पकस्य दातुः पितुः निशितस्य तीक्ष्णस्य असेः खड्गस्य प्रेरणात्प्रहारात्, एनं विद्याधरं पवनवेगं निधनं मृत्युमापय मारयेत्यर्थः । इतीत्थं जल्पतोः वदतोस्तयोः सतोः, खेचरपाशः दुष्टः खेचरः विद्याधरः, लघु शीघ्रमेव, अविशङ्कं यथा स्यात्तथाऽऽ-ययौ ॥ १४१–१४२ ॥

ત્યારે રોમાંચ અનુભવતી તે બોલી કે તો તમે આમ અવશ્ય કરી શકશો. દેવતાની પૂજા કરતો તે ઇન્દ્રે બોલાવ્યા છતાં ય બોલતો નથી. ॥૧૪૧॥

તે સમયે મારા પિતાએ આપેલી તલવારના ઘાથી એને મારી નાખો. આમ તે બન્ને જણા વાત કરતા હતા ત્યારે તે ક્ષુદ્ર વિદ્યાધર નિઃશંક રીતે ત્યાં આવ્યો. ॥૧૪૨॥

आपतन्तमवलोक्य तमारा–त्तस्थिवान् स धनदोऽपि निलीय ।
खेचरोऽप्युपविवेश स विद्या–देवतार्चनचिकीः शुचिदेहः ॥१४३॥

तं राक्षसम् आपतन्तं वेगादागच्छन्तमवलोक्य, स धनदोऽपि आरान्नातिदूरे एव, निलीय अन्तर्धाय तस्थिवान्, देवतार्चनं चिकीर्षतीति स तादृशः देवपूजनेच्छुः, अत एव, शुचिदेहः स्नाना-दिना पवित्रशरीरः सन् स खेचरः विद्याधरः अपि उपविवेश, आसने इति शेषः ॥१४३॥

ધનદ તેને દૂરથી આવતો જોઇ સંતાઇને રહ્યો. તે વિદ્યાધર પણ પવિત્ર દેહવાળો થઇ વિદ્યાદેવીની પૂજા કરવાની ઇચ્છાથી બેઠો. ॥૧૪૩॥

बालिकार्पितमसौ करवालं, धारयन् करसरोरुहमध्ये ।
तर्जयंस्तमिदमभ्यधितारे ! तिष्ठ तिष्ठ शठ ! रे ! क्व नु गन्ता ! ॥१४४॥

असौ धनदः बालिकया तिलकसुन्दर्या अर्पितं दत्तं करवालमसिम्, करः पाणिः सरोरुहं कमलमिव तन्मध्ये धारयन् गृह्णन्, तं खेचरं तर्जयन् भर्त्सयन् इदं वक्ष्यमाणमभ्यधितोक्तवान्, तदेवाह–अरे ! रे ! शठ ! दुष्ट ! तिष्ठ तिष्ठ ! क्रोधे द्विरुक्तिः, क्व नु गन्ता ! पलाय्यान्यत्र गन्तुं

* अयं च खड्गो मत्तात–सत्को ग्राह्यस्त्वया सदा ॥३४४॥ (शान्तिचरित्रे)

न शक्नोषि, ततः पूर्वमेव मया तव वधसम्पादनादिति भावः ॥१४४॥

ત્યારે તે ધનદ બાલિકાએ આપેલી તલવારને કર-કમલમાં ધારણ કરતો તે વિદ્યાધરને આમ ફટકારતો બોલ્યો કે હે દુષ્ટ, થોભ થોભ, આજે તું ક્યાં જવાનો છો ? ॥૧૪૪॥

भाषितोऽपि मुहुरुद्धतमेवं, जोषमास्थित कृतार्चनकृत्यः ।
यावदेव शनकैः स उदस्था–त्तेन तावदसिना विनिजघ्ने ॥१४५॥

मुहुः वारंवारम्, एवमुक्तरीत्या, उद्धतं निष्ठुरं यथा स्यात्तथा भाषितः अपि, जोषं तूष्णीमास्थितः, अन्यथा पूजायामन्तरायापत्तेः, 'तूष्णीमर्थे जोष'मित्यमरः । पश्चात्कृतार्चनकृत्यः पूजां विधाय स खेचरः । यावद्यदवध्येव, शनकैः शनैः उदस्थादुत्थितवान, तावदेव तेन धनदेन, असिना खड्गेन विनिजघ्ने हतः ॥१४५॥

આમ વારંવાર ઉદ્ધતાઈથી બોલાવ્યો છતાં પણ તે મુંગો રહ્યો. પૂજાની વિધિ કરી તે જેટલામાં ધીમેથી ઉઠે તેટલામાં ધનદે તલવારથી તેને હણી નાખ્યો. ॥૧૪૫॥

पाणिपीडनविधिस्थितिहेतो–राहृतोपकरणैरपि तस्य ।
भूमिपालतनयां धनदोऽथ, सानुरागहृदयामुपयेमे ॥१४६॥

अथ तस्मिन् हते सति धनदः तस्य खेचरस्य, पाणेः तिलकसुन्दरीकरस्य पीडनस्य ग्रहणस्य विधेः स्थितिरेव मर्यादैव हेतुस्तस्मात्, पाणिग्रहणमित्यर्थः । आहृतैः सञ्चितैरुपकरणैः सामग्रीभिः खेचरवधादिषु दृष्टशौर्यादिना, सानुरागं धनदे सप्रीतहृदयं यस्यास्ताम्, अनुरक्ताम्, भूपस्य महेन्द्रनृपस्य तनयां पुत्रीं तिलकसुन्दरीमुपयेमे पत्नीत्वेन स्वीकृतवान् ॥१४६॥

પછી પાણિગ્રહણની મર્યાદા પાલવા સારુ તે વિદ્યાધરે જ લાવેલા ઉપકરણોથી જ તે ધનદ અનુરક્ત એવી રાજાની કન્યાને પરણ્યો. ॥૧૪૬॥

अथ तयोर्दम्पत्योस्तन्नगरान्निर्गमनमाह—

किञ्चिदत्र समयं सुखमग्नः, कान्तया सह तया गमयित्वा ।
पूर्महार्घ्यतमरत्नसमेतः, कूपमार्गमभिसृत्य स तस्थौ ॥१४७॥

अत्र नगरे तया कान्तया तिलकसुन्दर्या सह, सुखमग्नः सन्, किञ्चित्समयं गमयित्वा व्यतीत्य, पुरः पुरः नगरस्य यानि महार्घ्यतमानि अतिबहुमूल्यानि रत्नानि तैः समेतः सनाथः, पुरस्य बहुमूल्यं रत्नमादायेत्यर्थः । स धनदः यद्वा तया कान्तया सह स इत्यन्वयः, कूपमार्गम् अभिसृत्यागत्य तस्थौ ( तत्र स्थितिः ) उपरि निर्गमनोपायाभावादित्यर्थः ॥१४७॥

તે ધનદ ત્યાં તે પત્ની (સ્ત્રી) સાથે સુખપૂર્વક થોડો સમય વિતાવી તે અમૂલ્ય રત્નની સાથે કુવામાંથી બહાર નીકળવાને માર્ગે કુવા પાસે રાજમાર્ગમાં થઈ કુવામાં જઈને રહ્યો. ॥૧૪૭॥

यावदागमयते स तु तत्र, पूरुषान् परमपौरुषभाजः ।
तावदेव कतिचित्समुपेता, न्यक्षिपन् सलिलभाजनमन्धौ ॥१४८॥

स तु धनदश्च तत्र कूपे, परमपौरुषमत्यधिकसामर्थ्यं ये भजन्तीति तादृशान् कूपान्निर्गमनसामर्थ्यवतः, पूरुषान् जनान् "स्युः पुमांसः पञ्चजनाः पुरुषाः पूरुषा नराः" इत्यमरः । यावत् आगमयते आगमनकालं प्रतीक्षते, तावदेव समुपेताः स्वयं समागताः कतिचित्पुरुषाः सलिलभाजनम् घटादि, अन्धौ कूपे न्यक्षिपन् मुक्तवन्तः जलाहरणार्थमिति भावः ॥१४८॥

જેટલામાં તે ત્યાં બલવાન પુરુષોની આવવાની રાહ જુએ છે તેટલામાં આવેલા કેટલાકોએ પાણી કાઢવા સારૂ પાત્ર કુવામાં નાખ્યું. ॥૧૪૮॥

रज्जुचालनवशादवबुध्य, स्त्रीसखं पुरुषमेव निरीक्ष्य ।
तत्स्वरूपमवगम्य च देव-दत्तपोतवणिजे जगदुस्ते ॥१४९॥

रज्जोः उद्ग्रहणदाम्नः धनदकृतस्य चालनस्य गृहीत्वा कम्पनस्य वशाद्धेतोः अवबुध्य कोऽपि रज्जुं गृहीतवानस्ति इति ज्ञात्वा, जिज्ञासानिवृत्तये, कृताधोदृष्टिपाताः, स्त्रीसखं स्त्री सखा सहायो यस्य स तं स्त्रीसहितं पुरुषं निरीक्ष्य, तयोः स्वरूपं वृत्तान्तमवगम्य च, ते पुरुषाः, देवदत्तः तन्नामा यः पोतवणिक् तस्मै जगदुः कथयामासुः, तदखिलमुदन्तमिति शेषः ॥१४९॥

દોરી હલાવાથી જાણીને તે સ્ત્રી સહિત પુરુષને જોઈને તેનો પરિચય મેળવીને તેઓએ વહાણુ વ્યાપારી દેવદત્તને કહ્યું. ॥૧૪૯॥

सोऽपि विस्मयपरिप्लुतचेता-स्तत्क्षणादनुचरैः सममेत्य ।
स्वापतेयदयितायुतमन्धो-र्मञ्चकेन निरजीगमदेनम् ॥१५०॥

सः पोतवणिग् देवदत्तोऽपि, कुतः कूपे दम्पतीसम्भव इति विस्मयेन कौतूहलेन परिप्लुतं व्याप्तं चेतो यस्य स कुतूहलाविष्टः सन्, तत्क्षणात्, अनुचरैः समं सह एत्यागत्य, स्वापतेयेन वित्तेन "वित्तं रिक्थं स्वापतेयं" इति हैमः दयितया भार्यया च युतमेनं धनदं मञ्चकेन काष्ठासनेन वंशादिनिर्मितपीठविशेषद्वारा, अन्धोः कूपात् निरजीगमत् उपर्यानीतवान् ॥१५०॥

તે પણ વિસ્મય પામેલા મનવાળા દેવદત્તે નોકરો સાથે આવી, ધન અને પત્ની સાથે તે ધનદને માંચડાવડે કુવાથી બહાર કાઢ્યો. ॥૧૫૦॥

सप्रियं स तमवेक्ष्य सरूपं, विस्मितः स्मितपुरस्सरमूचे ।
ईदृशस्त्वमुपमातिगमूर्तिः, सन्मते ! निपतितः कथमन्धौ ? ॥१५१॥

स देवदत्तः सप्रियं सपत्नीकम्, सरूपं रूपवन्तं तं धनदमवेक्ष्य, विस्मितः जाताश्चर्यः, अद्भुतसौन्दर्यविलोकनादिति भावः, स्मितपुरस्सरं विहस्य ऊचे, किमित्याह—सन्मते ! सुज्ञ ! ईदृशः

मनोहरः, अत एव उपमातिगा अनुपमेया मूर्तिः यस्य स अनन्यलावण्यशरीरः, त्वं कथं केन प्रकारेण अस्मौ कूपे निपतितः पतितवान् ? इति वृत्तं कथयेति शेषः ॥१५१॥

દેવદત્તે પત્ની સાથે તેનું તે સ્વરૂપ જોઇ વિસ્મય પામીને, પછી હસતાં હસતાં કીધું કે હે બુદ્ધિમાન, આવો અનુપમ રૂપવાલો તૂં કૂવામાં શી રીતે પડ્યો ? ॥૧૫૧॥

तन्निशम्य स बभाण सधैर्यं, भग्नपोतविभवोऽम्बुसमीपे ।
तीरमाप्य फलकेन कथंचि-न्नीरमत्र च निरैक्षिषि पश्यन् ॥१५२॥

तद्देवदत्तोक्तं निशम्य, स धनदः, सधैर्यमनाकुलं बभाणोचे, किमित्याह—अम्बुसमीपे कूपस्य नातिदूरे एव प्रदेशे समुद्रे, भग्नपोतविभवः भग्नः पोतः विभवश्च यस्य स तादृशः, अहमिति शेषः, फलकेन काष्ठखण्डेन, कथंचित् येन केन प्रकारेण, तीरमाप्य, पश्यन् इतस्ततोऽन्विष्यन्, अत्र कूपे नीरं जलं निरैक्षिषि अदर्शम् ॥१५२॥

તે સાંભલી તે ધનદ ધૈર્ય સાથે બોલ્યો કે વહાણનું ધન નષ્ટ થવા પછી હું લાકડાના ટુકડાના આધારે કષ્ટથી કાંઠે પહોંચ્યો. આ કૂવા પાસે આવતાં આમા પાણી જોયું. ॥૧૫૨॥

एषिकाऽतितृषिता जलमिच्छुः, कूप एव निपपात जवेन ।
नैव निर्गमयितुं प्रभुरेतां, पृष्ठ एव निपपात तदस्याः ॥१५३॥

एषिका एषा मम भार्या अतितृषिता नितान्तं पिपासिता, अत्र एव जलमिच्छुः, जवेन वेगेन कूप एव पपात, विलम्बस्यासहनादिति भावः । एतां प्रियां निर्गमयितुमुपर्यानेतुं नैव प्रभुः समर्थः, तस्माद्धेतोः, अस्याः प्रियायाः, पृष्ठ एव, निपपात अहमप्यपतम्, एकाकिन्याः अस्या कूपे प्रकारान्तरेणारक्ष्यत्वात्, प्रेमातिशयाच्चेति भावः ॥१५३॥

અત્યંત તરસી આ સ્ત્રી પાણીને ઇચ્છતી વેગથી કૂવામાં પડી ગઈ. હું આને કૂવાથી કાઢવાને અસમર્થ હોવાથી હું પણ આની પાછલ કૂવામાં પડી ગયો. ॥૧૫૩॥

नन्वेवं रत्नान्येतानि कूपे कुतः प्राप्तानीत्याशङ्कां समाधत्ते—

रत्नमुख्यमखिलं व्यतरन्मे, संप्ररूढकृपया जलदेवी ।
सात्त्विकस्य पुरुषस्य हि वृद्ध्या, देवता हृदि वहन्ति समाधिम् ॥१५४॥

जलदेवी संप्ररूढकृपया मम दुरवस्थां दृष्ट्वा उत्पन्नकरुणया, मे मह्यम्, अखिलं रत्नमुख्यं वस्तु व्यतरत् ददौ, ननु तुभ्यं रत्नदाने जलदेव्याः, को लाभ इति चेत्तत्राह—हि यतः, सात्त्विकस्य सत्त्वगुणसम्पन्नस्य पुरुषस्य वृद्ध्या अभ्युदयेन देवताः हृदि समाधिं सन्तोषं वहन्ति धारयन्ति

सात्त्विकेन स्वशुश्रूषायाः संभवात्, तामसेन तु न इति तद्वृद्ध्या समाधेर्नानवसर इति भावः ॥ १५४ ॥

ત્યારે દયા ઉત્પન્ન થવાથી જલદેવીએ મને બધા શ્રેષ્ઠ રત્નો આપ્યા. કેમકે સાત્ત્વિક પુરુષની આરાધનાથી દેવતાઓ મનમાં સંતોષ પામે છે. ॥૧૫૪॥

कान्तया सह षडंशगृहीत्या, यानपात्रमधिरोपित एषः ।
भाटकं कपटलम्पटचित्ताः, कस्य लान्ति वणिजो न हि लोके ? ॥१५५॥

कान्तया सह एषः धनदः षडंशयस्य षड्भागस्य गृहीत्या ग्रहणेन अर्थात् धनदवित्तषड्भागात्मकभाटकग्रहणेनेत्यर्थः । यानपत्रं पोतम् अधिरोपितः अधिरोहितः, पारनयनायेति शेषः । ननु तादृशदुरवस्थात्सहृदयस्य भाटकग्रहणं न युज्यते इति चेत्तत्राह—वणिजः कस्य भाटकं न लान्ति ? अपि तु सर्वस्यैव गृह्णन्त्येव, हि यतः, लोके भुवि, कपटे छले लम्पटम् आसक्तं चित्तं येषां ते तादृशाः, वणिजो हि सहजकपटिनः, न सत्स्वपि ऋजवो भवन्तीति ततो भाटकग्रहणं न नवीनमिव तस्येति भावः ॥१५५॥

( પછી. ) તે દેવદત્તે પત્ની સાથે તે ધનદત્તે ( રત્નના ) છઠ્ઠા અંશના ભાડાથી. વહાણ ઉપર ચઢાવી લીધો. કપટી વણિકો લોકમાં કોની પાસેથી ભાડું લેતા નથી. ॥૧૫૫॥

अन्तरम्बुनिधि गच्छति पोते, देहचिन्तनविधौ विनिविष्टम् ।
तत्प्रिया हृतमना धनदं सो–ऽक्षेपयज्जलनिधौ वणिगीशः ॥१५६॥

अन्तरम्बुनिधि जलधिमध्ये पोते यानपात्रे गच्छति यानि सति, तस्य धनदस्य प्रियायाः हृतौ हरणे मनः यस्य सः, वणिगीशः देवदत्तः, देहचिन्तनविधौ पुरीषाद्युत्सर्गक्रियायां विनिविष्टं संलग्नमुपविष्टं वा, धनदं जलनिधौ अक्षेपयदपातयत् ॥१५६॥

સમુદ્રની વચ્ચે વહાણ ચાલતુ હતું ત્યારે દેહચિંતાની ક્રિયામાં લાગેલા ધનદત્તને તેની પત્ની તરફ આકર્ષયેલા મનવાલા દેવદત્તે સમુદ્રમાં ફેંકી દીધો. ॥૧૫૬॥

नन्वेतन्न विवेकिनामुचितमित्यत आह—

कापथे पदनिवेशनसक्तं, व्यक्तमेव परियाति विवेकः ।
मानसं दहति मन्मथवह्नौ, स क्व तिष्ठतु निराश्रयवृत्तिः ? ॥१५७॥

विवेकः कृत्याकृत्यविचारः, कापथे विपथे, अनीत्यावित्यर्थः पदनिवेशनसक्तं पदनिवेशनासक्तं । पदस्य निवेशने सन् सन्नेव सक्तः सन् वर्तमानस्तम्, कुमार्गगामिनं जनं व्यक्तं स्वयमेव परियाति परित्यज्य गच्छति, कुमार्गगामी विवेकशून्यो भवतीत्यर्थः । विवेकाभावे चोचितानुचितविचाराभावा-

यस्याकिञ्चित्करत्वं न विरुध्यते इति भावः । विवेकापाये युक्त्यन्तरमाह—मन्मथः काम एव विवेकादिनाशकतया मनोविकाररूपतापजनकतया च वह्निः तस्मिन्, मानसं दहति तापयति कामज्वरमुत्पाद्य पीडयति सति, निराश्रया निरवलम्बा वृत्तिः स्थितिः यस्य स तादृशः, सन्, स विवेकः क्व कुत्र तिष्ठतु ? न क्वापीत्यर्थः । विवेको हि मनोवृत्तिविशेषः, मनसि दग्धे च तद्वृत्तिः[2] निराश्रया सती सतो निर्गच्छेदेवेति सुष्ठूक्तं परियाति इति मनोभवाग्निनादह्यमाने मानसमन्दिरे विवेकस्सदाचारश्च भस्मीभवेदित्यत्र किमद्भुतमिति भावः ॥१५७॥

વિવેક કુમાર્ગે પગ માડવા વાલાને છોડી દે છે. તે રૂપષ્ટ છે કામદેવરૂપી અગ્નિમાં મન બલે છે. પણ તે કામદેવ નિરાશ્રય થઇને કયાં રહે ? ( કેમકે મન કામનો આશ્રય છે. ) ॥૧૫૭॥

खलस्य धनमनर्थायैवेत्याह—

पूर्वमस्य वसु तादृशमिद्धं, दापयत्यपथ एव पदानि ।
सा शशाङ्कवदना परिदृष्टा, तत्खलो नृपतिसम्पदमाप ॥१५८॥

अस्य देवदत्तस्य पूर्वं पुरा तादृशम् असाधारणम्, इद्धं सातिशयं वसु रत्नादिधनानि, अपथे उन्मार्गे एव पदानि प्रवृत्तिः दापयति अदीदपत्, वसु दृष्ट्वा तद्ग्रहणाय धनदं पोतेऽधिरोपितवान्, पश्चात्तु, सा शशाङ्कवदना चन्द्रमुखी, तिलकसुन्दरी, परिदृष्टा अवलोकिता सती, अपथे पदानि दापयति, तां दृष्ट्वा तद्ग्रहणाय तं जलधावपातयदिति सा दृष्टा अपथे पदानि दापयतीत्यर्थः । तत्तस्माद्धेतोः खलः दुर्जनः स देवदत्तः, नृपतेः सम्पदमाप, तादृशबहुमूल्यानि रत्नानि तादृशी सा सुन्दरी च नृपतियोग्यैवेति तल्लाभान्नृपसंपत्तिप्राप्तिरिति भावः ॥१५८॥

પહેલા તો તેને તેનુ તેજસ્વી ધનજ ખરાબ માર્ગે પગ મુકાવત, તે ચંદ્રમુખી જોવાયે છતે તો તે દુષ્ટ રાજ્યલક્ષ્મીને પામી ગયો. ॥૧૫૮॥

अन्यदा प्रवहणाधिपतिस्तां, शोकशङ्कुमपनेतुमिवासौ ।
ऊचिवांश्चटुवचोभिरधीरां, मा वृथा हृदि कृथाः परिखेदम् ॥१५९॥

अन्यदा असौ प्रवहणाधिपतिः पोतेशः देवदत्तः, शोक एवासह्यव्यथादायकत्वाच्छङ्कुः तम् अपनेतुं दूरीकर्त्तुमिव, वस्तुतस्तु स्वाभीष्टं साधयितुमित्यर्थः । अधीराम् असहायतया धैर्यरहितां तां तिलकसुन्दरीम् चाटुवचोभिः प्रिय प्राय वचनैः "च टु चा टु प्रियप्रायं इति हैमः" ऊचिवान् किमित्याह—हृदि वृथा निष्फलं परिखेदं शोकं मा कृथाः, त्वमिति शेषः, शोकेन न किञ्चित्फलमिति भावः ॥१५९॥

બીજા દિવસે તે વહાણનો માલિક દેવદત્તે તે તિલક સુન્દરીના શોકરૂપી ખિલાને કાઢવાને જાણે તેને

१—अकव्यमिति यदि पाठस्तदा पदनिवेशनासमर्थमित्यर्थः ।
२—तद्वृत्तिविशेषो निराश्रयस्सन् न सतो ।

પ્રિયવચનોથી કીધું કે ફોગટ અધીરા થાવ નહિ. અને મનમાં ખેદ કરો નહિ. ભાગ્ય યોગે તમારો તે પતિ મૃત્યુને પામ્યો. તો તેમાં શોક ન હોય. હે સુન્દરી તેના સ્થાને મને રાખો જેથી બધા સુખ સુલભ થાય. ॥૧૫૯॥

ननु स्वजनापाये शोक उचित एवेति चेत्तत्राह—

आससाद नियतेरपमृत्युं, तावकः स पतिरत्र न शोकः ।
तत्पदे सुतनु ! मामभिषिञ्च, येन शर्म सकलं सुलभं स्यात् ॥१६०॥

तावकः तव स पतिः धनदः, नियतेः भाग्यवशात्, अपमृत्युमकालमृत्युमाससाद प्राप, अत्र विषये शोकः न, उचित इति शेषः, भाग्याधीनकार्ये शोको न बुद्धिमतामुचितः, तस्यापरिहार्यत्वादिति भावः । ननु न तन्मात्रत एव शोकः, किन्तु असहायां मां को रक्षितेत्यतोऽपि शोकः इति चेत्तत्राह— सुतनु ! सुन्दरि ! तस्य स्वपतेः पदे स्थाने मामभिषिञ्च, मां स्वपतित्वेन स्वीकुरु, येन विधिना सकलं शर्म सुखं सुलभं स्यात्, एवं च न त्वमसहाया, किन्तु सातिसहाया स्या इति भावः ॥१६०॥

ભાગ્યયોગે તમારો તે પતિ મૃત્યુને પામ્યો તો તેમાં શોક ન હોય. હે સુન્દરી ! તેના સ્થાને મને રાખો જેથી બધા સુખ સુલભ થાય. ॥૧૬૦॥

दुष्कृतप्रवणमेव तदीयं, चेष्टितं समवधार्य हृदन्तः ।
साभ्यधत्त यदि भद्र ! नृपस्ते, मां प्रदास्यति तदा तव जाया ॥१६१॥

सा तिलकसुन्दरी हृदन्तः मनसि दुष्कृतस्य पापस्य प्रवणमुन्मुखमेव, तदीयं देवदत्तस्य चेष्टितं समाचरणं समवधार्य बुद्ध्वा निश्चित्य वा, अभ्ययत्त ऊचे । भद्र ! यदि नृपः, मां ते तुभ्यं प्रदास्यति, तदा तव जाया पत्नी, अहं स्यामिति शेषः । पित्रधीना हि कन्या, न स्वयं कमपि वरीतुं समर्था, अनौचित्यादिति भावः ॥१६१॥

તે તિલકસુન્દરી મનમાં તેની પાપાભિમુખ ચેષ્ટા જોઈ બોલી કે હે ભદ્ર ! જો રાજા તમને મને આપશે તો હું તમારી સ્ત્રી થઈશ. ॥૧૬૧॥

ननु एवमुक्त्वा सा तं विप्रतारितवती, तस्याः पितुरभावादित्यत आह—

सङ्कटे निपतिता विधियोगात्, प्रार्थयन्तमपरं पुरुषं वा ।
विप्रतार्य परिरक्षति शीलं, काचनापि निजवंशपताका ॥१६२॥

विधियोगाद्भाग्यसंयोगात्, संकटे विपदि पतिवियोगादिरूपे निपतिता सङ्कटं सम्प्राप्ताऽपि काचन, निजवंशस्य महत्त्वसूचकत्वात्पताका इव, स्त्री, प्रार्थयन्तं याचमानमपरं पुरुषं विप्रतार्य वञ्चित्वाऽपि शीलं स्वचारित्रं परिरक्षति, एवं च तद्विप्रतारणमस्याः नानुचितम्, प्रकारान्तरेण शील-

रक्षणपताकाकल्पत्वात्, आत्मश्लाघायाश्च दुष्कृतानुपक्षित्वादिति भावः ॥१६२॥

પોતાના વંશના પતાકા સમાન કોર્ઈક જ સ્ત્રી ભાગ્યયોગે સંકટમાં પડેલી છતી કામ પ્રાર્થના કરતા બીજા પુરુષને છેતરીને પોતાનું શીલ બચાવે છે. ॥૧૬૨॥

अथ धनवृत्तान्तमाह—

पूर्वपुण्यपरिपाकफलेन, रत्नसारतनयः फलकेन ।
प्रेरितेन मरुता निजवृत्तं, संस्मरञ्जलधितीरमभीतः ॥१६३॥

रत्नसारतनयः धनदः पूर्वपुण्यस्य परिपाकः फलदानाभिमुख्यं तज्जन्यफलरूपेण पुण्यवशात्सं-प्राप्तेन, फलकेन काष्ठखण्डेन मरुता वायुना प्रेरितेन नीयमानेन निजवृत्तं स्ववृत्तान्तं "यथैव विधिना लिखितमित्यादिपूर्वोक्तश्लोकार्थं वा संस्मरन् जलधितीरम् अभीतः प्राप्तः ॥१६३॥

રત્નસારનો પુત્ર ધનદ પૂર્વકૃત પુણ્યોના ઉદયના ફળરૂપે પવનથી તણાતા ફલક કાષ્ઠના ટુકડા વડે પોતાની હાલત સંભારતો સમુદ્રને કાંઠે પ્રાપ્ત થયો. ॥૧૬૩॥

तत्र दत्तनयनः परिपश्यं–श्चैत्यराजिकलितं स्वपुरं तत् ।
लक्षणैरविकलैरुपलक्ष्य, यावदेव मुदितः स बभूव ॥१६४॥

तत्र जलधितीरे दत्तनयनः निर्निमेषदृष्ट्या, परिपश्यन् समन्तादवलोकयन्, चैत्यानां राजिभिः श्रेणीभिः कलितं शोभितं, तत् प्रसिद्धं स्वपुरं स्वनगरम्, अविकलैः सर्वैरेव लक्षणैः चिह्नैः उपलक्ष्य विज्ञाय यावदेव स धनदः, मुदितः हृष्टः बभूव, अस्याग्रेतनेन तावदित्यनेनान्वयः ॥१६४॥

ત્યાં નજર ફેરવતાં ચૈત્ય સમૂહોથી યુક્ત તે પોતાના નગરને જોતો સંપૂર્ણ લક્ષણોને ચિહ્નોથી ઓળખીને જેટલામાં તે ખુશ થયો. ॥૧૬૪॥

संप्रसारितमुखस्तिमिरेतं, तावदेव सहसा ग्रसते स्म ।
साकमेव फलकेन मनुष्यो, नागवल्लिदलकैः क्रमुकं च ॥१६५॥

तावदेव सहसा अकस्मात् संप्रसारितमुखः विवृतास्यः तिमिः तन्नाममत्स्यविशेषः, एतं धनदं फलकेन साकमेव; मनुष्यः नागवल्लीदलकैः ताम्बूलैः सह, क्रमुकं पूगमिव, ग्रसते स्म गिलति स्म ॥१६५॥

તેટલામાં પહોળા મુખવાળો તિમિ નામનો મત્સ્ય ઓચિંતુ જ ફલકની સાથે પાન સાથે સોપારીની જેમ તેને ગળી ગયો. ॥૧૬૫॥

अथ तिमिग्रसनानन्तरवृत्तमाह—

रत्नमस्मरदसौ विनिहन्तु–मापदं तदपि वृत्तमभीष्टम् ।
मारुतोत्थिततरङ्गविनुन्न–स्तीरमाप स तदैव तिमिश्च ॥१६६॥

असौ धनदः, आपदं तिमिग्रासरूपं सङ्कटं विनिहन्तुं विनिवारयितुं रत्नं देवोप्रदत्तापन्नाश-करत्नस्मरत् । तदपि अभीष्टं मनोवाञ्छितफलदायकं "यद्यदस्ति विधिना लिखितम्" इत्यादि वृत्तं पूर्वश्लोकञ्चास्मरन् तदैव तत्क्षण एव रत्नस्मरणगाथार्थस्मरणक्षण एव च, स ग्रसिता तिमिः, मारुतेन महावातेन उत्थितः उल्लुलितो यस्तरङ्गस्तेन विनुन्नः प्रेरितः सन् तीरमाप गतः ॥१६६॥

( પછી ) તેને આપત્તિ દૂર કરવા માટે તે રત્નનું સ્મરણ કર્યું ને જેમ ઇચ્છ્યુ હતું તેમ થયું, પવનથી ઉઠેલા તરંગોથી પ્રેરાઈને તેજ વખતે તિમિ મત્સ્ય તીર પર પહોચી ગયો. ॥૧૬૬॥

वीक्ष्य तं सपदि धीवरवण्ठाः, पाणिसंचितकठोरकुठाराः ।
धाविता जठरदारणपूर्वं, जघ्नुरेषु निरगाच्च यथास्थः ॥ १६७ ॥

तं तीरगतं तिमिं वीक्ष्य द्रुतं गताः, पाणौ संचितः गृहीतः कठारस्तीक्ष्णः कुठारः अस्त्र-विशेषः यैस्ते तादृशाः कुठारपाणयः, धीवराश्च ते वण्ठयन्ति इति वण्ठाः विभाजकाः मत्स्यभाग-ग्राहिणः, जठरस्य तिमिमत्स्योदरस्य दारणं विदारणं पूर्वं यस्मिन् कर्मणि तद्यथा स्यात्तथा, उदरं विदार्येत्यर्थः जघ्नुः तिमिमत्स्यं मारयामासुः । एष धनदश्च यथास्थः पूर्वावस्थ एव न तु मत्स्योदरे अङ्गादिवैकल्यं प्राप्तः । तत्र स्थितिकालस्याल्पत्वात्स्मृतश्लोकमाहात्म्याच्चेति भावः । निरगात् तिमिमत्स्योदराद्बहिर्निर्गतः ॥१६७॥

તે તિમિને જોઈને હાથમાં લીધેલા તીક્ષ્ણ કુહાડાવાલા મજબૂત માછીમારાઓ દોડ્યા ને પેટ ફાડીને તેને મારી નાંખ્યો ને તેનાથી ધનદ જેવો હતો તેવો નીકળ્યો. ॥૧૬૭॥

विस्मितास्तदवलोकनतस्ते, तत्क्षणान्निधिविलोकनवत्तम् ।
हृद्यमान्तमिव वेत्रिमुखेन, क्ष्माभुजे निजभियैव शशंसुः ॥१६८॥

ते धीवराः, तस्य मत्स्योदरनिर्गतस्य धनदस्य अवलोकनतः विलोकनात् निधेः विलोकनत इव विस्मिताः आश्चर्यं कौतूहलं वा प्राप्ताः सन्तः, तं धनदं हृदि अमान्तं संनिवेशमप्राप्नुवन्तमिव, तत्क्षणात् निजभिया अकथने राजा दण्डयेदिति स्वभिया एव, वेत्रिणः द्वारपालस्य मुखेन करणेन, क्ष्माभुजे राज्ञे शशंसुः कथयामासुः ॥१६८॥

કોઈ ખજાનો જોતા હોય તેમ તેને જોઈને વિસ્મય પામેલા માછીમારાઓ તત્કાલ મનમાં સમાતું ન હોય તેમ જાણે દ્વારપાલના મુખે રાજાને પોતેજ ડરીને કીધું. ॥૧૬૮॥

भूभुजा कनकपूर्वरथेना–हूय निर्मलकुलादि स पृष्टः ।
स्वं जगौ वणिजमेव नरेन्द्र–स्याग्रतोऽवितथमेव हि भाष्यम् ॥१६९॥

भूभुजा कनकपूर्वरथेन, आह्वाय्य आकार्य, स धनदः, निर्मलकुलादि, पृष्टः सन्, स्वमात्मानं वणिजमेव जगौ, न तु तत्र छलं कृतवान्, हि यतः, नृपस्य अग्रतः अवितथं सत्यमेव भाष्यं वाच्यम् तत्रैव शर्मलाभात्, अन्यथाऽसत्यप्राकट्ये प्राणभयमिति भावः ॥१६९॥

રાજા કનકરથે તેને બોલાવી તેને તેના નિર્મલ કુલ વિગેરે પૂછ્યું તે પોતાને વણીક બતાવ્યો કેમકે રાજાની આગલ સાચુ બોલવું જોઈએ. ॥૧૬૯॥

आतपत्रतल एव नृपेण, स्नापितः शुचिभिरम्बुभिरुष्णैः ।
संमदेन पुनरप्यनुयुक्तः, कामितं स्वमनसः कथयेति ॥१७०॥

नृपेण, आतपत्रस्य निजच्छत्रस्य तले अध एव, न तु स्थानान्तरे, एतेन बहुमानः सूचितः । उष्णैः शुचिभिर्निर्मलैरम्बुभिः जलैः स्नापितः, संमदेन हर्षेण पुनरपि, अनुयुक्तः पृष्टः, किं पृष्ट इत्याह—स्वमनसः कामितं निजाभिलषितं कथय इति, इतीति प्रश्नसमाप्तौ ॥१७०॥

રાજાએ તેને પોતાના છત્ર તલેજ પવિત્ર ને ગરમ પાણીથી નવરાવ્યો. પછી હર્ષથી ફરી પુછ્યું કે પોતાના મનમાં જે ઈષ્ટ હોય તે કહો. ॥૧૭૦॥

संस्मरन् सुभगताकृति रत्नं, योजिताञ्जलिरसौ वदति स्म ।
मां स्थगीधरमिनस्तनुतां स्यां, येन सन्निहित एव हितो वः ॥१७१॥

असौ धनदः सुभगता सदैश्वर्यमनुकूलता वा कृतिः कर्म यस्य तत्तादृशं सौभाग्यकृत् सुभगत्वकारकं रत्नं संस्मरन्, योजिताञ्जलिः बद्धाञ्जलिः सन् वदति स्म, किमित्याह—इनः प्रभुः मां स्थगीधरं ताम्बूलकरङ्कधारिणम् "स्थगी ताम्बूलकरङ्क" इति हैमः । तनुतां करोतु, ननु उत्कृष्टं कार्यान्तरं विहाय किमिति निकृष्टं याचसे इति चेत्तत्राह—येन नियोगेन, वः युष्माकं सन्निहिते समीप एव स्थापितः हितः स्यात् । कार्यान्तरे तु भवत्सामीप्यं न सदा लभ्यमित्यत्र कर्मणि एष एव महान् लाभ इति भावः ॥१७१॥

ત્યારે તેણે સુન્દર રત્નને સંભારતા હાથ જોડીને કીધું સ્વામિ, મને સ્થગિર પાનદાની રાખનાર તરીકે નીમો. જેથી હું હંમેશાં આપની પાસે રહિશ. ॥૧૭૧॥

तं तथैव स वितत्य च मत्स्यो—दर्यसंज्ञकमथाह्वत राजा ।
संज्ञया स विदितः स्वकयाऽस्या—द्भूपतेः सविधवर्त्यपि नित्यम् ॥१७२॥

तं धनदं तथैव तद्याचनप्रकारेणैव वितत्य नियुज्य, अथानन्तरम् स राजा, मत्स्योदर्य इति संज्ञा यस्य तं तादृशम्, आह्वत संबोध्यते स्म । स धनदः, स्वकया नवविहितया तया मत्स्योदर्य-संज्ञया विदितः ख्यातः, नित्यमपि, भूपतेः सविधवर्ती समीपवर्ती सन्, आस्थात् अवस्थितिं लब्धात् ॥ १७२ ॥

તેને તેવુંજ કામ આપીને રાજા મત્સ્યોદર્ય એવા નામથી બોલાવ્યો તે પોતાના તે નામથી પ્રસિદ્ધ થયેલો હતો હંમેશાં રાજાની પાસે રહેનારો થયો. ॥૧૭૨॥

शूलभृत्पशुपतिः स कपाली, स्थाणुरुद्रविषमेक्षणवाच्यः ।
राजसंश्रयवशादिह जज्ञे, किं न नाम महितः स महेशः ? ॥१७३॥

शूलभृत् त्रिशूलधरः पशुपतिः स्थाणुरुद्रविषमेक्षणैः तदादिभिः शब्दैः वाच्योऽभिधेयः स प्रसिद्धः कपाली कपालधारकः शिवः, इवेति शेषः । स धनदः, इहात्र नगरे, राज्ञः नृपस्य, चन्द्रस्य यक्षस्य कुबेरस्य वा । "राजा प्रभौ नृपे चन्द्रे यक्षे क्षत्रियशक्रयो" रिति विश्वः । संश्रयस्याश्रयणस्य वशात्प्रभावात् महितः पूजितः महिमायुक्तः, महेशः शङ्करः, महांश्चासौ ईशः प्रभुः शक्तिमांश्च स तथा, न नाम जज्ञे किम् ? अपि तु अवश्यं जज्ञे एव । यथाहि स्थाण्वादिनिकृष्टपदवाच्योऽपि शिवः चन्द्रस्य कुबेरस्य वा संश्रयान्महेशः जज्ञे, तथाऽयमपि नृपसंश्रयान्महेशः महाप्रभावः जज्ञे इत्यर्थः ॥१७३॥

તે રાજાના આશ્રયને લીધે તે ધનદ સ્થાણું રુદ્ર વિષમેક્ષણ આવા શબ્દોથી બોલાતા શૂલને કપાલ ધારણ કરનારા પશુઓનો સ્વામી એવો પૂજ્ય મહેશ. શિષ્ટ, મોટો ધનાઢ્ય ન થયો શું થયોજ, ( તે પણ શૂલ વગેરે ધારણ કરનારો ગાય બળદ વગેરે પશુઓનો સ્વામી પાનનાં પાત્ર રૂપી કપાલને ધારણ કરનારો અને ખીલાની જેમ રાજા પાસે ઉભનારો નાના નોકરો પર રૌદ્રભાવના કરનારો ને વિષમતાને જોતો તે ધનાઢ્ય થઈ ગયો હતો. માટે પૂજ્ય શિવ માટે જે શબ્દ વપરાય છે તે તેના માટે પણ વપરાતો હતો. ) ॥૧૭૩॥

स क्रमादथ महेभ्यसुदत्तो, ज्ञापितः प्रथममेव नियुक्तैः ।
आगतः क्षितिपतिं प्रणिपत्तुं, तेन तूर्णमुपलक्षित एषः ॥१७४॥

अथानन्तरं क्रमात्, स धनदस्य कूपे निपातकः, महेभ्यः सुदत्तस्तन्नामा वणिक्, प्रथममेव नियुक्तैः सेवाश्रितैः पुरुषैः ज्ञापितः सूचितः, क्षितिपतिं प्रणिपत्तुं नमस्कर्तुमागतः । तेन सुदत्तेन एष धनदः,- तूर्णमुपलक्षितोऽभिज्ञातः ॥१७४॥

પછી તે શેઠ સુદત્ત પણ ક્રમશઃ દ્વારપાલો દ્વારા પહેલા જણાવી રાજાને પ્રણામ કરવા આવેલો તરતજ ધનદ વડે ઓલખાઈ ગયો. ॥૧૭૪॥

अथ त्रिभिः तत्कृतोपहारदानमाह--

न्यासयन्मरकतस्य विशाल-स्थालमामलकमौक्तिकपूर्णम् ।
अग्रतोऽवनिपतेः स इतीव, द्वेषिणामयशसामुपरिष्टात् ॥१७५॥

सङ्गराङ्गणपलायिपराणां, शारदेन्दुकरनिर्मलधाम ।
तावकं स्फुरति देव ! यशोऽदः, सर्वतः समुदितं भुवनान्तः ॥१७६॥ (युग्मम्)

पादपास्तव सुमानि ददन्ते, मौक्तिकानि जलराशय एते ।
भूभृतोऽपि मणिसंचयमर्हं, वाणिजोऽपि विपुलानि धनानि ॥१७७॥

स सुदत्तः अवनिपतेः नृपस्य कनकरथस्याग्रतः, इतीव वक्ष्यमाणं मनसि कृत्य इव आमलको धात्रीफलमिति कोशोक्तेः आमलका धात्रीफलानि लक्षणया तत्प्रमाणानि, धात्रीफलप्रमाणानि यानि मौक्तिकानि तैः पूर्णम्, मरकतस्य गारुत्मतस्य "गारुत्मतं मरकतमश्मगर्भो हरिन्मणि" रित्यमरः । विशालं स्थालम्, न्यासयदुपाहरत् । इतीति किमित्याह—देव ! राजन् ! अदः प्रसिद्धं तावकं तव, शारदेन्दोः करस्येव निर्मलं धाम प्रभावो यस्य तत् शरच्चन्द्रमरीचिनिर्मलं यशः, भुवनान्तः लोके, सर्वतः समुदितमभ्युत्थितं सत् सङ्गराङ्गणाद्रणभूमेः पलायिवराणां पलायितानां द्वेषिणां तव शत्रूणाम् अपयशसां पलायिनाद्धेतोः जातापकीर्तीनाम्, उपरिष्टात् ऊर्ध्वं स्फुरति शोभते, लोके हि अनेनासौ जित इति अयमधमः स उत्तमः इत्येवं सर्वतः कथनात्, प्रथमं तव द्वेषिणोऽयशस उक्तिस्तदनु च तव यशस इति द्विषदयशस उपरि तव यश इति सर्वत्र व्याप्तं तव यशः, त्वदधिकं च न कस्यापि यश इति सारार्थः, यो हि समुदेति स उपरि गच्छति एवेति भावः । तथा, तव तुभ्यम्, पादपाः वृक्षाः सुमानि पुष्पाणि, एते जलराशयः सागराः मौक्तिकानि, भूभृतः पर्वताः राजानश्चापि अर्हं बहुमूल्यं मणिसंचयं रत्नराशिं वाणिजः श्रेष्ठिनः अपि, विपुलानि प्रचुराणि धनानि, उपहारशुल्कादिरूपेणेति भावः, ददन्ते वितरन्ति, इत्येतत्प्राणयितुमिव मरकतस्थालं न्यासयदिति सम्मिलितार्थः ॥१७५-१७६-१७७॥

તે રાજાની આગલ આંબળા જેવડા મોતીઓથી ભરેલો મરકત મણિનો થાલ મુકાવતો જાણે એમ કહેતો હતો કે હે રાજા રણક્ષેત્રથી ભાગી ગયેલા શત્રુઓના અપયશોના ઉપર શરદ ઋતુના ચંદ્રના નિર્મલ કિરણના સ્વચ્છ તેજવાલો આ તમારો યશ ભેગો થઈને જગતમાં ચારે બાજુ સ્ફુરાયમાન થઈ રહ્યો છે. ॥૧૭૫॥૧૭૬॥

તમને વૃક્ષો ફુલ આપે છે. આ સમુદ્રો મોતી આપે છે. રાજાઓ ( અથવા પર્વતો ) બાણુ દ્વારા મણિઓનો ઢગલો આપે છે. ને વાણિઆઓ પણ પુષ્કલ ધન આપે છે. ॥૧૭૭॥

अर्धशुल्कमकरोन्नृपतिस्तं, शुक्लकीर्त्तिपरिवीतदिगन्तः ।
कल्कपूरितमना मनसीदं, सोऽप्यचिन्तयदचेतनरूपः ॥१७८॥

शुक्लया निर्मलया कीर्त्त्या परिवीतः आवृतः दिगन्तः येन स तादृशः नृपतिः, तम् सुदत्तम्, अर्धः शुल्कः राजग्राह्यभागः यस्य तं तादृशम् । यो हि राजग्राह्यः करः, तस्य अर्ध एव तेन दातव्य इत्येवम् अकरोत् । अचेतनः जडः रूपं यस्य सः जडात्मा, स सुदत्तः अपि, कल्केन पापेन "अंहः कल्कमघं पङ्कः" इति हैमः । पूरितं मनः यस्य स तादृशः पापात्मा, मनसि इदं वक्ष्यमाणमचिन्तयत् ॥१७८॥

ઉજ્જ્વલ કીર્તિથી વ્યાપ્ત કર્યું છે, દિગંત સુધી જેણે એવા એ રાજાએ તેના શુલ્ક—કરને અર્ધો કરી

નાંખ્યો. અને દંભથી ભરાયેલા મનવાળો એવો તે જડ સુદત્ત પણ મનમાં વિચારવા લાગ્યો. ॥૧૭૮॥

**तच्चिन्तनमेवाह—**

**हा स्थगीभृदसकाववटान्तः–क्षिप्तमानुषसमाकृतिधर्मः ।**
**दृश्यते तदिह किं स भवेद्वा, बुध्यते विलसितं न विधातुः ? ॥१७९॥**

हा इति खेदे, इह नृपसमीपे, असकौ असौ प्रत्यक्षमेव, स्थगीभृत् ताम्बूलकरङ्कधरः, अवटस्य गर्तस्य (कूपस्य) "गर्त्तावटौ भुवि श्वभ्रे" इत्यमरः । अन्तः मध्ये क्षिप्तस्य पातितस्य मानुषस्य समः तुल्यः आकृतेराकारस्य धर्मः वर्णावयवादिकं यस्य स तादृशः दृश्यते, तत्तस्मात्, किमिति वितर्के, स भवेत् ! ननु स गर्त्तान्तः क्षिप्तः, तस्यात्र कुतः संभवः, यत्त्वया तर्क्यते इति चेत्तत्राह—वा अथवा, विधातुः भाग्यस्य विलसितं व्यापारः न बुध्यते न ज्ञायते, भाग्याद्धि तथापि संभवति, विधेरचिन्तनीयविधानत्वादिति भावः ॥१७९॥

હા ! આ પાનદાનીવાળો તો મેં સમુદ્રમાં ફેંકી દીધેલા મનુષ્ય જેવાજ આકાર પ્રકાર વાળો દેખાય છે. તો અહીં શું તેજ હશે ? વિધાતાનો વ્યાપાર જાણી શકાતો નથી. ॥૧૭૯॥

**अथ स्वजिज्ञासानिवृत्तये तत्प्रयत्नमाह—**

**संविमृश्य मनसेति स किञ्चि—द्वेत्रिणं सविधभाजमपृच्छत् ।**
**किं स्थगीभृदवनीशितुराद्यो, नूतनः किमयमत्र निविष्टः ? ॥१८०॥**

स सुदत्तः मनसा इत्युक्तप्रकारं संविमृश्य विचार्य, सविधभाजं समीपस्थं किञ्चिद्वेत्रिणं द्वारपालमपृच्छत्, किमित्याह—किमिति प्रश्ने अवनीशितुः राज्ञः, अयं वर्तमानः स्थगीभृत् ताम्बूलकरङ्कधरः, आद्यः पूर्वतः एव किमिति द्वितीयप्रश्ने, नूतनः अत्र कार्ये निविष्टः नियुक्तः ? ॥१८०॥

આમ મનમાં કાંઈક વિચારી તેણે પાસે રહેલા દ્વારપાલને પૂછ્યું કે રાજાની પાનદાની સાચવનારો આ પહેલાથી જ છે કે આ નવો અહીં નિમાયો છે. ॥૧૮૦॥

**तत्प्रवृत्तिमवगम्य यथार्थां, तन्मुखादधृतिमान्स सुदत्तः ।**
**तज्जिघांसनधिया नृपमानो – न्मत्तगीतरतिगायनमूचे ॥१८१॥**

तस्य वेत्रिणः मुखात् यथार्थां सत्यां तस्य धनदस्य प्रवृत्तिं वृत्तान्तमवगम्य, स सुदत्तः अधृतिमान् अनिष्टभयाद् धैर्यरहितः सन् तस्य धनदस्य जिघांसनस्य नाशनस्य धिया बुद्ध्या, नृपस्य मानोन्मत्तं गीतरतिसंज्ञं गायनं गायति संगीतविषयया उपजीवतीति गायनस्तमूचे जगौ ॥१८१॥

ત્યારે તેના મુખે તેનો સાચો વૃત્તાન્ત જાણી અધીરા થયેલા તે સુદત્તે તેને મારી નંખાવવાની બુદ્ધિથી રાજાના સન્માનથી ઉન્મત્ત એવા ગીતરતિ નામનાં એક ગવૈયાને કીધું. ॥૧૮૧॥

किमूचे इत्याह—

राट्स्थगीभृदतिगायन ! वाच्यः, सोदरेति भवता मदरिः सः ।
इष्टकाश्च कनकस्य चतस्रः, पूर्वमेव भवतो वितरामि ॥१८२॥

अतिगायन ! मातङ्गगायन ! भवता त्वया स मदरिः मम शत्रुः, स्थगीभृत् ताम्बूलकरङ्कधरः, सोदर इतीत्थं वाच्यः त्वं तं निजसोदरं कथयेति भावः । ननु एवं गर्हिताचरणे मम को लाभ इति चेत्तत्राह—भवतः पूर्वमेव कार्यात्पूर्वमेव, एवं च कार्यानन्तरं दास्यति वा नेति सन्देहलेशोऽपि नान्तरायकरः, इति तस्य तथाकरणे नितरां व्यग्रता सूचिता । कनकस्य सुवर्णस्य चतस्रः इष्टकाः वितरामि, एवं च तव महान् लाभ इति भावः ॥१८२॥

હે ભાઈ મહાન ગાયક ! આ રાજાની પાનદાની સાચવનારને તમે 'એ મારો ભાઈ છે'—તે પ્રમાણે કહો. તે મારો શત્રુ છે હું તમને સોનાની ચાર ઈંટો પહેલાજ આપી દઉં છું. ॥૧૮૨॥

स प्रमाणमिति वाचमुदीर्य, प्राप्य काञ्चनमुदीरितपूर्वम् ।
वीटकं वितरतः श्वपचोऽसौ, प्रातरेव लगति स्म गलेऽस्य ॥१८३॥

स मातङ्गः प्रमाणं स्वीकृतं मयेति वाचमुदीर्योक्त्वा, उदीरितपूर्वं सुदत्तेन पूर्वं कथितम्, ततः काञ्चनं प्राप्य, प्राप्तसुवर्णेष्टकः प्रातः एव असौ श्वपचः चाण्डालः वीटकं ताम्बूलं वितरतः नृपाय ददतः, अस्य धनदस्य गले लगति स्म, आलिङ्गति स्मेत्यर्थः ॥१८३॥

वीक्षितोऽसि सुचिरेण मया हा, भ्रातरित्यभिदधत्स रुरोद ।
आदिदेश नृपतिः कुपितस्तं, वध्यमेव स ततः सुविचिन्त्य ॥१८४॥

हा इति खेदे ! भ्रातः मया सुचिरेण वीक्षितः असि, इतीत्थमभिदधत् वदन् स श्वपचः रुरोद । ततस्तस्माद्धेतोः, श्वपचोऽयं मां वञ्चितवानित्येवं सुविचिन्त्य अप्रसन्नः, अत एव कुपितः स नृपतिः, तं धनदं वध्यमेव, न तु कारागारादि, आदिदेशाज्ञातवान् ॥१८४॥

તે 'તમારી વાત મંજુર છે' એમ કહી પહેલા કહ્યા પ્રમાણે સોનું મેળવી. રાજાને પાનનું બીડું આપતાં તેને કીધું કે આ ચાંડાલ છે. આજે સવારે આના ગલામાં ગલા જોડી હા ભાઈ એમ કહેતો પેલો ચાંડાલ રડતો હતો તે મેં લાંબા કાલ સુધી જોયું છે. તેથી અત્યન્ત અપ્રસન્ન થયેલા રાજાએ કુપિત થઈને તેને આ વધ્ય છે એની આજ્ઞા આપી. ॥૧૮૩॥૧૮૪॥

अब्रवीद् धनद एव ततश्चा—रक्षकं श्वपच एव भवामि ।
यद्यपि त्वमभिधेहि तथापि, क्ष्मापतेः पुरत एव मदुक्तम् ॥१८५॥

ततश्च तदनन्तरं च, धनदः आरक्षकं राजपुरुषमब्रवीत् । किमित्याह—यद्यपि श्वपचः चाण्डालः

एव भवामि अस्मि, तथापि त्वं क्ष्मापतेः नृपस्य अग्रतः एव, मदुक्तमभिधेहि वद ॥१८५॥

ત્યાર પછી ધનદે આરક્ષકને કીધું કે જો કે હું ચાંડાલ હોઈશ તો પણ તમે રાજાની આગળ મારી વાત કહેજો. ॥૧૮૫॥

ननु का तवोक्तिरित्यत आह—

किञ्चिदेव भवतां पुरतोऽसौ, भूमिपाल ! धनदोऽस्ति विवक्षुः ।
एतदेव विनिशम्य नृपेणा–कारितोऽभ्यधित सोऽपि सुबुद्धिः ॥१८६॥

भूमिपाल ! असौ वध्यः धनदः, भवतां पुरतः एव किञ्चिद्विवक्षुः वक्तुमिच्छुरस्ति । इति अभिधेहि इति सम्बध्यते । एतत्तदुक्तं विनिशम्य श्रुत्वैव, नृपेण, आकारितः आहूतः, सोऽपि सुबुद्धि रभ्यधित ॥१८६॥

કે હે રાજા ! આપની આગલ તે કંઈક કહેવા ઇચ્છે છે. આટલું જ સાંભળીને રાજા વડે બોલાવાયેલો તે બુદ્ધિમાન બોલ્યો. ॥૧૮૬॥

अथ तदुक्तिमेवाह—

राट्प्रसादसदनं जनको मे, गायनःसमभवन्नृपतेऽत्र ।
द्वे स्त्रियावभवतामपि तस्यै–का प्रसूर्मम तयोरपराऽस्य ॥१८७॥

नृपते ! अत्र नगरे, गायनः गीतक्रियानिपुणः गायनः मे मम जनकः, राज्ञः प्रसादस्य सदनमास्पदं नृपतिकृपापात्रं समभवत् । तस्य मम पितुः द्वे स्त्रियावपि अभवताम् । तयोः द्वयोः स्त्रियोः एका ज्येष्ठा मम प्रसूः माता, अपरा कनिष्ठा अस्य, प्रसूरिति सम्बध्यते ॥१८७॥

કે હે રાજા ! તમારી કૃપાના પાત્ર મારા પિતા અહિં ગાયક હતા. તેની બે સ્ત્રીઓ હતી, તે બન્નેમાં એક મારી ને બીજી આ ગાયકની માતા હતી. ॥૧૮૭॥

अप्रिया मम परं जनयित्री, किञ्चनापि समजायत वप्तुः ।
रत्नपञ्चकमदत्त च योग–क्षेमभावविषये जनको मे ॥१८८॥

परं किन्तु मम जनयित्री माता, वप्तुः मम पितुः, किञ्चन अप्रिया अनुरागानास्पदा अपि समजायत, अतः तां परित्यक्तवानितिशेषः । ननु तर्हि तस्याः कः जीवननिर्वाहोपाय इत्यत आह— मे मम जनकः, योगः अलब्धलाभः क्षेमः लब्धरक्षणं तस्य भावः करणं तद्विषये, जीवननिर्वाहायेति यावत् रत्नपञ्चकम् अदत्त च ॥१८८॥

મારા પિતાને મારી માતા કંઈક અપ્રિય જેવી થઈ ગઈ હતી. મારા પિતાએ મને પોતાના સારસંભાળ માટે પાંચ રત્ન આપ્યા હતા. ॥૧૮૮॥

प्रेयसीतनुभुवे पुनरस्मै, नैकधा मणिगणं तिमिरघ्नम् ।
इत्युदीर्य स विदार्य च जङ्घां, स्वामदीदृशदिलापतये तत् ॥१८९॥

पुनः अस्मै प्रेयस्याः प्रेमास्पदायाः स्त्रियाः तनोः शरीराद् भूरुत्पत्तिर्यस्य तस्मै अस्मै गायकाय, नैकधा अनेकप्रकारम्, तिमिरघ्नं तमोनाशकम् भास्वरमित्यर्थः, एतेन बहुमूल्यतोक्ता । मणिगणम् अदत्तेति पूर्वेणान्वयः । ननु तुभ्यं रत्नपञ्चकमदात् । तत्र किं मानम्, कुत्र वा तत् इत्यत आह— इति पूर्वोक्तप्रकारम्, उदीर्योक्त्वा, स्वां जङ्घां विदार्य च, स धनदः, इलापतये महीपतये, तद्रत्नपञ्चकमदीदृशत् दर्शयति स्म ॥१८९॥

જે પ્રિય સ્ત્રીના પુત્ર એવા આને અંધકારને નાશ કરે એવા તેજસ્વી નાના પ્રકારના મણિ આપ્યા હતા. એમ કહી તેને પોતાની જાંઘ ફાડીને રાજાને તે રત્ન દેખાડ્યાં. ॥૧૮૯॥

ननु तर्हि एतस्य मणिगणं क्वास्तीत्यत आह—

अभ्यधाच्च नरदेव ! वपुष्य–स्यापि रत्ननिकरोऽस्त्यखिलाङ्गे ।
तद्विदारयितुमेव नियुक्तैः, पातितो झगिति गीतरतिः सः ॥१९०॥

अभ्यधाज्जगाद, चेत्यदीदृशदित्यस्य समुच्चये, किमित्याह—नरदेव ! राजन् ! अस्य गायकस्यापि वपुषि शरीरे, अखिले अङ्गे, रत्नानां बाहुल्येन एकस्मिन्नङ्गे निवेशासम्भवादिति भावः । रत्नानां निकरः समूहः अस्ति, तत्तस्मात्तस्मिन् काले, तद्द्रष्टुमेव वा, नियुक्तैः राजपुरुषैः, स गीतरतिः गायनः, विदारयितुमेव अङ्गानि विदार्य रत्नानि द्रष्टुमेव झगिति पातितः बलात्स्वापितः । उत्थितस्य विदारणे असौकर्यसम्भवादिति भावः ॥१९०॥

અને કીધું કે હે રાજા આના શરીરમાં સર્વ અંગોમાં રત્નોનો સમૂહ છે. ત્યારે સિપાઈઓએ તેને ચીરી નાખી. જોવા માટે ઝડપથી તે ગીતરતીને પાડી નાખ્યો. ॥૧૯૦॥

अन्तकस्य रसनामिव पश्यन्, शस्त्रिकां भयविकम्प्रशरीरः ।
निर्जिहानमिव जीवितमिङ्ग–स्तथ्यमेव स बभाण नृपाग्रे ॥१९१॥ (युग्मम्)

अन्तकस्य यमस्य रसनां प्राणनाशकत्वाज्जिह्वामिव, शस्त्रिकां छुरिकां पश्यन्, निर्जिहानम् निर्गच्छन्तं जीवितं प्राणान्, इङ्गन्ननुभवन्निव, स गायनः नृपाग्रे तथ्यं सत्यमेव, बभाण, तथा सति प्राणत्राणाशीयाः सम्भवादिति भावः ॥१९१॥

ત્યારે તે ગીતરતિ યમ રાજાની જિહ્વાની જેમ ચપ્પુને જોતો ભયથી ધ્રૂજતો પ્રાણો જતા હોય એમ જોતો બધુંય સાચું જ બોલી ગયો. ॥૧૯૧॥

तेन वृत्तमय तत्तुलसेवा–नामधनदमपि सर्वं च सर्वैः ।
प्रस्तुते हि सदसत्त्वविचारे, भूभुजां न खलु कालविलम्बः ॥१९२॥

अथानन्तरम्, स भूपतिः, तत्क्षणमेव, तेन सुदत्तेन दत्तं तदिष्टकचतुष्टयरूपं सर्वमेव भर्म धनदस्य भ्रातृकथनार्थं वेतनम् "भृतयो भर्म वेतन"मित्यमरः । आनाययत् आनायितवान् । गायनवाचं सत्यत्वपरीक्षणार्थमिति भावः । ननु तत्क्षणमेव किमित्यानायितवानित्यत आह—हि यतः, सदसत्त्वस्य सत्यासत्यस्य विचारे प्रस्तुते प्रक्रान्ते, भूभृतां राज्ञां कालविलम्बः कालक्षेपः, न खलु । भूभृतः तत्क्षणमेव सत्यमसत्यं वेति परीक्षयन्ति, अन्यथा कालविलम्बे सत्यत्वासत्यत्वसाधकप्रमाणवैकलस्यापि सम्भवात् नीतिभङ्गोऽपि दण्डे संभाव्येतेति भावः ॥१९२॥

પછી રાજાએ સુદત્તને તરત જ પકડી મંગાવ્યો ને કરમા ઇંટ આપી હતી તે પણ મંગાવ્યું. કેમકે સાચા નરસાનો વિચાર ઉપસ્થિત હોય તો રાજાઓ વિલંબ કરતા નથી. ॥૧૯૨॥

तद्विलोक्य धनदोऽवददेवं, मामकं नरपते ! मममेतत् ।
सम्पुटेऽत्र कनकेष्टकरूपे, नाम मध्यगतमस्ति च यन्मे ॥१९३॥

तद्भर्मरूपं कनकेष्टकं विलोक्य, धनदः, एवं वक्ष्यमाणप्रकारेणाऽवदत् । तदेवाह—नरपते ! एतदानीतं कनकेष्टकं समं सर्वमेव, मामकम् । ननु तत्र किं प्रमाणमित्यत आह यद्यस्माद्धेतोश्च, अत्रास्मिन् कनकेष्टकरूपे, सम्पुटे पुटके "सम्पुटे पुट इत्यपि" इति शिलोञ्छकोशः । मे मम नाम, मध्यगतमस्ति । यदि हि एतन्मम न स्यात्तर्हि कुतोऽस्मिन्मम नाम सम्भवः, नह्यन्यस्य वस्तुनि अन्यस्य नाम भवति, एवं च मे नाम्नोऽत्र सत्त्वान्ममैतदिति ॥१९३॥

તે જોઈ ધનદ બોલ્યો હે રાજા ! આ બધું મારું છે. કેમકે આ સોનાની ઇંટના સમ્પૂટમા વચ્ચે મારુ નામ છે. ॥૧૯૩॥

पाटिते झटिति राजनिदेशा—त्सम्पुटे पटुभिराश्रितभृत्यैः ।
तत्तथैव समवेक्ष्य नरेशो, विस्मितः स्मितमुखः स बभूव ॥१९४॥

राज्ञः निदेशात्पटुभिश्चतुरैः आश्रितैः भृत्यैः राजपुरुषैः, सम्पुटे, झटिति पाटिते विदारिते, तत्तन्नाम, तथैव मध्यगतमेव, धनदोक्तानुकूलमेव समवेक्ष्य विस्मितः आश्चर्यं गतः, तन्नामाङ्कितकनकेष्टकदर्शनेनाश्चर्यं प्राप्तः । तत्र जातप्रपञ्चस्य गूढत्वादिति भावः । स नरेशः स्मितमुखः ईषद्धसितवदनः, तथ्यवार्त्तोपलम्भादिति भावः । बभूव प्रसन्नो जातः ॥१९४॥

ત્યારે રાજાના બુદ્ધિમાન્ નોકરોએ રાજાની આજ્ઞાથી જલ્દીથી તે સંપુટ તોડાયો છતાં તે તેમજ જોઈ વિસ્મય પામેલો રાજા હસતા મુખવાળો થયો. ( હસવા લાગ્યો ) ॥૧૯૪॥

सुप्रसन्नमवलोक्य तमीशं, श्रेष्ठिसूः पुनरुदीरयति स्म ।
श्रेष्ठिनः प्रवहणेऽष्टशती मे, *पादयुक् कनकसम्पुटकानाम् ॥१९५॥

* पञ्चविंशत्यधिकाऽष्टशतीत्यर्थः ।

तमीशं राजानं सुप्रसन्नम् अवलोक्य, अप्रीते हि राजनि किमपि कथनं नार्थसाधकमतः प्रीते एव तस्मिन् प्रार्थनस्यौचित्यादिति भावः । श्रेष्ठिनः सुदत्तस्य प्रवहणे पोते, मे मम, कनकसम्पुटकानां कनकेष्टकपुटकानां पादयुक् सपादा अष्टशती, सपादाष्टशतकनकेष्टकपुटकमित्यर्थः, सहस्रमितियावत् ॥१९५॥

न तावदेव किन्त्वन्यदपीत्याह--

अस्ति शस्तमिह सार्धसहस्रं, रुक्सहस्रकरजेतृ मणीनाम् ।
युक्तमत्र यदपि प्रतिभाति, तत्प्रसद्य कुरुतां प्रभुरेव ॥१९६॥ (युग्मम)

इह प्रवहणे, रुचा कान्त्या सहस्रकरस्य सूर्यस्य जेतृ जयनशीलं भास्करवद्भास्वरम्, अत एव, शस्तं बहुमूल्यं मणीनां सार्धं सहस्रम्, अस्ति अत्र विषये, यदपि यदेव, युक्तमुचितम्, प्रतिभाति तत्प्रसद्य प्रभुः स्वामी भवानेव, कुरुताम्। स्वामिनि हि सति किं परमुखापेक्षणेन ? तथा सति अस्वामित्वानुषङ्गादिति भावः ॥१९६॥

ત્યારે તે શ્રેષ્ઠિપુત્ર રાજાને પ્રસન્ન જોઈ ફરી બોલ્યો કે આ શેઠના વહાણોમાં મારા હજાર અથવા સવા આઠસો સંપૂટો સોનાના છે. તેમજ કાન્તિથી સૂર્યને પણ જીતનારા એવા ઉત્તમ દોઢ હજાર મણીઓ છે, આ વિષયમાં જે યોગ્ય લાગે તે કૃપા કરીને આપ જ કરો. ॥૧૯૫॥૧૯૬॥

तत्सुदत्तवणिजोऽखिलमेवा--नाय्य भूपतिरवेक्ष्य च सत्यम् ।
सर्वमेव परिगृह्य च वध्या--वादिशत् समुचितावथ तौ सः ॥१९७॥

सुदत्तवणिजः सकाशात्, तत् कनकेष्टकानि रत्नानि च, अखिलं साकल्येन, आनाय्य सत्यमेव, धनदोक्तप्रकारेणैव संख्यादि युक्तम् अवेक्ष्य च, भूपतिः, सर्वमेव परिगृह्य अथानन्तरम्, स भूपतिः, समुचितौ तादृशदण्डयोग्यौ, तौ सुदत्तगीतरतिनामानौ वध्यौ, आदिशत, तौ द्वावपि महापराधकरणाद्वध्यौ इत्येवमादिष्टवानित्यर्थः ॥१८७॥

સુદત્ત વણિક પાસે તે બધુ મંગાવીને રાજાએ બધુ સાચું જ જોયું પછી તે બધું લઈ તે બન્નેને વધ્ય છે, એમ આજ્ઞા આપી ॥૧૯૭॥

स स्थगीभृदपि भूपतिमेवं, मङ्क्षु विज्ञपयति स्म सुविज्ञम् ।
मुञ्चतु प्रभुरिमौ कृतकृत्यौ, तद्गिरा व्यमुचदेव स हृष्टः ॥१९८॥

स स्थगीभृत् ताम्बूलकरङ्कवाहकः धनदः अपि, मङ्क्षु शीघ्रं विलम्बेऽनर्थवारणासंभवादिति भावः । सुविज्ञं भूपतिम्, एवं वक्ष्यमाणप्रकारेण विज्ञपयति प्रार्थयति स्म । प्रभुः स्वामी, इमौ सुदत्तगीतरतिनामानौ कृतकृत्यौ सम्पादितकार्यौ, मुञ्चतु क्षाम्यतु क्षमासारा हि साधव इति भावः ।

तस्य धनदस्य गिरा वाण्या एव, हृष्टः प्रसन्नः, तदौदार्यस्य सदभिलषणीत्वादिति भावः, स नृपः, न्यमुञ्चत् तौ मुक्तवान् दण्डादित्यर्थः ॥१९८॥

त्यारे ते पानदानी साचवनारे सुविज्ञ एवा राजाने तरतज जणाव्युं के पोताना कर्म फलने पामेला आ बन्नेने छोडी दो, त्यारे तेना कहेवाथी खुश थयेला राजाए ते बन्नेने मुक्त कर्या. ॥१९८॥

तुर्यभागमुपलभ्य गतेऽस्मिन् , रैजलैर्नृपतिना स्नापितोऽसौ ।
मानितो रहसि मूलरहस्यं, पृच्छयते स्म शपथानुपहृत्य ॥१९९॥

तुर्यं चतुर्थं भागं तद्वित्तांशम्, उपलभ्य प्राप्य, एतेनास्य महौदार्यं सूचितम्, अपराधेऽपि तत्क्षान्त्या वित्तसमर्पणेन चेति महतां महत्त्वमचिन्तनीयमिति भावः । अतः तदौदार्यं दृष्ट्वा नृपतिना हृष्टतुष्टेन, सर्वोऽपि गुणेष्वनुरज्यतीति भावः । रैजलैः सुवर्णजलैः कल्याणं कनकं महारजतरै इति हैमः । स्नपितः* पवित्रीकृतः, चाण्डालस्पर्शात्, सम्मानितश्च, अत एव, मानितः सत्कृतः असौ धनदः, रहसि एकान्ते शपथान् शपनानि "शपनं शपथः पुमान्" इत्यमरः । उपहृत्य दत्त्वा अन्यथा कथनसन्देहादिति भावः । एतेन राज्ञस्तस्मिन् स्ववदनुरागः तदुदन्तं ज्ञातुं कौतुहलं च सूचितम् । मूलं रहस्यं मर्म, कुतः कथं वा एतत् सर्वं जानमित्येतत्, पृच्छयते स्म ॥१९९॥

चोथो भाग लईने गये छते सुवर्ण जळथी नवरावीने सन्मान करीने तेने एकान्तमां राजाए सौगंद आपीने मूल रहस्य पुछ्युं. ॥१९९॥

अथ धनदस्य स्ववृत्तकथनमाह—

तावकीनपुरसत्तमसार—रत्नसारतनयो धनदोऽस्मि ।
*वृत्तमुख्यझषवक्त्रनिपात—प्रान्तवृत्तचरितं स जगौ स्वम् ॥२००॥

तावकीने तव पुरे सत्तमेषु सुजनेषु सारस्य श्रेष्ठस्य रत्नसारस्य तदाख्यश्रेष्ठिनः तनयः, धनदस्तदाख्यः अहम्, अस्मीति शेषः । तथा स धनदः, स्वं नैजं वृत्तमुख्यम् । यथैव विधिना-लिखितमित्यादि श्लोकादि झषस्य मत्स्यस्य वक्त्रे निपातः पतनं प्रान्ते प्रान्तकाले वृत्तं जातं यस्मिन् तत्तादृशं स्वं आत्मीयं चरित्रम्* नगरप्रवेशपर्यन्तवृत्तान्तं जगौ जगाद ॥२००॥

तमारा नगरमां उत्तममा उत्तम एवा रत्नसारनो पुत्र धनद नामे हुं छुं अने तेणे पोताना माछलाना मुखमा पडवाथी मांडीने ठेठ सुधीना बधा समाचार कही संभाळाव्या. ॥२००॥

---

*साऽथ कल्याणनीरेण, स्नात्वा शुचिरभूत्पुनः । इति शान्तिचरित्रान्तरे ।

*यथैव विधिना लिखितमित्येवरूपम् ।

*वृत्तमुख्यं यथैव विधिना लिखितमित्येवं रूपमादौ झषवक्त्रे मत्स्यमुखे निपातः पतनं प्रान्ते वृत्तं जातं यस्मिन् तादृशं चरितम् ।

[१]अथावसरप्राप्तिं यावत्तद्वृत्तगोपनाय प्रार्थ्यते—

तद्विभो ! सदयितोऽत्र स देव—दत्तपोतवणिगेति न यावत् ।
तावदेतदखिलं हृदि धार्य्यं, वन्दितास्मि जनकं च ततश्च ॥२०१॥

विभो ! स्वामिन् ! तत्तस्मात्स्वभार्याप्राप्तौ मद्वृत्तप्रकटने सति विघ्नो मा भूदित्यतः, अत्र नगरे, सदयितः मत्प्रियासहितः, स मम समुद्रे निपातकः, देवदत्तवणिक् यावत् न प्रत्यागच्छति, तावत्, एतन्मदुक्तमखिलं वृत्तं हृदि धार्यं न प्रकटनीयम्, अन्यथा स श्रुत्वाऽन्यतो व्रजेत्, प्रकारान्तरं वा कुर्यात्, ततश्च मम भार्याप्राप्तिर्न स्यादिति भावः । ततः भार्याप्रा—प्त्यनन्तरं च, जनकं निजपितरं च वन्दितास्मि, तावत्स्वपितुरपि स्वं गोपायिष्यामीति पूर्वोक्तहेतोरेवेति भावः ॥२०१॥

તો હે સ્વામી ! જ્યાં સુધી તે વહાણુ વ્યાપારી દેવદત્ત પત્ની સહિત અહિં આવતો નથી ત્યાં સુધી આ બધું તમારા હૃદયમાં રાખો. પિતાને ત્યાર પછી નમીશ. ॥૨૦૧॥

श्रीमहेन्द्रनृपनन्दनयाऽमा, देवदत्तवणिजोऽपि समेतः ।
उत्तमं प्रवहणं परिपूर्य्य, द्वैप्यवस्तुनिवहैः शतमूल्यैः ॥२०२॥

श्रीमहेन्द्रनृपस्य नन्दनया कन्यया तिलकसुन्दर्या अमा सह देवदत्तवणिजः अपि शतं मूल्यं येषां तैस्तादृशैरमूल्यैः बहुमूल्यैर्वा, द्वैप्यैः द्वीपान्तरोद्भवैः वस्तूनां क्रयाणकानां निवहैः राशिभिः प्रवहणं पोतम् उत्तमं समग्रतया यथा स्यात्तथा, परिपूर्य भृत्वा, समेत आगतः ॥२०२॥

તે દેવદત્ત વણિક પણ મહેન્દ્ર નૃપની કન્યા તિલકસુન્દરી સાથે અનેક મૂલ્યવાન દ્વીપાન્તરમાં ઉત્પન્ન થયેલી વસ્તુ સમૂહોથી પોતાના ઉત્તમ વહાણુને ભરીને આવ્યો. ॥૨૦૨॥

प्राभृतं निभृतमेव महार्घं, चित्तचौर्यचतुरं नृपतीनाम् ।
संनिवेश्य तकया सह पाणौ, द्वास्थभूमिमवलम्ब्य निविष्टः ॥२०३॥

नृपतीनां चित्तस्य चौर्ये हरणे स्वस्मिन् अनुकूलयितुं चतुरं पटुम् नृपतिहृदयावर्जकमित्यर्थः । महार्घं बहुमूल्यं प्राभृतं ढौकनं निभृतं विनीतं यथा स्यात्तथा सविनयमित्यर्थः । "प्राभृतं ढौकनं लञ्चोत्कोचः" इति "विनीतस्तु निभृतः" इति च हैमः । पाणौ निवेश्य हस्ते कृत्वा, तकया तया तिलकसुन्दर्या सह द्वास्थभूमिं द्वारदेशमवलम्ब्याश्रित्य, निविष्टः स्थितः, स देवदत्तः इति पूर्वतोऽन्वयः ॥२०३॥

રાજાઓના મનને હરે એવા મહામૂલા ઉપહાર દેખાય તેવી રીતે હાથમાં લઈ તે તિલક સુન્દરી સાથે રાજાના દ્વાર ઉપર આવીને ઊભો. ॥૨૦૩॥

---

१ अथ दयिताप्राप्तिं ।

देवदत्त इति नाम महेभ्यो, वाहनादुपगतोऽत्र दिदृक्षुः ।
त्वामुपागमदिति प्रनियुक्तैः, शंसितः स नृपतिं प्रणनाम ॥२०४॥
( त्रिभिर्विशेषकम् )

वाहनात्प्रवहणादुपगतः प्राप्तः, देवदत्त इति नाम महेभ्यः, अत्र त्वां दिदृक्षुः उपागमदिति नियुक्तैः राजपुरुषैः शंसितः विज्ञापितः सन् स देवदत्तः नृपतिं प्रणनाम ॥२०४॥

અને દ્વારપાલ દ્વારા વહાણથી આવેલા દેવદત્ત નામે શેઠ દર્શન કરવાની ઇચ્છાથી તમારી પાસે આવ્યો છે—એમ જણાવી રાજાને નમ્યો. ॥૨૦૪॥

संज्ञया धनद एव तटस्थो–ऽज्ञापयत्तमपि तां च नृपाय ।
भूपतिर्विरचयन्नवहित्थां, वक्तुमारभत तेन यथेच्छम् ॥२०५॥

धनदः तटस्थः पार्श्वप्रदेशस्थ एव, न तु संमुखस्थः, अन्यथा परिचयात्कार्यविघ्नसंभवादिति भावः । तं देवदत्तमपि, तां तिलकसुन्दरीं च, संज्ञया इङ्गितेन न तूक्त्या, शब्दपरिचयेनापि कार्य-विघ्नसंभवादिति भावः । नृपाय अज्ञापयत्, स एवायमित्येवमिति भावः । तया भूपतिः, अवहित्थां आकारगुप्तिम् "अवहित्थाऽऽकारगोपनम्" इति हैमः । विरचयन् कुर्वन् सत्यवार्त्तोपलब्धये, मया न किञ्चिज्ज्ञायते इत्येवमाकारभावं प्रदर्शयन्, तेन देवदत्तेन सह यथेच्छं वक्तुमारभत ॥२०५॥

ધનદ પણ રાજાને ઇસારાથી દેવદત્ત અને તિલક સુન્દરી છે એમ જણાવ્યું. રાજા પોતાને 'હું બધું જાણું છું' એવા આકારને છુપાવતો તેની સાથે આમ તેમ વાતો કરવા લાગ્યો. ॥૨૦૫॥

अथ तद्वचनप्रकारमेवाह—

आगतो ननु कुतस्त्वमसीह, केयमावृतमुखी गुरुलज्जा ? ।
किंनिमित्तमिह राजकुले वा, नीयते स्म भवता सममेव ? ॥२०६॥

नन्विति प्रश्ने, त्वं कुतः इह आगतः असि, गुरुरधिका लज्जा यस्याः सा तादृशी, अत एव आवृतमुखी विहितानना वस्त्राच्छादितमुखी इयं दृश्यमाना स्त्री का ? वा तथा, इह राजकुले राज-प्रासादे भवता त्वया, समं सार्द्धमेव, किंनिमित्तं किमर्थं नीयते स्म आनीता ? ॥२०६॥

તમે ક્યાંથી આવ્યા છો ? ભારે શરમાલ ને ઢાંકેલા મુખવાળી આ કોણ છે ? અને શા માટે આને રાજદરબારમાં લેતા આવ્યા છો. ॥૨૦૬॥

एवमुक्तवति मानवदेवे, देवदत्तवणिजोऽपि जगाद ।
आयता प्रतिनिवृत्य कटाह–द्वीपतः क्षितिपते ! मयकेयम् ॥२०७॥

प्राप्यगाधपरिखायितवार्द्धि–द्वीपमध्यपतिता पुनरेका ।
स्वामिशासनमवाप्य दुरापं, मत्प्रिया भवति देव ! ततोऽसौ ॥२०८॥ (युग्मम्)

मानवदेवे–नृपे एवमुक्तवति–उक्तप्रकारं कथितवति––देवदत्तवणिजोऽपि––अगाध–उक्तवान्–किमित्याह्–क्षितिपते– राजन् कटाहद्वीपतः प्रतिनिवृत्य–परावृत्य आयता–आगच्छता मयका मया इयं एका असहाया पुनः–तथा, अगाधपरिखायितवार्द्धिद्वीपमध्यपतिता–अगाधः परिखायितः परिखेवाचरितो वार्द्धिर्यस्य तादृशस्य–अगाधसमुद्रपरिवेष्टितस्य द्वीपस्य मध्ये पतिता प्रापि सम्प्राप्ता–देव ! ततः एतेन कारणेन असौ कन्या दुरापं आप्तुं दुर्लभं स्वामिशासनमवाप्य स्वामिनो भवतश्शासनमाज्ञां प्राप्य मत्प्रिया भवति–भविता (भवतु) ॥२०७––२०८॥

રાજા આમ પૂછે છતે દેવદત્ત વણિક પણ બોલ્યો. કે હે રાજા કટાહદ્વીપથી ફરતો મને અગાધ ખાઈ જેવા સમુદ્રની વચ્ચે દ્વીપમાં રહેલી આ એકલી જ મને મળી છે. હે મહારાજ ! આપની દુર્લભ આજ્ઞા મલ્યા પછી આ મારી પત્ની બનશે. ॥૨૦૭॥૨૦૮॥

इत्युदीर्य विरतेऽपरतन्त्रा, तत्र सा प्रवदति स्म मृगाक्षी ।
नाथ ! जल्पति मृषायमशेषं, त्वय्यपि प्रभवति क्षतसीमः ॥२०९॥

इति––उक्तप्रकारम् उदीर्य, उक्त्वा विरते––मौनमाश्रिते देवदत्ते सति, अपरतन्त्रा स्वतन्त्रा, नृपाग्रे कस्यापि किञ्चित्कर्तुमशक्यत्वादिति भावः । सा मृगाक्षी तिलकसुन्दरी तत्र नृपाग्रे प्रवदति स्म । किमित्याह्––नाथ ! राजन् ! त्वयि प्रभवति समर्थे सत्यपि वर्त्तमानेऽपि, नृपाग्रे मिथ्यावचनस्य महापराधत्वादिति भावः । क्षता विनाशिता सीमा कर्त्तव्यपङ्क्तिर्येन स तादृशः निर्मर्यादः अयं देवदत्तः, अशेषं सकलमेव मृषा मिथ्या जल्पति वक्ति ॥२०९॥

એમ બોલી દેવદત્ત ચૂપ થયે છતે સ્વતંત્ર થયેલી તે મૃગાક્ષી તિલકસુન્દરી ત્યાં બોલી કે હે રાજા પ્રભુ ! એવા તમારી આગળ મર્યાદા વગરનો આ વણિક બધું ખોટું બોલે છે. ॥૨૦૯॥

ननु तर्हि किं सत्यमित्यत आह्––

पातितो मम पतिर्जलराशौ, दुष्कृतं कृतवता तदनेन ।
शीलभङ्गभयतोऽहमकार्षं, राजशासनसदुत्तरमस्य ॥२१०॥

दुष्कृतं पापं कृतवता पापिना अनेन देवदत्तेन, मम पतिः जलराशौ पातितः, तत् तस्माद्धेतोः असहाया अहं शीलभङ्गभयतः पातिव्रत्यभङ्गभिया, अन्यथाऽनेन बलात्कारोऽपि कृतः स्यादिति भावः । अस्य देवदत्तस्य राजशासनं राजाज्ञैव सदुत्तरम्, शीलरक्षणोपकारितया निर्दुष्टमुत्तरं प्रतिवचनम्, अकार्षम्, राजाज्ञया त्वां वरिष्यामीत्युत्तरमदामित्यर्थः ॥२१०॥

એણે મારા પતિને સમુદ્રમાં ફેંકી દીધો તેથી પાપ કરનારા આનાથી પોતાના શીલભંગના ભયે મેં રાજાની આજ્ઞાની ખાત્રી લાયક વાત કરી હતી. ॥૨૧૦॥

ननु दैववशस्य मिथ्याकथनमपि दुष्कृतायेति चेत्तत्राह—

भूषयन्त्यखिलमेव शरीरं, भूषणानि मणिहेममयानि ।
आदधाति नु कुलद्वयभूषां, शीलमाभरणमात्मगतं सत् ॥२११॥

मणिहेममयानि रत्नसुवर्णादिनिर्मितानि भूषणानि अलंकाराः 'अलंकारस्तु भूषणम्' इति हैमः । अखिलं शरीरमेव न त्वन्यत्किञ्चित् भूषयन्ति, किन्तु आत्मगतं स्वगतं सत् उत्तमं शीलं चारित्ररूपं आभरणं कुलद्वयभूषां कुलद्वयं मातृपितृकुलद्वयं तस्य भूषां मण्डनमदधाति मण्डयति, एवं च तादृश-शीलरक्षणकृते मिथ्यावदनमपि सह्यमेव, अल्पस्य हानावपि महतो लाभादिति भावः ॥२११॥

મણિ ને સુવર્ણનાં ભૂષણો આખા શરીરને જ ભૂષિત કરે છે. આત્મામાં રહેલો શીલરૂપી ભૂષણ તો બન્ને કુળને શણગારે છે. ॥૨૧૧॥

ननु तर्हि सम्प्रति किं चिकीर्षसीत्यत आह—

साम्प्रतं विरचयेद्यदि तातो, दारुभारनिचितां नु चितां तत् ।
जातवेदसमवाप्य सहायं, जीवितेशमनुयामि महीश ! ॥२१२॥

तत् तस्माद् यदि, तातः भवान् पितृरूपः, साम्प्रतं दारुभारनिचितां दारुणः काष्ठस्य भारेण राशिना निचितां पूर्णां चितां श्मशानाग्निकुण्डं विरचयेत्, नु तर्हि महीश ! राजन् ! जातवेदसं अग्निं सहायं अवाप्य जीवितेशं पतिं अनुयामि, शरीरं त्यक्ष्ये इत्यर्थः ॥२१२॥

હે તાત ! હમણાં લાકડાંના ભારે ભરેલી એવી ચિતા બનાવરાવી આપો તો, હે રાજા ! હું અગ્નિદેવની સહાય મેળવી પોતાના પતિને અનુસરીશ. ॥૨૧૨॥

अथ भूपतिप्रतिवचनमाह—

तत्त्वमान्तरमिदं यदि तत्त्वं, पुत्रिकेव मम सद्मनि तिष्ठ ।
धर्म्यकर्मरचना रुचिराऽत्र, दुर्लभं मनुजजन्म यदेतत् ॥२१३॥

यदि इदं त्वदुक्तप्रकारम्, आन्तरं हृत्स्थं तत्त्वं भावः, तत् तस्मात् त्वं मम सद्मनि गृहे, पुत्रिका कन्यका इव तिष्ठ । ननु चिताऽऽरोहणं किमिति न विधेयमित्यत आह—यद्-यस्माद् एतत् मनुजजन्म दुर्लभम्, दुःखेन लभ्यते, तथा, अत्र मनुजजन्मनि, धर्म्यस्य पुण्यजनकस्य कर्मणः क्रियायाः व्रतानुष्ठानादेः रचना करणम्, रुचिरा सुकरा, अन्यत्र तु ज्ञानाभावान्न तद्भवितुमर्हतीति चिताऽऽ-रोहणं न कर्तव्यमिति भावः ॥२१३॥

ત્યારે રાજાએ કીધું કે જો તમારો આ આંતરિક ભાવ હોય તો તું મારે ઘેર પુત્રીની જેમ રહે. અહિં ધર્મનું અનુષ્ઠાન કરવું તે ઉત્તમ છે. કેમકે આ મનુષ્ય ભવ દુર્લભ છે. ॥૨૧૩॥

किञ्च तव पतिरयमेवेति भङ्ग्या कथयति—

किञ्च पश्य मुखचन्द्रमुदञ्च्य, त्वं स्थगीधरमिमं मम वत्से ! ।
आकृतिं प्रियतमस्य भवत्याः, किं परिस्पृशति नो कलयायम् ॥२१४॥

किञ्च वत्से ! त्वं मुखचन्द्रं मुखं चन्द्रमिव तत् उदञ्च्य अवगुण्ठनाभिष्काश्य, मम इमं समक्षे वर्त्तमानं स्थगीधरं ताम्बूलकरङ्कवाहकं पश्य, किमिति प्रश्ने अयं स्थगीधरः, भवत्याः प्रियतमस्य आकृतिम्, कलया कान्त्या, लेशतो वा, नो परिस्पृशति ? अपि तु अवश्यं परिस्पृशति । यद्वा कलय इत्यवलोकय त्वम् । तथा चायं तव पतिरेवेति किमर्थं मरणम् ॥२१४॥

અને હે પુત્રિ ! તું પોતાના મુખરૂપી ચંદ્રમાને ઊંચા કરી આ મારા પાનદાની રાખનારને જો, શું આ સહેજ ત્હારા પતિ જેવી આકૃતિવાળો નથી ? ॥૨૧૪॥

साऽब्रवीन्मम पतिः पतिभक्ता, पातितो विषमनक्रभृतेऽब्धौ ।
आगमत् कथमिहापरमीश !, प्रायशः कति समा न भवेयुः ॥२१५॥

सा पतिभक्ता पतिव्रता तिलकसुन्दरी अब्रवीत्—किमित्याह—ईश ! राजन् ! मम पतिः विषमेण भयानकेन नक्रेण ग्राहादिना भृते पूर्णे, अब्धौ समुद्रे पातितः क्षेपितः, एवं च नक्रादिना अवश्यं भक्षितः स्यादिति भावः । अपरमन्यच्च, यदि कथंचिज्जीवत्यपि, तदापि इह कथमागमत्, आगमनसाधनाभावात् सागरस्य दुस्तरत्वात् अत्रागमनं तस्य न संभवतीति भावः । नन्वाकृतिस्तु सैवेति चेत्तत्राह—प्रायशः कति अनेके समाः तुल्याकृतयः न भवेयुः, समाकृतयोऽपि बहुशो भवन्ति, एवं च आकृतिसाम्येऽपि मम पतिर्नायमिति भावः ॥२१५॥

તે પતિવ્રતા બોલી કે હે રાજા ! મારો પતિ ભયંકર મગરોથી ભરેલા સમુદ્રમાં પાડી દેવાયો છે પ્રાયે ઘણા વર્ષો થઈ ગયા છે. તો અહિં તે કેવી રીતે આવ્યો ? ॥૨૧૫॥

तां तदेकपतिकामवधृत्या—ज्ञापितः क्षितिभुजा धनदोऽयम् ।
भ्रू–तरङ्गपरिचालनतोऽथ, व्याहरत् स्मितविराजितवक्त्रः ॥२१६॥

तत् तस्मादुक्तकथनोपकथनतः तां तिलकसुन्दरीम् एकपतिकां पतिव्रताम् अवधृत्य निश्चित्य, अथ अनन्तरम्, क्षितिभुजा राज्ञा, भ्रूतरङ्गपरिचालनतः भ्रुवोस्तरङ्गस्य परिचालनतः नेत्रसंज्ञया आज्ञापितः, वदनाय प्रेरितः अयं धनदः, स्मितविराजितवक्त्रः, स्मितेन विराजितं वक्त्रं मुखं यस्य स तादृशः, ईषद्धसन्नित्यर्थः, व्याहरदुक्तवान् ॥२१६॥

રાજા તેને પતિવ્રતા અવધારી આંખના ઈશારાથી ધનદને આજ્ઞા કરી, પછી હસતો હસતો ધનદ બોલ્યો. ॥૨૧૬॥

अथ तदुक्तिमेवाह--

सोऽवनीश्वर ! भवेत् पतिरस्याः, श्वभ्रसौधशिखरस्थितिमेताम् ।
एतदात्तकरवालबलेना—हत्य खेचरमुपायत यश्च ॥२१७॥

अवनीश्वर ! राजन् ! अस्याः स पतिः भवेद्, यश्च श्वभ्रसौधशिखरस्थितिम् श्वभ्रे भुवो विवरे "गर्त्त-श्वभ्रा-ऽवटा-ऽगधि-दरास्तु-विवरे भुवः" इति हैमः । यः सौधः प्रासादः तस्य शिखरे स्थितिरवस्थानं यस्यास्तामेताम्, एतदात्तकरवालबलेन एतदात्तेन एतया प्रदत्तेन करवालेन खड्गेनैव बलेन सामर्थ्येन, करवालस्य बलेनेति वा खेचरं पवनवेगाख्यविद्याधरम् आहत्य हत्वा, एतामुपायत परिणीतवान्, न तु केवलं पतितुल्याकृतिरतत्कर्मा इत्यर्थः ॥२१७॥

હે રાજા ! આનો પતિ તે હશે જે આનાવડેજ અપાયેલા તલવારના બળથી વિદ્યાધરને હણી તાળાવ પાસે મહેલના ઉપર રહેલી આને પરણ્યો હતો. ॥૨૧૭॥

स्वानुभूतमिति चानु तदीयं, व्याजहार धनदः शुचिवृत्तम् ।
साऽवगुण्ठनमपास्य विलोक्य, स्वं पतिं प्रमदमापदनन्तम् ॥२१८॥

इति पूर्वोक्तम्, अनु पश्चात् स्वानुभूतं स्वेनैव न त्वन्येन केनापि, तथैव प्रत्ययसंभवादिति भावः, अनुभूतम्, तदीयं तिलकसुन्दरीसम्बन्धि, शुचि पवित्रं वृत्तं वृत्तान्तं च, धनदः व्याजहार उक्तवान्, सा तिलकसुन्दरी अवगुण्ठनं मुखावरणवस्त्रम् अपास्य दूरीकृत्य, स्वं पतिं विलोक्य, अनन्तं प्रमदं हर्षम् आपत् प्राप्तवती ॥२१८॥

અને પછી ધનદે તેની સાથે પોતે અનુભવેલા બીજા હેવાલો પણ વર્ણવ્યા. ત્યારે તે ઘૂંઘટ હઠાવી પોતાના પતિને જોઈ અત્યન્ત હર્ષને પામી. ॥૨૧૮॥

देवदत्तवणिजं विनिबद्धं, भूपतेरथ विमोच्य कथंचित् ।
सच्चकार निजवित्तषडंश-स्पर्शनात्स धनदश्चरिताख्यः ॥२१९॥

अथ अनन्तरम् विनिबद्धं निगडितं देवदत्तवणिजं कथंचिदनुनयाविना, भूपतेः सकाशात् विमोच्य, चरिताख्यः प्रसिद्धनामा स धनदः निजवित्तषडंशस्पर्शनात्-निजवित्तस्य षडंशस्य षष्ठांशस्य स्पर्शनाद्दानात् सच्चकार सत्कृतवान् ॥२१९॥

પછી બંધનમાં રહેલા દેવદત્ત વણિકને કોઈક રીતે રાજાથી છોડાવી પોતાના ધનનો છઠ્ઠો અંશ આપી યથાર્થ નામ વાળા ધનદે તેનો સત્કાર કર્યો. ॥૨૧૯॥

नन्वेतादृशानुपकारिणो सत्कारो न युज्यते, इत्यत आह--

सज्जना विरचयन्त्युपकारं, दुर्जनस्य विहितेऽप्यपकारे ।
छिन्नघृष्टमथवा परितापं, किं न चन्दनमपास्यति पुंसाम् ॥२२०॥

सज्जनाः विहिते कृतेऽपि अपकारे अप्रिये, दुर्जनस्य उपकारं विरचयन्ति—तत्रोदाहरणमाह—छिन्नमथवा घृष्टं चन्दनम्, नितान्तमपकृतं पुंसां छेदकानां घर्षकाणां च परितापं सन्तापं न अपास्यति दूरीकरोति किम् ! अपि त्ववश्यमपास्यति । तथैव सज्जना अपि अपकारिणमप्युपकुर्वन्तीत्यर्थः ॥२२०॥

અપકાર કરાયે છતે પણ સજ્જનો દુર્જનોનો ઉપકાર કરે છે જેમકે કપાયેલો ઘસાયેલો છતો પણ ચંદન મનુષ્યનો તાપ દૂર નથી કરતો શું ? કરે જ છે. ॥૨૨૦॥

अथ तस्य स्वगृहगमनमाह—

अथ कनकरथस्य क्षोणिशक्रस्य वाक्याज्जनकगृहमयासीत्पादचारेण सोऽपि ।
चिरपरिचययोगाल्लक्षणैर्लक्षयित्वा, प्रणतमपि पिता तं हर्षतोऽप्यालिलिङ्ग ॥२२१॥

अथ अनन्तरम् क्षोणिशक्रस्य नृपस्य कनकरथस्य, वाक्याद्—आज्ञायाः, स धनदः अपि पादचारेण पादाभ्यां यश्चारः चलनं तेनैव, न तु यानादिना जनकगृहम् जनकस्य पितुः गृहम् अयासीदगमत् । पिता तं प्रणतं धनदम्, चिरपरिचययोगात्—चिरं यः परिचयस्य सङ्गमस्य योगः सम्बन्धः तस्माद् अपि लक्षणैः चिह्नैः लक्षयित्वा परिचित्य, चिरकालसङ्गपरिचिता अपि अपरिचिता इव भासन्ते इति भावः । हर्षतः आलिलिङ्ग । अपिः परिचयसमुच्चये ॥२२१॥ मालिनीवृत्तम् ।

પછી પૃથ્વીના ઇન્દ્ર એવા રાજા કનકરથના કહેવાથી તે પણ પગે ચાલીને પિતાના ઘરે ગયો. લાંબા કાળના પરિચયે લક્ષણોથી ઓળખીને પિતાએ નમતા એવા તેને હર્ષ ભેર આલિંગન કર્યું. ॥૨૨૧॥

अथ पितुर्जिज्ञासामाह—

दिष्टया वत्स ! निरीक्षितोऽसि मयका जीवंश्चिराय स्वयं,
प्राणान् धारयता निमित्तविदुरज्योतिर्विदां वाक्यतः ।
कुत्रास्थाः किमुपार्जयो विषयमद्राक्षीः कमित्यादरात्,
पृष्टोऽसौ जनकेन तं तमखिलं वृत्तान्तमाख्यन्मुदा ॥२२२॥

वत्स ! मकका मया, स्वयं निमित्तविदुरज्योतिर्विदाम्—निमित्तविदुराणां शकुनज्ञानां ज्योतिर्विदां वाक्यतः अवश्यं त्वत्पुत्र आगमिष्यतीत्यादिरूपवाक्यतः, प्राणान् धारयता, तादृशाशाभावे तु मृतिरेव स्यात्, दिष्टया भाग्यवशात्, चिराय, चिरकालानन्तरं जीवन् निरीक्षितः असि, भाग्याभावे तु नैवं भवितुमर्हतीति भावः । कुत्र आस्थाः न्यवात्सीः, किम् उपार्जयः लाभो लब्धः । कं

विषयं देशमद्राक्षी इति—इत्थम्—आदरात्—आग्रहेण जनकेन पित्रा पृष्टः असौ धनदः मुदा सहर्षम्, तं तम् अनेकप्रकारं जातम् अखिलं वृत्तान्तमाख्यत् कथितवान् ॥ २२२ ॥

शार्दूलविक्रीडितं छन्दः ।

હે વત્સ ! બહુ ખુશીની વાત કે હું જીવતો પોતેજ લાબા કાળે પણ તને જોયો. હું નિમિત્ત જાણનાર જોશીના વાકયથી જીવતો હતો. કયા રહ્યો ? શું મેળવ્યું ? કયા દેશ જોયા ? આ બધુ પિતાથી આદરપૂર્વક પૂછાયેલા તેણે હર્ષપૂર્વક તે તે બધા સમાચાર કીધાં. ॥૨૨૨॥

अथ तच्छ्रुत्वा रत्नसारमनोभावमाह—

एकाकी निरगादयं निजगृहात्कश्चित्सहायोऽपि न,
द्रष्टा नाप्युपवर्त्तनस्य न परिच्छेत्ता पुनः कस्यचित् ? ।
स्वर्णद्वीपमवाप्य तादृशमहो ! यत्स्वर्णमप्यार्जय—
द्राजानं रमयन् गुणान्विवृणुते तत्पुण्यविस्फूर्जितम् ॥२२३॥

अयं धनदः एकाकी एक एव, निजगृहात् निरगात् जगाम. कश्चित्सहायः सयात्रः अपि न, नापि उपवर्त्तनस्य देशस्य द्रष्टा "देशविषयौ तूपवर्तनमि"त्यमरः । कदाचिदपि किमप्यन्यं देशं दृष्टवानित्यर्थः । पुनः कस्यचित् परिच्छेत्ता परिचेता अपि न नितरामनभिज्ञः, गेहात्कदाचिदपि अनिर्गत इति भावः, अत एव अहो आश्चर्यम्, यत् तादृशं जलधिपारस्थितमगम्यं स्वर्णद्वीपमवाप्य स्वर्णमार्जत् राजानं नृपं रमयन् रञ्जयन्, साम्प्रतं गुणान् सत्कारादीनपि नृपकृतान्, विवृणुते प्राप्नोति तत् एतत्सर्वं पुण्यविस्फूर्जितम् पुण्यस्य विस्फूर्जितं प्रभावः, नहि पुण्यं विना इत्थं कदाचिदपि घटते इति भावः ॥२२३॥

આ ધનદ એકલો ઘરથી નીકળ્યો હતો, કોઈ મદદગાર પણ હતો નહિ, કદી દેશ નહોતો જોયો, કોઈને ઓળખતો—જાણતો પણ ન હતો, છતાં આશ્ચર્ય છે કે તે તેવા સ્વર્ણદ્વીપને પામી સોનાનું પણ ઉપાર્જન કર્યું ને રાજાને ખુશ કરતો ગુણોનું વર્ણન કર્યું તે બધુ પુણ્યનો પ્રભાવ છે. ॥૨૨૩॥

मत्वैवं रत्नसारः प्रमुदितहृदयः साररत्नोपदाभि-
र्विज्ञप्य क्षोणिपालं तनयमथ निजं वाहने मर्त्यवाह्ये ।
आरोप्यामैव वध्वा सह नगरजनैः सेन्दिरे मन्दिरे तं,
नीत्वा वर्द्धापनं स व्यरचयदसमं स्वस्य कल्याणमिच्छुः ॥२२४॥

एवं साररत्नोपदाभिः उक्तप्रकारं मत्वा विचार्य, प्रमुदितहृदयः प्रसन्नः रत्नसारः सारस्य श्रेष्ठस्य रत्नस्योपदाभिरुपहारैः कृत्वा क्षोणिपालं नृपं विज्ञप्य, मम पुत्र आगत इत्येवं सूचयित्वा, अथ पश्चात् निजं तनयं धनदं वध्वा तिलकसुन्दर्या अमा सहैव, मर्त्यवाह्ये वाहने शिबिकादौ

शिबिकादौ आरोह्य आरोप्य, नगरजनैः सह तं पुत्रं सैन्दिरे लक्ष्मीसमृद्धे मन्दिरे गृहे, नीत्वा प्रापय्य स्वस्य कल्याणमिच्छुः स रत्नसारः असममनुपमं वर्धापनं माङ्गलिककर्म व्यरचयत् ॥२२४॥

એમ માની રત્નસાર પ્રસન્ન મનથી શ્રેષ્ઠ રત્નોનો ઉપહાર રાજાને જણાવી પછી મનુષ્યથી વહન કરાય એવા વાહન ઉપર પુત્રને પુત્ર–વધૂ સાથે જ ચઢાવી નગર–લોકોની સાથે લક્ષ્મીસમ્પન્ન ઘરમાં લઈ જઈ પોતાનું કલ્યાણ ઈચ્છતો તેની અનુપમ એવી વધામણી કરી. ॥૨૨૪॥

आसीच्छ्रीगुरुगच्छ························इत्यादि ।

( एष श्लोकः पूर्ववद्व्याख्येयः )

શ્રી ગુરુગચ્છ ના શિરોમણિ સમાન શ્રીમાનભદ્રસૂરિના માટે વિદ્વાનીઓમાં શ્રેષ્ઠ એવા સુગુરુ શ્રી ગુણભદ્રસૂરિ થયા તેના શિષ્ય શ્રીમુનિભદ્રસૂરે કવિવડે કરાયેલા આ સોળમાં તીર્થંકર શ્રી શાન્તિનાથ ચરિત્ર મહાકાવ્યમાં છઠ્ઠો સર્ગ પૂરો થયો. ॥૨૨૫॥

इति श्रीशान्तिनाथमहाकाव्ये–शासनसम्राट् सूरिचक्रचक्रवर्ति–परमगुरुवरभट्टारकाचार्य श्रीमद्विजयनेमिसूरीश्वरपट्टप्रभावक–न्यायवाचस्पतिशास्त्रविशारद – श्रीमद्विजयदर्शनसूरीश्वरसन्दृब्धायां श्रीशान्तिनाथमहाकाव्यप्रबोधिन्याख्यटीकायां—

षष्ठः सर्गः समाप्तः ।

* ॐ अर्हम् *

# ॥ अथ सप्तमः सर्गः ॥

अथ सप्तमसर्गप्रारम्भे मङ्गलमातनोति—

यस्य दर्शनमवाप्य योगिनो, योगमेव सफलं विजानते ।
दुष्टकर्मविनिवर्हणक्षमः, शान्तिरस्तु भवतां शुभाय सः ॥१॥

योगिनः मुनयः यस्य श्रीशान्तिनाथप्रभोर्दर्शनं साक्षात्कारम् अवाप्य एव, यस्य दर्शनमात्रत इत्यर्थः । यद्वा दर्शनं शासनमवाप्य [1]योगं ध्यातृध्यानध्येयैकत्वीकरणरूपमोक्षजनकसम्यग्दर्शनादित्रयात्मकसमाधिलक्षणं सफलं विजानते । एतेन तद्दर्शनस्य दौर्लभ्यम्, अग्रभूमित्वञ्च सूचितम्, स तादृशः, दुष्टानां घातिनां कर्मणां विनिवर्हणे विनाशने स्वातिशयद्वारा क्षमः समर्थः श्रीशान्तिः तदाख्यः षोडशः तीर्थङ्करः, भवतामध्येतृणामध्यापकानां च शुभाय अस्तु स्तात् ॥१॥

( रथोद्धतावृत्तम् )

યોગિઓ જેનું દર્શન કરી પોતાના યોગને સફળ માને છે, દુષ્ટકર્મોના નાશ કરવામાં સમર્થ એવા તે શાંતિજિન વાચકોના શુભ કરનારા થાઓ. ॥૧॥

अथ पूर्वसर्गावशिष्टकथांशमुपक्षिपन् तिलकसुन्दर्याः स्वश्वशुरप्रणतिमाह—

साऽथ कान्तधनदोपदेशतः, प्राणमत्तिलकसुन्दरी वधूः ।
रत्नसारचरणाम्बुजद्वयं, सेवितं किमपि रत्नचूलया ॥२॥

अथ स्वगृहगमनानन्तरम्, कान्तस्य स्वामिनो धनदस्य उपदेशतः कथनात् सा तिलकसुन्दरी वधूः, प्राणमत् रत्नसारस्य चरणाम्बुजद्वयम्, किमपि अनिर्वचनीयस्वरूपतया रत्नचूलया मणिचूलाख्यस्वस्त्रिया सेवितमित्यर्थः ॥२॥

પછી તે તિલકસુન્દરીએ પોતાના પતિ ધનદના કહેવાથી કાંઈક અદ્ભુત રત્નથી યુક્ત એવા રત્નસારના બન્ને ચરણ કમલને પ્રણામ કર્યો. ॥૨॥

तौ समीक्ष्य विनयोज्ज्वलामिमां, हर्षमेव बिभराम्बभूवतुः ।
मानसे द्रमकदम्पती ज्वल—त्स्वर्णरत्नखचितं निधिं यथा ॥३॥

---

१ मोक्षेण योजनाद् योगः सम्यग्दर्शनादित्रयात्मकस्तम् ।

तौ पितापुत्रौ श्वशुरौ वा, विनयेन कृत्वा उज्ज्वलां शोभमानां विनयवतीमिमां तिलकसुन्दरीं समीक्ष्य एव विलोकनमात्रादेव मानसे हर्षं बिभराम्बभूवतुः । सर्वो हि अनुकूलदर्शनेन तुष्यतीति भावः । तत्रोपमानमाह—'यथा द्रुमकदम्पती ज्वलत्स्वर्णरत्नखचितं निधिम्' यथा येन प्रकारेण द्रुमकौ निर्धनौ दम्पती जायापती ज्वलद्भिः भास्वरैः स्वर्णैः रत्नैश्च खचितं स्यूतं निधिमाकरम् समीक्ष्य, मानसे मनसि हर्षं बिभृत इति शेषः ॥३॥

ते બન્ને સાસુ સસરા વિનયથી ઉજ્જ્વલ એવી આ તિલકસુન્દરીને જોઈ અત્યન્ત ખુશ થયા. જેમ દમડી જેની પાસે હોય એવા પતિ પત્ની પ્રકાશમાન એવા સોનાને રત્નોથી ભરેલા ખજાનાને જોઈ મનમાં ખુશ થયા. ॥૩॥

सा बभार गृहभारमात्मनाऽऽवर्जयन्त्यपि कुटुम्बपेटकम् ।
धर्म्यकर्मणि मनः समाहितौ, तौ च बिभ्रतुरपेतविभ्रमौ ॥४॥

सा तिलकसुन्दरी आत्मना अपि स्वयमेव, एतेन तस्या गृहकर्मविधानविज्ञता तदुत्साहश्च सूचितः । "गणं पेटकं वृन्दम्" इति हैमोक्तेः पेटकस्य समुदायवाचकत्वात् कुटुम्बपेटकं स्वकुटुम्ब-समुदायम् आवर्जयन्ती रञ्जयन्ती मधुरवागुचितव्यवहारादिभिः, गृहभारं गृहकार्यभारं बभार । सुलक्षणस्त्रीणामेतत्प्रथमं लक्षणमिति भावः । अत एव, अपेतविभ्रमौ निःशङ्कौ तौ पितापुत्रौ श्वशुरौ वा समाहितौ शान्तचेतस्कौ रक्तमानसौ वा । धर्म्ये धर्मजनके कर्मणि व्रतादौ मनः बिभ्रतुरासञ्जतुः, अन्यथा धर्मक्रियां चक्रतुरित्यर्थः ॥४॥

ते તિલકસુન્દરી કુટુંબ સમૂહને ખુશ કરતી ઘરનો ભાર પોતે ઉઠાવી લીધો. તે બન્ને સાસુ સસરા કાર્યભાર છોડી સમાધિપૂર્વક ધર્માનુષ્ઠાનમા મન પરોવ્યું ॥૪॥

कान्तया सह तया समाश्रयत्, सोऽथ शर्मधनदो धनेश्वरः ।
कामकेलिजनितं हि यौवने, मुख्यमेतदुपचारतोऽपरम् ॥५॥

अथानन्तरम् स धनेश्वरः धनदः तया कान्तया तिलकसुन्दर्या सह, कामकेलिजनितं कामविलासजन्यं शर्म सुखं समाश्रयदन्वभूत् । ननु किमिति अन्यसुखानुभवो न कथ्यते इति चेत्तत्राह-हि यतः, यौवने, एतत्कामसुखं मुख्यं प्रधानम् अपरमन्यत्सुखम्, उपचारतः गौणतया, कामसुखस्य यौवन एवावैकल्येन लाभसम्भवात्सुखान्तरस्य च वार्धक्यादावपि प्रचुरतया लाभसंभवाच्च यौवने कामसुखस्यैव प्राधान्यमिति भावः ॥५॥

પછી શેઠ તે ધનદ તે સ્રીની સાથે કામક્રીડાના સુખને પામ્યો, કેમકે યુવા અવસ્થામાં આજ મુખ્ય છે, બીજા ગૌણ છે. ॥૫॥

मर्तुसङ्गमुपलभ्य भाविनी, दुःखमेव न वियोगसंभवम् ।
साऽन्यगात्कुमुदिनीव कौमुदी–नायके सहचिते हृदयिता ॥६॥

भर्तुः धनदस्य सङ्गम् उपलभ्य प्राप्य, भाविनी सदाशया सा तिलकसुन्दरी, मुदा हर्षेण अञ्चिता युक्ता, अथ च प्रफुल्ला सती, वियोगसभवं विरहजन्यं पूर्वानुभूतं भविष्यद्वा, दुःखम्, कौमुदीनायके चन्द्रे समुदिते सति सम्यगुदयं प्राप्ते सति कुमुदिनी इव नैव अध्यगात् सस्मार प्राप वा । अत्र मुदञ्चितेति दुःखाभावावगमे विशेषणगत्या हेतुरित्यतः पदार्थहेतुकं काव्यलिङ्गमलङ्कारः ॥६॥

ચંદ્રમાનો ઉદય થયે છતે વિકસ્વર થયેલી કુમુદિનીને જેમ મનવાળો તે તિલકસુન્દરી પતિનો સંગ પામી હતી વિરહ દુઃખનો અનુભવ કર્યો નહિ ॥૬॥

लज्जया किमपि कामकौशलं, या न वल्लभमबूबुधत्पुरा ।
प्रेम पत्युरवलोक्य संभृतं, सा स्वतस्तदनु तं न्यवीविदत् ॥७॥

या तिलकसुन्दरी, पुरा, विवाहे जातेऽपि अल्पपरिचयात्पूर्वस्मिन्काले, मुग्धत्वाद्वा, लज्जया, किमपीषदपि, कामे कामक्रीडायां कौशलं नैपुण्यम्, वल्लभं पति धनदं न अबूबुधत् बोधयति स्म । अज्ञातकामविलासा इव वर्त्तते स्म, सा तिलकसुन्दरी, पत्युः प्रेम विलोक्य, धैर्योत्साहसात् गाढपरिचयात्स्वस्य पूर्णयुवत्वाच्च, तदनु प्रेमविलोकनानन्तरं स्वतः अप्रेरिता इव रागवशात्, संभृतं राशीकृतमिव पूर्वमकरणात्कामकौशलम्, तं पतिं धनदम्, न्यवीविदद्वेदयति स्म ॥७॥

જે તિલકસુન્દરી પહેલા પતિની જે કામ ચેષ્ટા લજ્જાથી સમજતી ન હતી, તે પતિનો પ્રેમ જોઈ પોતે જ તે પુરેપુરૂ તેને અનુસરીને જણાવવા લાગી. ॥૭॥

वप्तुरङ्कमधितस्थुषोऽन्यदा, नन्दनस्य नृपतेः समार्पयत् ।
प्राभृतं निभृतमानमच्छिरा, मालिकः सुरभिपुष्पमालिकाम् ॥८॥

अन्यदा वप्तुः पितुः अङ्कम् क्रोडम् अधितस्थुषः अध्यासितस्य नृपतेः राज्ञः नन्दनस्य पुत्रस्य आनमच्छिराः आनमच्छिरो मस्तकं यस्य स तथा नमन् मालिकः मालाकारः, निभृतं सविनयं प्राभृतमुपहारम् सुरभिपुष्पाणां मालिकां स्रजं समार्पयद्ददौ ॥८॥

એક દિવસે પિતા એવા રાજાના ખોળામાં જ્યારે તેનો પુત્ર બેઠો હતો, ત્યારે નમન કરતા નમેલા મસ્તકવાળા માળીએ સંગઠિત પુષ્પોની માળારૂપ ઉપહાર ચુપચાપ આપ્યો. ॥૮॥

घ्राणदेशविषयं नयन्नयं, तां मधुव्रतविकर्षणौषधीम् ।
दृश्यते स्म वदनोऽन्तराश्रिता, निर्निमित्तरिपुराजभोगिना ॥९॥

तां मधुव्रतानां भ्रमराणां विकर्षणे समाकर्षणे ओषधीं तदुपमां तद्गन्धस्यामोदसमन्वितां स्रजम्, घ्राणदेशविषयं नासागोचरं नयन्कुर्वन् जिघ्रन्नित्यर्थः । अयं नृपतिनन्दनः, अन्तःस्रजः मध्ये आश्रितवास्थितेन, निर्निमित्तं निष्कारणम् रिपुः प्राणनाशकत्वेन शत्रुः यः राजभोगी भोगिनां सर्पाणां राजा, राजसर्पः विषधरः सर्पस्तेन, वदने मुखे दृश्यते स्म ॥९॥

ભ્રમરોનું આકર્ષણ કરવામાં જડ બુટી સમાન એવી માળાને નાક પાસે લઈ જતા તે રાજાનો પુત્ર અંદર રહેલા અકારણ શત્રુ એવા સર્પ વડે મુખ ઉપર ડંખાયો. ॥૯॥

तत्क्षणादपि पपात भूतले, क्ष्वेडपीडितवपुर्मुमूर्च्छ च ।
व्याकुलश्च नृपतिः सहस्रशोऽजूहवद्विषचिकित्सकानयम् ॥१०॥

"क्ष्वेडस्तु गरलं विषम्" इत्यमरोक्तेः क्ष्वेडेन सर्पविषेण पीडितं परिव्याप्तं बलहीनं कृतं वा वपुर्यस्य स तादृशः नृपपुत्रः, तत्क्षणात्सद्य एव एतेन विषस्यात्युल्वणत्वं सूचितम्, नान्यथा सद्यस्त-दवस्थासंभव इति भावः । भूतले पपात मुमूर्च्छ निश्चेष्टतां गतश्च, अत एव व्याकुलः व्यग्रः अयं नृपतिः, सहस्रशः विषचिकित्सकान् जाङ्गुलिकान्, अजूहवत् आकारयति स्म ॥१०॥

રાજાનો પુત્ર તે વખતે જ ભુમિ ઉપર પડી ગયો ને વિષથી ગ્રસિત શરીરવાળો તે મૂર્ચ્છા પામ્યો. તેથી આકુલ વ્યાકુલ થયેલા તે રાજા હજારો વિષવૈદ્યોને બોલાવ્યા. ॥૧૦॥

औषधानि कतिचिन्न्ययोजयं-स्तत्र मन्त्रमपरे च मान्त्रिकाः ।
सम्प्रयुज्य सकलाः स्वकौशलं, केवलं श्रममवापुरास्थिताः ॥११॥

तत्र नृपपुत्रविषये, कतिचिदनेके जनाः, औषधानि विषनाशकभेषजानि न्ययोजयन् प्रयोज-यन्ति स्म, अपरे मान्त्रिकाः मन्त्रप्रयोगेण विषहर्तारश्च मन्त्रं न्ययोजयन् । सकलाः विषवैद्याः स्वं कौशलं तद्विषयनैपुण्यम् सम्प्रयुज्य, आस्थिताः यथातथमस्थुः, यतः, केवलं श्रमम् तत्तत्प्रयोगजन्यं खेदमवापुः विषनाशरूपफलालाभात् तादृशप्रयोगेण श्रम एव लब्धः इत्यर्थः ॥११॥

તે વૈદ્યોએ કેટલી દવાઓ આપી ને બીજા મંત્રના જાણકારોએ મંત્રો પણ બોલ્યા. બધા પોત પોતાનું કૌશલ્ય અજમાવીને ફક્ત થાક ખાઈને બેસી ગયા. ॥૧૧॥

तान्निरीक्ष्य विफलीकृतक्रियान्, मान्त्रिकान्विषचिकित्सकानपि ।
देवतार्पितमणेर्जलोक्षणा-न्निर्विषं धनद एव तं व्यधात् ॥१२॥

तान् मान्त्रिकान् विषचिकित्सकान् अपि, विफलीकृता विफला क्रिया विषनाशनोपायो येषां तान् तादृशान् निरीक्ष्य विलोक्य, धनद एव, न त्वन्यः, देवताभिः चक्रेश्वर्या अर्पितस्य दत्तस्य मणेः विषनाशकमणेः, जलस्य उक्षणात्सेचनात्, तं नृपपुत्रं निर्विषं विषमुक्तं व्यधादकार्षीत् ॥१२॥

ત્યારે ધનદે તે વિષવૈદ્યોને મંત્ર જાણનારાઓને તેઓનો શ્રમ નિષ્ફળ ગયો છે એમ જોઈ દેવતાએ આપેલા મણિના જળ સીંચવાથી તે રાજપુત્રને વિષરહિત કરી દીધો. ॥૧૨॥

अथ दृष्टनुपकृततत्प्रशंसनमाह—

रत्नमेतदुपकर्तुमप्यलं, त्वादृशां समधिगम्य सन्निधिम् ।
वेधसेव घटितं विचेतनं, रत्नसारसुत ! चेतनाश्रय ! ॥१३॥

रत्नसारसुत ! चेतना बुद्धिस्तस्याः आश्रय ! धीमन् ! धनद ! त्वादृशां सन्निधिं समधिगम्य प्राप्य, एतद्विचेतनं जडमपि रत्नम्, उपकर्तुं विषनाशद्वारा उपकर्तुमलं समर्थम्, वेधसा भाग्येनैव घटितं योजितम्, उपकारश्चेतनधर्मः, स कथमनेन क्रियताम्? एवं चेत्थं भवनं भाग्यवशादेव, तदपि च चेतनाश्रयाश्रयादेव, चेतनाश्रयाश्रयादचेतनस्य चेतनधर्मः संभाव्यते इति भावः। एवं च विधेर्विधाने तव निमित्ततया त्वं मम मदुपकारक इति कृतज्ञता सूचिता ॥१३॥

रत्नसारतनुजन्मता तव, प्रागभूद्धनद ! सा निरन्वया ।
रत्नसारतनुजन्मताधुना, सान्वया मदुपकारकारणात् ॥१४॥

धनद ! प्राक् पुरा, तव रत्नसारस्य तनुजन्मता पुत्रता, या अभूत्, सा निरन्वया रूढिरेव रूढया रत्नसारपदवाच्यपुत्रता, न तु रत्नेन कृत्वा रत्नसारस्य१ श्रेष्ठस्य तनोः शरीराज्जन्म यस्य स तद्भावस्तत्ता इति रत्नेन सारः स चासौ तनु जन्मा देहीति च, रत्नसारः तनौ यस्य तादृशं जन्म यस्य तद्भावस्तत्ता वेति च योगार्थानुयायिनी न, अत एव प्राक् निरन्वया सा इत्यर्थः। अधुना मम उपकारस्य रत्नसारजलसेकान्मम पुत्रस्य विषापहारद्वारा संजीवनरूपस्यासाधारणस्य साहाय्यस्य करणात्, रत्नसारतनुजन्मता सान्वया पूर्वोक्तयोगार्थानुयायिनीति त्वं यथार्थनामासीत्यर्थः ॥१४॥

एवमस्य बहुधा प्रशंसनं, बन्दिवन्नरपतिस्ततान सः ।
कीर्त्यते स हि वदावदः परं, यः प्रशंसति गुणाश्रयं जनम् ॥१५॥

( त्रिभिर्विशेषकम् )

एवमुक्तप्रकारेण, स नरपतिः कनकरथः, बन्दिवत् चारणवत्, अस्य धनदस्य बहुधा अनेकप्रकारेण प्रशंसनं गुणोत्कीर्त्तनं ततान चकार। एतेन तस्यावसरोचितवाक्पटुत्वं सूचितम्, अन्यथा बहुधा प्रशंसनाऽसम्भवात्। तदेवाह—हि यतः स वदावदः अतिशयेन पुनः पुनः वा वक्तीति सुवक्ता कीर्त्यते कथ्यते, यः, गुणाश्रयं गुणिनं जनं परमात्यन्तं प्रशंसति, अल्पभाषी निन्दको वा न वक्ता किन्तु स एव ॥१५॥

હે બુદ્ધિમાન એવા રત્નસારનો પુત્ર ધનદ તમારા જેવાની પાસે રહીને જ આ વિધાતાએ ઘડેલા જડ એવો રત્ન પણ ઉપકાર કરી શકયો છે. ॥૧૩॥

હે ધનદ ! પહેલા તમારૂં રત્નસારના શરીરથી ઉત્પન્ન થવા પણું અર્થ વગરનું હતું પણ હમણાં મારો ઉપકાર કરવાથી તમારૂં રત્નસારના શરીરથી જન્મ થવા પણું સાર્થક થયું છે ( કેમકે રત્નથી વિષ દૂર કર્યો છે ). ॥૧૪॥

આમ તે રાજાએ ભાટચારણની જેમ તે ધનદની અનેક પ્રકારે પ્રશંસા કરી પણ તે વક્તા વધારે પ્રશંસા પામે છે જે ગુણિજનની પ્રશંસા કરે છે. ॥૧૫॥

---

१ रत्नसारात् श्रेष्ठात्। रत्नमिव सारं श्रेष्ठं यस्तु तस्मात्।

यौवनोपचयसुन्दरोऽन्यदा, कुञ्जरं समधिरुह्य यन् पथि ।
भूपसूः स च गवाक्षमाश्रितां, सूरभूपतनयामवैक्षत ॥१६॥

अन्यदा चिरकालानन्तरम्, यौवनेन यः उपचयः अङ्गलावण्यादिवृद्धिः, तेन कृत्वा सुन्दरः दर्शनीयः स भूपसूः राजपुत्रः कुञ्जरं गजमारुह्य पथि यन् गच्छन्, गवाक्षमाश्रितां गवाक्षं वातायनमाश्रित्य स्थितां सूरभूपस्य सूरनामनृपतेः तनयां पुत्रीमवैक्षत ॥१६॥

तां राजपुत्रीमेव विशिनष्टि—

श्रीपदोपचितषेणिकाभिधां, क्षीरनीरधिसुतानुजामिव ।
दृश्यपाणिकमलामनाविलां, रूपलक्षणगुणोपशोभिताम् ॥१७॥

( युग्मम् )

क्षीरनीरधिसुतः चन्द्रः, क्षीरसागरात् चन्द्र जन्मेति पुराणादिति भावः, तस्य अनुजाम्, कनिष्ठस्वसारं लक्ष्मीमिव रूपेण लक्षणैः सामुद्रिकोक्तैः, गुणैश्च उपशोभिताम्, अत एव अनाविलाम् निर्मलाम्, तथा दृश्यं पाणिः कमलमिव यस्यास्ताम्, न तु अङ्गान्तरम्, शीलसम्पन्नत्वेन स्वगृहे वा एकान्तेनापि आवृतशरीरत्वादिति सत्कुलजत्वमुक्तम्, श्रीपदोचितषेणिकाभिधां श्रीषेणिकानाम्नीं, सूरभूपतनयामवैक्षतेति पूर्वेण सम्बन्धः ॥१७॥

એક દિવસે યુવાવસ્થાની ચઢતીથી વધારે દેખાવડો તે રાજાનો પુત્ર હાથી ઉપર ચઢી જતો જતો માર્ગમાં ગોખ પર રહેલી સૂર રાજાની લક્ષ્મીની નાની બહેન જેવી.—જેનો હાથ બહારથી દેખાય છે તેવી ઉઘાડા હાથવાળી નિર્મળને સૌન્દર્ય લક્ષણને ગુણોથી શોભતી એવી શ્રીષેણુ નામની કન્યાને જોઈ. ॥૧૬॥૧૭॥

अथ तद्दर्शनात्तदवस्थामाह—

पुष्पसायकनिशातसायकै–राहतः सममजन्यचेतनः ।
का तदङ्गसुकुमारता परा, तस्य कोऽत्र ननु विक्रमक्रमः ॥१८॥

समं दर्शनैककालमेव, पुष्पसायकस्य कामस्य निशातैः तीक्ष्णैः लक्ष्यवेधनिपुणैः "शरे खड्गे च सायकः" इत्यमरोक्तेः सायकैः पञ्चभिः बाणैः पौष्पैः, आहतः विद्धः, स अचेतनः निश्चेष्टः अजनि, कामज्वरपीडितोऽभूदित्यर्थः । नन्वित्याश्चर्ये वितर्के वा, तदङ्गस्य पुष्पघटितबाणाङ्गस्य पुष्पस्य सुकुमारता मृदुता परा अत्युत्कृष्टा का क्व, अपूर्वेत्यर्थः । यद्वा तदङ्गस्य सूरकन्यकाङ्गस्येत्यर्थः । तस्य तादृशसुकुमाराङ्गस्य बाणस्य सूरभूपतनयाङ्गस्य वा, अत्र राजपुत्रे, विक्रमक्रमः प्रभावपरम्परा कः क्व, मृदुवस्तुन आघातेन कस्याप्यचैतन्यमाश्चर्यम् ॥१८॥

તે રાજાનો પુત્ર કામદેવ વડે તીક્ષ્ણ બાણોથી હણવાના સાથે હોશ ગુમાવી બેઠો—કેવી તે રાજપુત્રીના અંગોની સુન્દર સુકુમારતાને કેવા તેનો આ રાજપુત્રને વિષે પરાક્રમની પરંપરા ? ॥૧૮॥

चेतनाविकलमेव मन्दिरं, तं सुहृत्समुदयः समानयत् ।
चन्दनैर्न हृदये निवेशितै-स्तापशान्तिरभवत्तदङ्गके ॥१९॥

सुहृत्समुदयः मित्रवृन्दं तं राजपुत्रम्, चेतनाविकलं मूर्च्छितमेव, मन्दिरं गृहं समानयत्, तस्य राजपुत्रस्याङ्गकेऽङ्गे, हृदये उरसि निवेशितैः लिप्तैः चन्दनैः अतिशीतलत्वेन तापशमकत्वेन प्रसिद्धैः श्रीखण्डैरपि, तापस्य कामज्वरस्य शान्तिः न अभवत्, कामज्वरस्य अत्यधिकत्वादितिभावः ॥१९॥

બધા તે મિત્રો બેહોશ રાજપુત્રને ઘરે લઈ ગયા પણ હૃદય ઉપર ચંદન મુકાયા છતા તેના અંગોમાં તાવ ઓછો થયો નહિ. ॥૧૯॥

अथ तत्कामज्वरस्य प्रकारान्तरेणाप्यसाध्यत्वमाह—

मान्मथं ज्वरमपोहितुं क्षमा, भेषजैर्न भिषजो रसैरपि ।
लङ्घनैरपि घनैर्न साधनैः, सुश्रुतोक्तविधिना विधापितैः ॥२०॥

भिषजः चिकित्सकाः सुश्रुतेन तदाख्यचिकित्सकमूर्धन्येन उक्तेन सुश्रुतसंहितायां प्रदर्शितेन विधिना पद्धत्या, घनैः बहुभिः साधनैरुपकरणैः कृत्वा, विधापितैः निर्मापितैः, भेषजैः काष्ठौषधिजन्यौषधैः, रसैः पारदादिभस्मनिर्मितैः रसाख्यौषधविशेषैरपि न, लङ्घनैरुपवासैरपि न, मान्मथं कामजन्यं ज्वरं तापमपोहितुं दूरीकर्तुं क्षमाः समर्था अभूवन्। असाध्यं तत्कामज्वरमिति ॥२०॥

વૈદ્યો કામજ્વરને કાષ્ઠૌષધિથી કે રસભસ્મોથી કે લંઘનથી કે શુશ્રુતે કહેલા પ્રમાણે કરાયેલા બીજા ઘણા પ્રકારે પણ મટાડી શકતા નથી. ॥૨૦॥

तस्य दाहातिरेकमाह—

तस्य शस्यशयनीयपल्लवा, मर्मरत्वमगमन् प्रतिक्षणम् ।
अङ्गदाहशमनाय कल्पिता, दाहमेव विपुलं वितेनिरे ॥२१॥

तस्य राजपुत्रस्य, अङ्गस्य दाहो ज्वरस्तापः तस्य शमनाय शान्त्यै, प्रतिक्षणम् क्षणे क्षणे, कल्पिता विहिताः, दाहज्वरोष्मणा एकस्य शुष्कत्वे सद्य एव पुनरन्यदेवं क्रमेणेतिभावः । शस्या अतिमृदवः शयनीयस्य शय्यायाः "तल्पं शय्या शयनीयम्" इति हैमः । पल्लवाः किसलयानि "किसलयं किसलं पल्लवोऽत्र तु" इति हैमः । मर्मरत्वं मर्मरशब्दकर्तृत्वम्, शुष्कत्वादिति भावः । "अथ मर्मरः स्वनिते वस्त्रपर्णानाम्" इत्यमरः । अगमन् आयुः, अत एव, विपुलमधिकमेव दाहं वितेनिरे चक्रुः । अत्र दाहनाशार्थं कृतेन पल्लवशयनीयेन वैपरीत्येन दाहाधिक्यस्यैव वर्णनाद्विषमालङ्कारः ॥२१॥

તેની શય્યાના લીલા કુમળા પાંદડાઓ ક્ષણે ક્ષણે મર્મર અવાજ કરવા લાગ્યા. અંગના દાહની શાંતિ માટે કરાયેલી તે શય્યા ઉલટું ઘણો જ દાહ આપતી હતી. ॥૨૧॥

तच्चिकित्सकचिकित्सितं वृथा, संप्रपद्य सुहृदा स भाषितः ।
तथ्यमेव यदि कथ्यते त्वया, तद्रुजोपशमनाय यत्यते ॥२२॥

ततस्मात् चिकित्सकस्य चिकित्सितं वृथा निष्फलं संप्रपश्यावधार्य, सुहृदा मित्रेण स राजपुत्रः भाषितः, किमित्याह—यदि त्वया तथ्यं सत्यमेव, न तु लज्जादिना कथमप्यसत्यं कथ्यते, तत्तदा, रुजायाः व्याधेः उपशमनाय शान्त्यै यत्यते उपायान्तरं क्रियतेऽस्माभिः । स्वबुद्धया तु निष्फलमेव सर्वं जातम् ( निष्फला एव सर्वे उपाया जाताः ) अतस्तवाशयज्ञानमावश्यकमिति भावः ॥२२॥

પછી સારા સારા વૈદ્યોની ચિકિત્સા પણ ફોગટ થાય છે એમ માની તેના મિત્રોએ કીધું જો તમે સત્ય જ હકીકત જણાવો તો તે રોગ મટાડવા યત્ન કરી શકાય. ॥૨૨॥

तेन तस्य परिपृच्छतः पुरः, स्वस्वरूपमखिलं प्रकाशितम् ।
नैकमानसविभिन्नवर्ष्मणो, गोप्यमस्ति सुहृदो हि किञ्चन ॥२३॥

परिपृच्छतः तस्य मित्रस्य पुरोऽग्रे तेन राजपुत्रेण, अखिलं स्वस्वरूपं निजवृत्तान्तः, प्रकाशितं प्रकटितम्, मित्राद्धि किमपि न गोप्यमित्याह—हि यतः, सुहृदः मित्रात्, एकं मानसं विभिन्नं पृथक् वर्ष्म शरीरं यस्य स ततः तादृशात्, किञ्चन गोप्यं न अस्ति, शरीरभेदेऽपि मनसः ऐक्यात् कथं नाम गोप्यमस्तु, नहि स्वमनोभावः स्वमनसा गुप्त इति भवितुमर्हति, मित्रयोरप्यत एवैकमानसतया न गोपनसंभव इति भावः ॥२३॥

વારંવાર પૂછતા એવા તે મિત્રોની આગળ તે રાજપુત્રે બધો પોતાનો વૃતાંત પ્રગટ કરી દીધો. કેમકે શરીરથી ભિન્ન પણ મનથી એક એવા મિત્રથી કંઈ છુપાવવા જેવું હોતું નથી. ॥૨૩॥

तस्य सख्युरवगम्य तत्तथा, भूपतिः सपदि मूलमन्त्रिणम् ।
सूरभूमिपतिसन्निधौ सुतां, प्राहिणोत् मृगयितुं मृगेक्षणाम् ॥२४॥

भूपतिः, तस्य स्वपुत्रस्य सख्युः मित्रात्, तत्सर्वं वृत्तान्तं तथा अविकलमेवावगम्य सपदि तत्कालमेव, मूलं प्रधानं मन्त्रिणम्, सूरभूमिपतिसन्निधौ मृगेक्षणां सुन्दरीं सुतां सूरभूपकन्यां मृगयितुं याचितुं प्राहिणोत् ॥२४॥

રાજાએ તેના મિત્ર પાસેથી તે સમાચાર જાણી તરત જ મુખ્ય મંત્રીને સૂરરાજા પાસે તેની હરણ જેવી આંખોવાળી એવી કન્યાની શોધ માટે મોકલ્યો. ॥૨૪॥

अथ तदुक्तिमेवाह—

आपतन्तमवलोक्य मन्त्रिणं, रंहसा समुदतिष्ठदासनात् ।
आसने समुपवेश्य गौरवा-दित्युवाच च स सूरभूपतिः ॥२५॥

रंहसा वेगेन आपतन्तं समागच्छन्तं मन्त्रिणमवलोक्य, स सूरभूपतिः, आसनात्समुदतिष्ठत्, स्वागताय तथा शिष्टाचारादितिभावः । तथा, गौरवात् आदरपूर्वकम् आसने समुपवेश्य, इति वक्ष्य-माणप्रकारमुवाच च ॥२५॥

મંત્રીને આવતા જોઈને જ સૂરરાજા જલ્દીથી આસનથી ઉભો થયો. તે આદરપૂર્વક આસન ઉપર બેસાડીને બોલ્યો. ॥૨૫॥

अथ तदुक्तिमेवाह—

भूपतिप्रतिकृतिस्त्वमेव, यन्मन्दिरं मम समागमः स्वयम् ।
पूर्वजाचरितपुण्यसञ्चय-स्तद् ध्रुवं जयति मे महत्तमः ॥२६॥

भूपतेः कनकरथस्य प्रतिकृतिः प्रतिनिधिः, अपरः भूपतिरिति यावत्, त्वं मम मन्दिरं स्वयमेव यद्यस्मात्समागमः आगतवानसि, त्वादृशस्य महतः मादृशस्य लघोर्मन्दिरे समागमः अपूर्व इत्येवकारेण ध्वन्यते, तत्तस्मात्, मे मम, महत्तमोऽतिमहान्, पूर्वजैः पित्रादिभिः, आचरितानामुपार्जितानां पुण्यानां संचयः राशिः, जयति अतिशेते, ध्रुवं न संशयोऽत्रेत्यर्थः । तवागमनं पूर्वजपुण्यप्रभावात्, स्वस्य तु न तथा पुण्यमिति स्वनम्रता सूचिता ॥२६॥

આપ રાજાના બીજા રૂપ જ છો. આમ પોતે મારા ઘરે આવ્યા. તેથી નક્કી મારા પૂર્વજોએ કરેલા પુણ્યના મોટા ઢગલા સારામાં સારા છે. ॥૨૬॥

अथ स्वं सर्वात्मना विनयात्प्रतिपादयति—

एतके वयमियं वधूस्तव, कन्यकेयमुभयोश्च जीवितम् ।
देहमेतदपि गेहमृद्धिमद्, ब्रूत येन करणीयमस्ति वः ॥२७॥

एतके एते वयम्, इयं वधूः मद्भार्या, उभयोः मम वध्वाश्च, जीवितं प्राणतुल्यमियं कन्यका आवयोरैक्यात्तव अपीयं कन्यका इत्यर्थः, एतद्देहम्, ऋद्धिमद् धनसम्पन्नं गेहमपि, सर्वमेव समुपस्थितं तवायत्तं चेत्यर्थः, एवं च वः युष्माकम्, येन प्रदर्शितेन प्रतिपादितेन वा वस्तुना, करणीयं प्रयोजनमस्ति, ब्रूत तदाख्याहि, सर्वमेव तवैव, यथेष्टमुपयुङ्ग्धि इत्यर्थः ॥२७॥

આ અમે ને મારી વહૂને અમારા બન્નેના પ્રાણ સમાન મારી કન્યા. આ દેહ આ ધન-ધાન્યથી ભરેલું ઘર બધું તમારૂં છે. આપને એવું પ્રયોજન હોય તે કહો. ॥૨૭॥

धीसखोऽभ्यधित काश्यपीपते ! वस्तुतो यदिदमुच्यते त्वया ।
तत्सुतां वितर भूपसूनवे, युज्यते गुणवतोर्हि सङ्गमः ॥२८॥

धीसखः मन्त्री अभ्यधितोवाच, किमित्याह—काश्यपीपते ! राजन् ! त्वया यद्यदि इदमुक्तप्रकारम्, वस्तुतः सत्यमुच्यते, तत्तर्हि, सुतां निजकन्यकां भूपस्य कनकरथस्य सूनवे पुत्राय वितर प्रदेहि, न चैतदयुक्तमित्याह—हि यतः, गुणवतोः सङ्गमः सङ्गः विवाहिरूपः, युज्यते युक्तो भवति, तव पुत्री भूपपुत्रश्च द्वावपि गुणवन्तौ इति तयोः सङ्गः औचित्यादेव मया प्रार्थ्यते इति भावः ॥२८॥

ત્યારે તે મંત્રી બોલ્યો કે હે રાજા જો તમે બરોબર આમ કહેતા હો તો રાજાના પુત્ર માટે આ કન્યા આપો. કેમકે બે ગુણ ગુણીનો મેલાપ હોય. ॥૨૮॥

तथैव तव पुत्र्याः महती शोभा सम्पत्स्यतेत्याह—

श्यामलेन जलदेन चञ्चला, भाति नो विकचचम्पकप्रभा ।
पुत्रिका तव नरेन्द्रसूनुना, योगमाप्य च यथा विभास्यति ॥२९॥

श्यामलेन श्यामेन जलदेन मेघेन, विकचस्य विकस्वरस्य चम्पकस्य तदाख्यपुष्पस्य प्रभा इव प्रभा कान्तिर्यस्याः सा तादृशी पीतकान्तिः चञ्चला विद्युत् "तडित्सौदामिनी विद्युच्चञ्चला चपला अपि, इत्यमरः । तथेति शेषः । नो नैव भाति शोभते, यथा च येन प्रकारेण हि, नरेन्द्रसूनुना योगं सम्बन्धं विवाहरूपमाप्य, तव पुत्रिका विभास्यति । कृष्णपीतयोः सम्बन्धे हि महती शोभा सम्पद्यते इति तद्विदः, अत एव मेघेन विद्युतः महती शोभा, किन्तु नरेन्द्रपुत्रेण योगे तव पुत्र्या ततोऽप्यतिशायिनी शोभा भविष्यतीति महान् लाभः, अत एव तादृशसम्बन्धस्यौचित्यमावश्यकत्वं चेति भावः ॥२९॥

વિકસિત ચંપાના ફૂલની જેવી કાન્તિવાળી વિજળી કાળા બાદળ સાથે જેવી શોભતી નથી. તે રાજાના પુત્ર સાથે સંબંધ પામીને તમારી પુત્રી તેવી શોભા પામશે. ॥૨૯॥

अन्वमन्यत स सूरभूपति-र्मन्त्रिवाक्यमवधानतः श्रुतम् ।
स्वं प्रदत्तमवबुध्य पुत्रिका, भूमिपालतनयाऽथ साभ्यधात् ॥३०॥

स सूरभूपतिः, अवधानतः सादरं साग्रहं च श्रुतं मन्त्रिवाक्यं कन्यका भूपसूनवे वितरेत्ये-वंरूपम्, अन्वमन्यत स्वीकृतवान्, अथानन्तरम्, स्वं प्रदत्तमवबुध्य ज्ञात्वा, भूमिपालतनया सूरभूप-पुत्री सा पुत्रिका कुत्सिता पुत्री, पितुराज्ञायाः खण्डने प्रवृत्तत्वात् स्वोचितलज्जायास्तिरस्करणात् स्व-हितानवलोकनादेश्च तस्याः कुत्सितत्वम्, अत एव च विशेषलाभात्तनयापदोक्तावपि पुत्रिकापदोक्तौ न पुनरुक्तपदतादोषावसर इत्यवधेयम् ॥३०॥

સાવધાનપણાએ સાંભળેલા તે મંત્રીના વાક્યને રાજાએ માન્ય કર્યું. પછી રાજાની તે કન્યાએ પોતાને અપાયેલી જાણીને બોલી. ॥૩૦॥

किमभ्यधादिति जिज्ञासानिवृत्तये आह—

क्षोणिवासवसुताय मां पिता, चेत्प्रदास्यति तदा तदग्रतः ।
स्वं कृशानुविषपाशलम्भनाल्लम्भयामि निधनत्वमात्मना ॥३१॥

पिता मां क्षोणिवासवसुताय कनकरथपुत्राय प्रदास्यति चेत्तदा, तस्य राज्ञो राजपुत्रस्य वा अग्रतः पुरः आत्मना स्वयमेव, एवं निजम्, कृशानावग्नौ, विषस्य पाशस्य च लम्भनात्प्रापणात् भक्ष-णात् बन्धनाच्च, निधनत्वं मृत्युं लम्भयामि प्रापयिष्यामि, विषभक्षणादिना मरिष्यामित्यर्थः ॥३१॥

જો પિતા મને રાજાના પુત્રને દાન કરશે તો હું તેની આગળ, જાતેજ વિષ ખાઈને કે ગળે ફાંસો લગાવીને મરી જઈશ. ॥૩૧॥

धीसखोऽपि तदुपेत्य भूपतिं, सर्वमेव रहसि व्यजिज्ञपत् ।
राजपुत्रविरहानलेन्धनं, कामसायकनिघर्षसाधनम् ॥३२॥

धीसखः मन्त्री अपि भूपतिमुपेत्य भूपतिसमीपमागम्य रहसि एकान्ते राजपुत्रस्य स्त्रीविरह-रूपस्य अनलस्य दाहजनकत्वादग्निरूपस्य इन्धनं वर्धकत्वादिन्धनरूपम्, सा न प्राप्या इति वार्ता हि नितरां तत्कामज्वरोद्दीपिकेति भावः, अत एव, कामसायकस्य निघर्षस्य शाणस्य साधनमुपकरणम्, तादृशवार्ताश्रवणेन नितरां कामपीडाया वृद्धिरिति तत्साधनमिति भावः । तत्तत्रत्यं सर्वमेव व्यजिज्ञ-पत्कथयामास ॥३२॥

ત્યારે તે મન્ત્રી પણ આવીને એકાંતમાં રાજાને બધું કહ્યું. રાજપુત્રના વિરહરૂપી અગ્નિના લાકડા જેવું ને કામદેવના બાણ ને તેજ કરવામાં સાધન જેવું બધું કષ્ટ જણાવ્યું. ॥૩૨॥

अर्पितं सुभगतानिबन्धनं, रत्नमाशु धनदेन तत्ततः ।
वासराणि कतिचिन्निराकुलो, ध्यायति स्म नृपतेः कुमारकः ॥३३॥

तत्तदनन्तरम् उपायान्तराभावात्, धनदेन सुभगतायाः सौभाग्यस्य, येन गुणेन स्त्रियो वश्या भवन्ति तस्य निबन्धनं कारकम्, रत्नमाशु शीघ्रम् अर्पितं राजपुत्राय प्रदत्तम् । ततः नृपतेः कुमारकः निराकुलोऽव्यग्रः शान्तचित्त इति यावत्, कतिचिद्वासराणि दिनानि यावत् ध्यायति स्म ॥३३॥

ત્યાર પછી ધનદે સૌભાગ્ય આપનારો રત્ન જલ્દીથી આપી દીધો ત્યારે રાજાનો પુત્ર કેટલા દિવસ શાંતિથી રહેવા લાગ્યો. ॥૩૩॥

तन्मणेर्निरुपमप्रभावतो, दुर्भगत्वगरलं हृदि स्थितम् ।
दुष्टकर्मभुजगोपपादितं, तस्य नश्यति तरां स्म सत्वरम् ॥३४॥

तस्य मणेः सुभगताकृन्मणेः, निरुपमादसाधारणात्प्रभावतः सामर्थ्यतः, तस्य राजपुत्रस्य, हृदि स्थितम्, दुष्टकर्म एव भुजगः अपकारजनकत्वात्, तदुपपादितम् विहितम्, दुर्भगत्वमेव पीडाप्रदत्वाद् गरलं विषं सत्वरं नश्यति तरां स्म ॥३४॥

અને તે મણિના અનુપમ પ્રભાવથી દુષ્કર્મરૂપી સર્પે નિપજાવેલા તેના મનમાં રહેલા દૌર્ભાગ્યરૂપી વિષ પણ જલ્દી નષ્ટ થઈ ગયો હતો. ॥૩૪॥

यस्य नाम सहते स्म नापि या, वैरिनामवदुपेतमत्सरा ।
तस्य सा तदपि सूरकन्यका, मन्त्रवज्जपति मन्मथातुरा ॥३५॥

उपेतः प्राप्तः मत्सरः विद्वेषः अप्रीतिः यया सा, या वैरिणः नामवत्, यथा वैरिणः नामापि श्रोतुं जना नेच्छन्ति, तथा, यस्य राजपुत्रस्य नामापि न सहते स्म नाम श्रुत्वा क्रुध्यति स्मेत्यर्थः । सा सूरकन्यका, मन्मथेन कामेन आतुरा पीडिता सती तस्य राजपुत्रस्य, तन्नामापि मन्त्रवज्जपति ॥३५॥

તે સૂર રાજાની કન્યા પણ ઈર્ષ્યાને ધારણ કરીને શત્રુના નામની જેમ જેનો નામ પણ સહન કરતી ન હતી. તે નામને જ મંત્રની જેમ કામથી આતુર થઈને જપતી હતી. ॥૩૫॥

अथ तस्याः कामदशामेव वर्णयति—

मत्प्रियप्रियसुहृद्विरोधिनं, राजनन्दनमसौ समाश्रयत् ।
इत्यमूं समभिसृत्य जालकै-स्तापमापयति कौमुदी भृशम् ॥३६॥

असौ सूरभूपपुत्री मम कौमुद्याः प्रियः चन्द्रः प्रियः इष्टः सुहृन्मित्रं यस्य स तस्य कामस्य विरोधिनं रूपलावण्यादिना जेतारं राजनन्दनं राजपुत्रं समाश्रयन्मनसा आश्रितवती इति हेतोरिव कौमुदी चन्द्रिका, जालकैः गवाक्षैः, अमूं समभिसृत्य प्राप्य भृशमत्यन्तं तापमापयति ददाति । स्वपतिमित्रविरोधिनं हि स्त्रीस्वभावत एव प्रद्वेष्टीतिभावः, अत्र हेतूत्प्रेक्षालङ्कारः ॥३६॥

મારા પતિ ચંદ્રના પ્રિય મિત્ર એવા સૂર્યના વિરોધી એવા રાજા. ચંદ્રના પુત્ર બુધ તુલ્ય એવા રાજકુમારને આ વરી છે માટે ખિડકીથી તે રાજપુત્રીની પાસે આવી. ચંદ્રનું કિરણ તેને ઘણોજ તાપ આપતો હતો ( જ્યોતિ શાસ્ત્રમાં સૂર્યને બુધને શત્રુભાવ કહ્યો છે. રાજનન્દન શબ્દમાં શ્લેષથી બુધ અર્થ થાય છે. ) ॥૩૬॥

एतदीयवदनेन मामकं मण्डलं, विजितमित्यसौ विधुः ।
तापभेदनधिया तया श्रित-स्तापमेव तनुते तदङ्गके ॥३७॥

तापस्य भेदनस्य शान्तेः धिया शीतकरः चन्द्रः तापं शमयिष्यतीति बुद्ध्या, तया राजपुत्र्या आश्रितः चन्द्रप्रकाशे स्थित्या अवलम्बितः, असौ शान्तिप्रदत्वेन प्रसिद्धः अपि विधुश्चन्द्रः, एतदीयवदनेन मुखेन, मामकं मण्डलं बिम्बं जितं तिरस्कृतं, ततोऽप्यधिकवर्तुलत्वाह्लादकत्वाच्चेति भावः, इति हेतोरिव, तस्याः राजपुत्र्याः अङ्गके, तापमेव वितनुते वर्धयति, चन्द्रचन्द्रिकादयः कामोद्दीपका इति भावः ॥३७॥

આ રાજકન્યાના મુખવડે મારો બિંબ જિતાયો છે. માટે તે ચંદ્ર તાપ નાશ કરવા સારૂ તે રાજપુત્રી વડે આશ્રય કરાયો છતો તેના અંગમાં તાપ જ આપતો હતો. ॥૩૭॥

मानिताऽपि बहुशः सखीजनैः, किञ्चनापि बुभुजे न सा सकृत् ।
भोजिताऽपि न रसं विवेद सा, भूतदोषकलितेव केवलम् ॥३८॥

सा राजपुत्री सखीजनैः बहुशः, मानिता शपथादिना कृत्वा प्रार्थिताऽपि, किञ्चनापि न बुभुजे सकृत् कथञ्चिदेकवारम्, भोजिताऽपि, केवलं भृशं भूतदोषेण प्रेतावेशेन कलिता आक्रान्ता इव सा, रसं स्वादं न विवेद ज्ञातवती । एवं चाहारत्यागोऽरुचिश्चोक्ता ॥३८॥

સખી જનોએ ઘણાં ઘણાં મનાવ્યા છતાં તે એક વખત પણ કાંઈ પણ ખાતી ન હતી. બળથી ખવાયાં છતાં ભૂત વળગાડવાળીની જેમ સ્વાદ જાણતી ન હતી. ॥૩૮॥

भाषिताऽपि वचनं न सा ददौ, मूकतामुपगतेव साग्रहा ।
जल्पति स्म यदि वा कथञ्चन, श्लिष्टमाहतमबद्धमुद्धतम् ॥३९॥

सा साग्रहा आग्रहेणसहिता भाषिता अपि, मूकताम् उपगता मूका इव, वचनं न ददौ न प्रतिवक्ति स्म, तथा यदि वा, कथंचनात्यनुनयादिना जल्पति स्म, तदा श्लिष्टमविस्पष्टम्, आहतमपार्थकम्, अबद्धमनर्थकम्, उद्धतं तारस्वरमुत्कटं वा, जल्पति स्मेत्यर्थः । एतेन वचनविरतिरुन्मादश्चोक्तः ॥३९॥

તે બોલાયેલી છતાં પણ હઠથી મુંગી થઈ ગયેલીની જેમ કંઈ પણ બોલતી ન હતી. જો કોઈ પણ રીતે કંઈ બોલતી હતી તો તે અસ્પષ્ટ ખોટું સંબંધ વગરનું ને અવિનય સૂચવનારું હતું. ॥૩૯॥

ईदृशीं समवलोक्य तां सखी, बुद्धिकौशलभृताऽनुयुज्य च ।
तत्स्वरूपमवगम्य तत्पितुः, सर्वमेव कथयाम्बभूव तत् ॥४०॥

तामीदृशीं कामावस्थापन्नां समवलोक्य बुद्ध्या कौशलेन चातुर्येण च भृता सम्पन्ना परहृदाशयप्रकाशनकलाज्ञा, सखी, अनुयुज्य पृष्ट्वा तस्याः राजपुत्र्याः स्वरूपमाशयमवगम्य ज्ञात्वा, तत्पितुः सूरभूपस्य, तत्सर्वं वृत्तान्तं कथयाम्बभूव कथयामास ॥४०॥

બુદ્ધિમતી એવી તેની સખીએ તેની આવી દશા જોઈને તેની વાત જાણીને પુછીને તે બધું તેના પિતાને કીધું ॥૪૦॥

सूरभूपरिवृढो निशम्य, तद्दूतिकाभिहितमात्तसंमदः ।
विज्ञपय्य नृपतिं महोत्सवात्, कन्यकां नृपभुवा व्यवाहयत् ॥४१॥

सूरः तदाख्यभूपरिवृढः महीपतिः दूतिकया दूत्या, अभिहितं कथितं तत्कन्यकोक्तं निशम्य आत्तः प्राप्तः संमदः हर्षः येन स तादृशः हृष्टः सन् स्वेष्टस्यैव पुत्र्या प्रस्तावादितिभावः । नृपतिं कनकरथं विज्ञप्य निवेदयित्वा, महोत्सवात्महोत्सवपूर्वकम् कन्यकां नृपभुवा राजपुत्रेण व्यवाहयत् परिणायितवान् ॥४१॥

દૂતીએ કહેલી તે વાત સાભળીને ખુશ થયેલા સૂર રાજાએ રાજાને જણાવી મહોત્સવપૂર્વક રાજપુત્ર સાથે પોતાની પુત્રીને પરણાવ્યો. ॥૪૧॥

अन्यदा नरपतिः शिरोव्यथा–कुक्षिशूलविषमामयार्दितः ।
वैद्यमान्त्रिकगणैरुपेक्षितो, जीवितव्यविमुखो विनिश्वसन् ॥४२॥

रत्नसारतनयार्पितोल्लस–द्रोगभेदिमणिवार्भिरुक्षितः ।
तत्क्षणादपि विशीर्णवेदनो, व्याहरद्धनदमन्तिकस्थितम् ॥४३॥

( युग्मम् )

अन्यदा एकदा, नरपतिः नृपः कनकरथः, शिरोव्यथा मस्तकपीडा, कुक्षिशूलमुदरपीडा, ताभ्यां विषमाभ्यामुग्राभ्यामामयाभ्यां रोगाभ्यामर्दितः पीडितः सन्, वैद्यानां मान्त्रिकाणां च गणैः वृन्दैः, अनेकोपचारेणापि रोगस्यानिवृत्तेः उपेक्षितः असाध्योऽयं रोग इत्येवं कृत्वा त्यक्तः, अत एव जीवितव्येन जीवनेन विमुखः निराशः, विनिःश्वसन् दीर्घमुष्णं च श्वासं दधत्, मरणचिन्तयेति भावः, रत्नसारतनयेन धनदेन अर्पितस्य प्रदत्तस्य उल्लसतः शोभमानस्य रोगभेदिनः रोगनाशकशक्तिमतः मणेः वार्भिः जलैः उक्षितः सिक्तः, तत्क्षणात् सद्य एव, विशीर्णा विनष्टा वेदना पीडा यस्य स तादृशः नीरोगः सन्, अन्तिकस्थितं धनदं व्याहरत् उक्तवान् ॥४२-४३॥

એક દિવસે તે રાજા માથાના દુઃખાવા ને પેટમાં શૂળ જેવા કઠન રોગથી પીડાયો છતો વૈદ્યો ને મંત્ર જાણનારાઓએ તેની ઉપેક્ષા કરી દીધી તેથી જીવનથી નિરાશ થયેલો તે જોર-જોરથી શ્વાસ લેતો હતો. (પણ) રત્નસારના પુત્ર ધનદે આપેલા ઉત્તમ એવા રોગનાશક પાણિના જળથી સિંચાયો છતો તરત જ તે વેદના રહિત થઈ ગયો ને પાસે રહેલા ધનદત્તે કીધું કે. ॥૪૨॥૪૩॥

किं व्याहरदित्याह—

भास्करः प्रकुरुतेऽप्युपक्रियां, तापमादधदधिप्रकाशनः ।
चन्द्रमास्तु कलयन् कलङ्किता-मादधाति जनतापहिंस्रताम् ॥४४॥
चन्दनं हरति तापमान्तरं, घृष्टमेव दृशदा धृतं तनौ ।
रत्नसारगुरुवंशकेतनं, स्वव्यतिक्रमगुणो भवानभूत् ॥४५॥
( युग्मम् )

अध्यधिकं प्रकाशनः प्रकाशकः भास्करः सूर्यः, अपि तापम् औष्ण्यमादधत्, स्वयं तपन्, उपक्रियां जीवोपकारं कुरुते स्वयं दुःखं सोढ्वापि परस्योपकारं करोतीत्यर्थः, तथा तु पुनः चन्द्रमाः स्वयं कलङ्कितां लाञ्छनं कलयन् वहन्, जनस्य तापस्य हिंस्रतां नाशकत्वमादधाति, परतापं नाशयति किन्तु स्वयं तु कलङ्की, तथा सूर्यः परप्रकाशकः किन्तु स्वयं तपति, तथा चन्दनम् दृषदा पाषाणेन घृष्टं सत्, तनौ शरीरे धृतं लेपितम् आन्तरं हृत्स्थं तापं हरति, परतापं हरति किन्तु स्वयं घृष्यते इत्येवं सर्वेषामेव भास्करादीनां परोपकारिणां स्वस्य स्वस्य कोऽपि व्यतिक्रमो दृश्यत एव, किन्तु रत्नसारस्य गुरोर्महतः वंशस्य कुलस्य केतनमुत्कर्षत्वात्पताकेव, भवान् स्वस्य[1] अव्यतिक्रमः क्षत्यभावः येन, तादृशः अभूत् । भवतो हि परमुपकुर्वतो न स्वस्य कापि हानिरिति भास्करादिभ्यः उपकारेभ्यो भवान् विशिष्यत इति न त्वत्समः कोऽपि उपकारी जगतीत्यर्थः । भास्करादिभ्यः उपमानेभ्यः उपमेयस्य धनदस्याधिक्यवर्णनाद्व्यतिरेकालङ्कारः ॥४४-४५॥

બહુ પ્રકાશવાળો સૂર્ય તાપને કરતો તપાવતો તપાવતો ઉપકાર કરે છે. ને ચંદ્ર તો પોતે કલંક ધારણ કરતો છતો લોકોના તાપનો નાશ કરે છે. ને ચંદન પત્થર ઉપર ઘસાયેલો ને શરીરમાં લેપાયેલો અંદરના તાપને પણ નાશ કરે છે. પણ રત્નસારના મહાન કુલના પતાકા સમાન તમે પોતે જ ઓલંગી શકે એવા ગુણવાળા અસામાન્ય ગુણવાળા થયા. ॥૪૪॥૪૫॥

---

१. सु सुष्ठु अव्यतिक्रमः क्षत्यभावो गुणो यस्य स तादृशोऽभूत् ।

मादृशामसमभाग्यवैभवाज्जात एष भवतो भवोदयः ।
चक्रवाकसुकृतानुभावतो, भानुमानुदयते हि सन्ततम् ॥४६॥

मादृशां जनानाम्, असमस्यानुपमस्य, भाग्यस्य वैभवात् समृद्धेः, अन्यस्य हि भाग्यसमृद्धि-र्नैतादृशी, यतः न भवादृशः अन्यत्र इति अनुत्तमा मद्भाग्यसम्पदित्यर्थः । भवतस्तव एष वर्त्तमानः भवे संसारे उदयः जन्म जातः, यदि हि भवतो जन्म न स्यात् तर्हि को नामास्मानीदृशेभ्यः संकटेभ्यः पायादिति मादृशां भाग्यादेव भवतो जन्मेत्यर्थः । "सहायास्तादृशास्तस्य, यादृशी भवितव्यता ।" इत्युक्तेरिति भावः । ननु नह्यन्यस्य भाग्यतः अन्यस्य जन्म क्वापि श्रुतं दृष्टं वेति चेत्तत्राह—हि यथा, चक्रवाकस्य सुकृतस्य पुण्यस्य अनुभावतः प्रभावतः, भानुमान् सूर्यः सन्ततमहरहः उदयते, नहि सूर्योदयं विना [१]चक्रवाकविरहविरह इति तद्भाग्यादेव सूर्योदयः, इति असम्बन्धेऽपि सम्बन्धाध्यव-सायादतिशयोक्तिः, तत्प्राणितश्च दृष्टान्तः ॥४६॥

મારા જેવાના અનુપમ એવા ભાગ્યના પ્રભાવથી જ તમારો આ જન્મ થયો છે. જેમકે ચક્રવાક પક્ષીના પુણ્યના પ્રભાવથી જ હંમેશા સૂર્ય ઉદય પામે છે. ॥૪૬॥

शंसतीत्थमवनीश्वरे स्वयं, रत्नसूर्विनतिवामनोऽब्रवीत् ।
एष देव ! महिमा महाँस्तव, वक्ति यद्विभुरुपक्रियां मम ॥४७॥

अवनीश्वरे राजनि, इत्थमुक्तप्रकारेण, स्वयमात्मना एव शंसति वर्णयति सति, विनत्या विनयेन प्रणामेण वा वामनः वामन इव संकुचितः सन् प्रणामे स्वस्य नमनाद्वामनत्वम्, विनयी च स्वप्रशंसां श्रुत्वा संकोचमाप्नोतीति वामनत्वमिति भावः । रत्नसूः धनदः अब्रवीत्, किमित्याह—देव ! राजन् ! एष मम प्रकाशनं तव, महान् महिमा महत्वम् औदार्यम्, यद्विभुः प्रभुरपि मम उपक्रिया-मुपकारं वक्ति वर्णयति, उदारा हि [२]अन्यस्योपकारं स्वस्य गौरवेऽपि वर्णयन्ति नीचस्यापि, इति मां वर्णयन् त्वं स्वमहत्वमेव प्रकटीकरोषि इति भावः ॥४७॥

રાજાના પોતાની મેલેજ આમ પ્રશંસા કરતા છતાં વિનયથી અત્યંત નમ્ર થઈ ગયેલો રત્નસાર બોલ્યો કે હે રાજા ! આપ શ્રીમાન જે મારો ઉપકાર વર્ણવો છો તે આ આપનોજ મોટો મહિમા છે. ॥૪૭॥

उत्तमाश्रयवशात्प्रशस्यतां, यात्यवश्यमपि वर्णदूषकः ।
पीतरक्तसितवर्णयोगत-श्चित्रके स्फुरति कृष्णवर्णकः ॥४८॥

उत्तमो य आश्रयः आधारस्तद्वशात्प्रभावात्, वर्णदूषकः निन्दितवर्णः अपि, अवश्यं प्रशस्यतां याति, ननु क्व इत्थं दृष्टमिति चेत्तत्राह—चित्रके चित्रवर्णवति वस्तुनि, पीतस्य रक्तस्य सितस्य श्वेतस्य च वर्णस्य योगतः सम्पर्कात्, कृष्णवर्णकः कालो वर्णः सर्वाधिक्येन शोभते इति आश्रयवशादेव कालवर्णस्य तत्र शोभा, न तु स्वतः, स्वतस्तस्य अप्रशस्यत्वात्, तथा तवाश्रयादेव मम प्रशस्यता न तु स्वत इति मम प्रशंसापेक्षयात्वमेव प्रशंसार्ह इति भावः । दृष्टान्तः ॥४८॥

રૂપને બગાડી નાખે એવી વસ્તુ પણ ઉત્તમ આધારને લીધે અવશ્ય કરીને પ્રશંસા પામે છે. પીળા, લાલ ને ધોળા વર્ણના યોગથી થયેલા ચિત્ર વર્ણવાળા વસ્ત્રમાં કે ચિત્રમાં કાળો વર્ણ વધારે ખિલે છે. ॥૪૮॥

१ चक्रवाकस्य स्त्रिया सह यो विरहस्तस्य विरहः । २ अन्यस्य नीचस्याप्युपकारं स्वस्य गौरवेऽपि वर्णयन्ति ।

अत्रार्थ एव युक्त्यन्तरमाह—

संभवेदतितमां महीयसा—माश्रयेण महिमाऽमहीयसाम् ।
आरकूटशकलं धनेशितुः, पाणिना विधृतमर्जुनायते ॥४९॥

अमहीयसां नीचानामपि महीयसामतिमहतामाश्रयेण साम्निध्येन, अतितमामतिमहान् महिमा गौरवं संभवेद्भवति, यथा धनेशितुः इभ्यस्य कुबेरस्य पाणिना करेण धृतम्, आरकूटस्य पित्तलस्य शकलं खण्डम्, अर्जुनं स्वर्णं तदिवाचरतीति अर्जुनायते, महतः धनाढ्यस्य हस्ते स्थितं पित्तलमपि लोकैः स्वर्णमिति मन्यते, पित्तलस्यापकृष्टद्रव्यत्वात्, महतश्चापकृष्टद्रव्यग्रहणस्यान्येनासम्भवात्, अपकृष्टद्रव्यस्य दरिद्रेणैव धारणात् तथा त्वादृशस्य महतः सान्निध्यान्मम लघोरपि महिमेति त्वमेवात्र मूलमिति भावः ॥४९॥

નાનાઓની પણ મહિમા મોટાઓના આશ્રયથી અત્યંત વધી જાય છે. મોટા શેઠના હાથમાં રહેલો પિત્તલનો ટુકડો સોના જેવો લાગે છે. ॥૪૯॥

ननु रत्नलाभस्तव देव्याः न तु मत्तः, तेन च तव महत्त्वम्, न तु ममाश्रयणादिति चेत्तत्राह—

रत्नलब्धिविषये महीपते! त्वत्प्रसत्तिरपि मूलकारणम् ।
राजनि प्रणयिनां प्रसेदुषि, प्रीतिमान् भवति देवताजनः ॥५०॥

महीपते! रत्नानां लब्धिः प्राप्तिः तद्विषये त्वत्प्रसत्तिः त्वत्प्रसन्नताऽप्येव मूलकारणं निदानम्, ननु रत्नलाभो देवीप्रसादात्तत्र मम प्रसत्त्या किं कृतमिति चेत्तत्राह—राजनि, प्रसेदुषि प्रसन्ने सति, प्रणयिनां भक्तानामुपरि देवताजनः, प्रीतिमान् प्रसन्नो भवति, अप्रसन्ने तु राजनि न तथा इति देवीप्रसादः त्वत्प्रसादभावेनेति तत्रापि तवैव महत्त्वम् ॥५०॥

હે રાજા! રત્નોની પ્રાપ્તીને વિષે પણ તમારી પ્રસન્નતા જ મૂળ કારણ છે. રાજા પ્રસન્ન છતે ભક્તો ઉપર દેવતાઓ પ્રસન્ન થાય છે. ॥૫૦॥

एवमेष मणिभिश्च पञ्चभिः, स्वापरोपकृतिकर्म निर्ममे ।
इन्द्रियैरिव महामनाः पुमा—नात्मशुद्धिपरभागकाङ्क्षया ॥५१॥

एवमुक्तप्रकारेण एष धनदः, पञ्चभिश्च मणिभिः, स्वस्यापरस्यान्यस्य च उपकृति कर्म उपकारं निर्ममे चकार। महामनाः मनस्वी पुमान् पुरुषः, आत्मनः स्वस्य शुद्धिः नैर्मल्यं तस्य परस्यान्यस्य भागोऽभ्युदयः तस्य च काङ्क्षया इच्छया इन्द्रियैः कृत्वा, परोपकारकरणमिव, मनस्विनः आत्मशुद्ध्यै पराभ्युदयाय च इन्द्रियाणि विषयेषु व्यापृणन्ति, न तु अन्यापकाराय, विषयवासनातो वा तथैवायमपीति भावः ॥५१॥

આમ તમારો આ ધનદ પાંચ મણિઓથી પોતાનો ને બીજાનો પણ ઉપકાર કર્યો છે. જેમ મહાત્મા જીવ આત્માની શુદ્ધિને બીજાના ઉપકારની ઇચ્છાથી પાંચ ઈન્દ્રિયોથી ( જ પરનો ઉપકાર ) કરે છે. ॥૫૧॥

तत्पुरोपवन एव चान्यदा, चित्चतुष्टयधरो मुनीश्वरः ।
शीलधार्य्यभिध आययौ गुरुः, शिष्यवृन्दविनिषेवितक्रमः ॥५२॥

अन्यदा च तस्य पुरस्य उपवने एव, शिष्यवृन्देन विनिषेवितः क्रमः चरणः यस्य स तादृशः शिष्यवृन्दसमन्वितः, चितां ज्ञानानां चतुष्टयं तस्य धरः मति-श्रुता-वधि-मनःपर्यवज्ञानचतुष्कयुतः अत एव, मुनीश्वरः यतिनायकः 'शीलधारी' इति अभिधा नाम यस्य स तादृशः गुरुः आययौ ॥५२॥

બીજા દિવસે તે નગરના ઉદ્યાનમાં જ શિષ્યવૃન્દથી સેવિત છે ચરણ જેના એવા મહાન મુનિ ચતુર્જ્ઞાની શીળધારી નામે આચાર્ય આવ્યા. ॥૫૨॥

अथ मुनिमेव विशिनष्टि—

प्रेयसी मम हृदः परं क्षमा, तां न वीक्षितुमयं क्षमः क्षणम् ।
इत्यवेक्षितजिनेश्वरागमः, कोपमेव निजघान यः स्वयम् ॥५३॥

यः मुनीश्वरः, अवेक्षितजिनेश्वरागमः गीतार्थः अत एव, मम मुनेः, हृदः मनसः, परमत्यन्त प्रयसी प्रियतरा क्षमा क्षान्तिः अपकारेऽपि प्रतिकारानिच्छा, तां क्षमाम्, अयं कोपः, क्षणमपि, वीक्षितुमवलोकितुं न क्षमः समर्थः, क्रोधसत्त्वे हि क्षमायाः क्षणमात्रमपि न संभव इति भावः, इति हेतोः स्वयम्, कोपमेव निजघान व्यनाशयत्, अन्योऽपि स्वप्रेयस्याः अमर्षणं हन्तीति भावः । जितक्रोधः क्षमावान्, गीतार्थश्च स मुनीश्वर इत्यर्थः ॥५३॥

જે જિનેશ્વરનું વચન જાણકાર જે આચાર્યની ક્ષમા મારા મનથી અત્યન્ત પ્રિય છે. પણ તેને આ ક્રોધ ક્ષણવાર પણ જોઈ શકતો નથી. એમ ધારીને જાણે ક્રોપનો નાશ કર્યો હતો. ॥૫૩॥

मत्प्रियङ्करणपालितात्मना, संविदा सह सदा विरोध्ययम् ।
इत्यशेषभुवनानुगामिनं, मानमुद्धतमधश्चकार यः ॥५४॥

मम स्वस्य प्रियङ्करणाय मुक्त्यादीष्टप्राप्तये पालितः संरक्षितः अनेकव्रतानुष्ठानादिक्लेशं सोढ्वाऽपि उपार्जित आत्मा स्वरूपं यस्याः सा तादृशी, किञ्च मम प्रियङ्करणम् मया पालितश्चात्मा यस्याः सा, यद्वा मम प्रियङ्करणस्याभीष्टस्य पालितं पालनमेव आत्मा यस्याः सा तादृशी[१] तया मुक्त्यादिसाधिकया संविदा ज्ञानेन सह, अयं मानो विरोधी आवरकः, अहन्तानिवृत्तावेव शुद्धज्ञानस्योदयादिति भावः, इति हेतोः, यो मुनीश्वरः, अशेषं भुवनं लोकमनुगच्छति व्याप्नोति इति तम्, सकललोकान्तः स्थितम्, अथ च, उद्धतम् उग्रकर्माणम्[२], अहंकारस्य बन्धहेतुत्वादिति भावः, मानमभिमानमधश्चकार तिरश्चकार, ज्ञानावारकत्वाद्बन्धहेतुत्वाच्च मानं तत्याजेत्यर्थः, निरभिमानी स मुनिरिति भावः । यो हि ज्ञानी स मानं न पाल्येवेति ॥५४॥

---

१ आचारकपस्य मम प्रियं निखिलकर्मविलयनं सुखं दुःखध्वंसश्च तत्करणाय तत्कर्त्तु पालितः अमोघकारणत्वात् सुखदः आत्मा स्वरूपं यस्याः सा तादृशी ।

२ उग्रकर्मबन्धकम् ।

જે આચાર્ય મારા પ્રિય કરવાને જેનું પાલન કરાયું છે એવા સમ્યગ્ જ્ઞાનનો હંમેશાં આ વિરોધિ છે એમ વિચારીને જાણે ઉદ્ધતને આખા સંસારમાં ફેલાયેલા એવા માનનો તિરસ્કાર કર્યો હતો. ॥૫૪॥

**आर्जवं मम हृदः प्रियङ्करं, धावतीयमपि तज्जिघांसया ।**
**इत्यतः प्रथममेव मायिकां, यो बिभेद सुकृतोपदेशकः ॥५५॥**

मम हृदः मनसः प्रियङ्करमिष्टम् आर्जवम् ऋजुत्वं सरलतामिति यावत्, तस्यार्जवस्य जिघांसया नाशनेच्छया. इयं मायाऽपि धावति अभिद्रवति, मायिनो हृदयं हि न सरलं भवतीति भावः । इत्यतः हेतोः, यः सुकृतोपदेशकः धर्मप्रवर्त्तकः प्रथममेवेतरस्मात् प्रागेव मायिकां मायां बिभेद नाशितवान्, क्रोधादयो हि मायानुसारिणः, मायायाः विनाशे च निराधारतया ते सुकरनिवारणा भवन्तीति प्रथमं मायां निराकृतवानित्यर्थः । निश्छलहृदयः स मुनिरिति भावः ॥५५॥

ધર્મના ઉપદેશ આપનાર જે આચાર્ય આ માયા મારા હૃદયનો પ્રિય એવા આર્જવ પ્રત્યે નાશ કરવાની ઇચ્છાથી દોડે છે એમ વિચારીને તેને પહેલીથી તોડી નાખી હતી. ॥૫૫॥

**पापमुग्रमसुहृन् ममाधुना, तद् विवर्धयितुमेष काङ्क्षति ।**
**इत्यतो निखिलदोषपोषकं, लोभमेव शमयाम्बभूव यः ॥५६॥**

(पञ्चभिः कुलकम्)

पापं मम उग्रम्, इतरापेक्षया बलवदसुहृदप्रियम्, अधुना एष लोभः तत्पापं विवर्धयितुं काङ्क्षति इच्छति, "लोभः पापस्य कारणम्" इत्युक्तेरिति भावः । इत्यतो हेतोः, यो मुनिः, निखिलानां दोषाणां क्रोधादीनां पोषकम् "लोभात्क्रोधः प्रभवति लोभात्कामः प्रजायते । लोभान्मोहश्च नाशश्च" इत्युक्तेरिति भावः, लोभं शमयाम्बभूव तत्याज । निर्लोभी स मुनिरिति भावः ॥५६॥

જે આચાર્ય સર્વ દોષનું પોષણ કરનાર એવા લોભને પાપ મારો ઉગ્ર શત્રુ છે પણ આ લોભ તેને વધારવા ઇચ્છે છે એમ વિચારીને તેનું શમન કર્યું હતું. ॥૫૬॥

**पौरलोकमवलोक्य कानने, यान्तमुत्सुकतया सकारणम् ।**
**पार्श्वगं कमपि पृष्टवानयं, सूरिमागतमजिज्ञपच्च सः ॥५७॥**

पौरलोकं नगरजनं कानने उद्याने उत्सुकतया सोत्कण्ठं यान्तं गच्छन्तमवलोक्य, धनदः, पार्श्वगं समीपस्थम् 'उत्सुकतया' इत्यस्यात्रापि अन्वयात् कुतूहलेन, सकारणं कारणेन काननगमनहेतुना सहितं पृष्टवान्, स च पृष्टः सूरिमागतं व्यजिज्ञपत्, सूरिरागत इत्यतः लोका यान्तीति निवेदितवानित्यर्थः ॥५७॥

ઉપવન તરફ જતા લોકોને જોઈને ધનદે બાજુમાં રહેલાને પૂછ્યું—ને તેણે કહ્યું કે—આચાર્યશ્રી પધાર્યા છે. ॥૫૭॥

रत्नसारवणिगीशनन्दनः, स्यन्दनं समधिरुह्य सोऽथ तम् ।
वन्दितुं विदितयोगसंगतं, गच्छति स्म मुनिनायकं मुदा ॥५८॥

अथानन्तरं स रत्नसारो यो वणिगीशः महेभ्यस्तस्य नन्दनः पुत्रः धनदः, स्यन्दनं रथं "स्यन्दनो रथ" इत्यमरः । समधिरुह्य, विदितेन ज्ञातेन प्रसिद्धेन योगेन संगतं समन्वितं योगिनं तं मुनिनायकं सूरिं वन्दितुं मुदा सहर्षं गच्छति स्म ॥५८॥

રત્નસાર શેઠનો પુત્ર ધનદ પણ રથ પર બેસીને તે યોગીશ્વર આચાર્ય શ્રીને વન્દન કરવાને આવ્યો. ॥૫૮॥

तं विनम्य पुरतः श्रितासने, भक्तिभाजि धनदे मुनीश्वरः ।
शर्करारसमयीमिवानघ-श्रोतृकां व्यधित धर्मदेशनाम् ॥५९॥

तं मुनीश्वरं विनम्य नत्वा, पुरतः मुनेरग्रतः, श्रितमधिष्ठितमासनं येन तादृशि, भक्तिभाजि भक्ते धनदे सति, मुनीश्वरः, शर्करारसमयीं शर्करारसप्रचुरामिव मधुरां हृद्याम्, अत एव, अनघाः निष्पापाः श्रोतारः यतो यस्या वा अनघाः पापरहिताः श्रोतारो भवन्ति यया वा तामघहारिणीम् धर्मदेशनां व्यधित ददौ ॥५९॥

આચાર્યને નમીને આગળમાં ભક્ત ધનદ આસન ઉપર બેઠો ત્યાં મુનીશ્વરે સાકર જેવી મીઠી ને શ્રોતાને પવિત્ર કરનારી એવી ધર્મદેશના આપી. ॥૫૯॥

अथ तद्देशनामेवाह—

आदधीत सुकृतं सभावनं, सर्वमेव खलु नान्तरान्तरा ।
भावनाविकलमेव यत्न तत्, स्यात् समग्रफलदायकं नृणाम् ॥६०॥

सर्वमेव सुकृतं पुण्यकर्म, सभावनं भावनासहकारेणैव, आदधीत कुर्यात्, अन्तरा अन्तरा मध्ये मध्ये न खलु, एकत्र भावना अपरत्र नेत्येवंरीत्या नैवेत्यर्थः। निरन्तरभावनासहकार आवश्यक इत्यर्थः । विपक्षे बाधकमाह—यद्यस्मात् भावनया विकलं रहितं तत्सुकृतं नृणां समग्रफलदायकं नैव स्यात्, तद्धि सुकृतमतः फलं तु दास्यति, किन्त्वविकलं न, निरन्तरभावनासहकारविरहात् तस्मान्निरन्तरभावनासहकारः समग्रफलप्राप्तावावश्यक इति भावः ॥६०॥

બધા ધર્મ અનુષ્ઠાનો ભાવનાપૂર્વક કરવાં, વચ્ચે વચ્ચે ભાવના રહિત થવું નહિ, કેમકે તેમ થવાથી તે ધર્મ મનુષ્યને સંપૂર્ણ ફળ આપનારો થાય નહિ. ॥૬૦॥

प्राग् यथैव जिनराजमन्दिरं, श्रेष्ठिपुत्रमथनो विधाप्य सः ।
खण्डितं फलमविन्दत ध्रुवं, भावखण्डनवशेन तद्यथा ॥६१॥

यथैव येन प्रकारेणैव, प्राक् पूर्वकाले, स श्रेष्ठिपुत्रः मथनः तदाख्यः, जिनराजमन्दिरं विधाप्य

निर्माप्य, भावस्य भावनायाः खण्डनं वैकल्यं तद्वशेन, ध्रुवं खण्डितमसमग्रं फलमविन्दत प्राप, तद्यथेति कथानिर्देशे ॥६१॥

પૂર્વ સમયમાં શ્રેષ્ઠીના પુત્ર મથન જેમ જિનેશ્વરનો મંદિર કરાવી, ભાવ ખંડિત થવાને લીધેજ ખંડિત ફળ પામ્યો હતો, તેની વાર્તા આ પ્રમાણે છે. ॥૬૧॥

**दक्षिणेऽत्र भरते रतेः पुरं, नाम रत्नपुरमस्ति सान्वयम् ।**
**तत्र कोऽपि कनकप्रभोऽभवत्, क्षिप्ततप्तकनकप्रभो नृपः ॥६२॥**

अत्र भरते दक्षिणे भागे, रतेः प्रीतेः पुरमास्पदम्, सान्वयं रत्नानां पुरं नगरमित्यन्वयार्थेन सहितं रत्नपुरं नाम पुरमस्ति, तत्र रत्नपुरे, कोऽपि विलक्षणः, क्षिप्ता तिरस्कृता, ततोऽप्युत्कृष्टवर्णत्वात् तप्तस्य विशुद्धस्य कनकस्य स्वर्णस्य प्रभा कान्तिर्येन स तादृशः कनकवर्णः, कनकप्रभो नाम नृपः अभवत् ॥६२॥

અહિં દક્ષિણાર્ધ ભરતમાં પ્રીતિના નગર જેવો રત્નપુરનામે યથાર્થ નગર હતું. ત્યાં કોઈક પોતાની કાન્તિથી તપાવેલા સુવર્ણને પણ તિરસ્કૃત કરનાર એવો કનકપ્રભ નામે રાજા હતો. ॥૬૨॥

**तत्प्रियापि कनकप्रभाऽजनि, प्रीतिवल्लिवनसारणिप्रभा ।**
**यां समीक्ष्य मधुराकृतिं शिवा, वल्लभं स्ववपुषाऽप्यनीनहत् ॥६३॥**

तस्य कनकप्रभस्य प्रिया अपि, प्रीतिरनुराग एव वल्लिः तस्या वने सारणिः प्रणाली उद्यान-सेचिनी सेव प्रीतिसंवर्धकत्वात्प्रभाति भासते इति सा प्रीतिमति कनकप्रभानामाऽजनि । यां मधुरा-कृतिं मनोहराकारां समीक्ष्य, शिवा पार्वती, वल्लभं शिवं स्ववपुषा स्वार्धशरीरेणापि अनीनहत् संश्लिष्यति स्म, मत्तोऽप्यधिकसुन्दरी सेति शिवः कदाचित्तद्वशः माभूदिति शङ्कया अर्धशरीरेण शिव-शरीर एव सदा तस्थौ, यथा स अवसराभावेन न तां कामयेतेति यावत् । शिवस्य अर्धनारीनट-स्वरूपस्य पूर्वोक्तहेतुना संभावनमिति ॥६३॥

તેની પ્રિયા કનકપ્રભા નામે હતી, જે પ્રેમની વેલરીના વનસારુ નીક જેવી હતી. જેનું મધુર સૌન્દર્ય જોઈને જ જાણે, પાર્વતીએ પોતાના પતિ શિવને પોતાના શરીરથી બાંધી રાખ્યો હતો. ( જેથી કનકપ્રભા પ્રત્યે આકર્ષાય નહિ ) ॥૬૩॥

**आस तत्र वसुदत्त इभ्यक-स्त्यागकीर्तिभरचन्दनोज्ज्वलः ।**
**प्रार्थनाभिमुखमन्यकामिनी-वर्गमेव विमुखीचकार यः ॥६४॥**

तत्र रत्नपुरे, त्यागो दानं तेन या कीर्तिः तस्या भरः अतिशयः एव चन्दनं सर्वत्र सुरभि-प्रसारकत्वात्, तेन उज्ज्वलः प्रसिद्धः इभ्यकः धनाढ्यः वसुदत्तनामा आस, यः वसुदत्त एव नान्यः, प्रार्थनाभिमुखं प्रार्थयन्तम् अन्यकामिनीवर्गं परस्त्रीसमूहं विमुखीचकार निराशमकरोत्, प्रार्थयन्तमपि कामिनीजनं तत्याजेत्यर्थः । एतेन तस्य विलक्षणजितेन्द्रियतोक्ता ॥६४॥

ત્યાં વસુદત્ત નામે શ્રેષ્ઠી હતો. જે દાનની મોટી કીર્તિ રૂપી ચન્દનથી ઉજ્વલ હતો. ને જે પ્રાર્થના કરતી એવી પણ બીજી સ્ત્રીઓને વિમુખ હતો. ( બીજી સ્ત્રીને ઇચ્છતો ન હતો ). ॥૬૪॥

पूर्वचन्द्रशुचिशीलधारिणी, चार्व्यजायत सधर्मचारिणी ।
तस्य धर्मधिषणा वसुन्धरी, चित्ररूपरसनावसुन्धरा ॥६५॥

तस्य वसुदत्तस्य, चित्ररूपा नानावर्णा या रसना कटिभूषणं तस्यां वसुन्धरा प्रान्तद्वययोजनस्थानस्थितस्थूलसर्वातिशायिरत्नगोलकमिव सर्वातिशायिनी, धर्मे धिषणा बुद्धिर्यस्याः सा तादृशी धर्मशीला, चार्वी मनोहराङ्गी, पूर्णचन्द्रस्येव शुचिनः विशुद्धस्य शीलस्य धारिणी पवित्रशीलवती, वसुन्धरी नाम सधर्मचारिणी पत्नी अजायत ॥६५॥

પૂર્ણચંદ્ર જેવા પવિત્ર શીળવાળીને ધર્મબુદ્ધિરૂપી રત્નવાળી, નાનારૂપવાળી, કળા રૂપી ધનને ધારણ કરનારી અનેક પ્રકારે મીઠું બોલનારી તેને પત્ની બહુ સારી હતી. ॥૬૫॥

माररूपमथनः सुतस्तयो–र्नामतोऽपि *मथनो*ऽभवत्कृती ।
*श्रीश्च सोम*पदपूर्विकावधू–स्तस्य सोमवदना गुणाश्रया ॥६६॥

तयोः वसुन्धरी–वसुदत्तयोः सुतः पुत्रः, कृती विद्वान्, माररूपस्य कामदेवसौन्दर्यस्य मथनः क्षेपकः, कामदेवादप्यधिकसुन्दरः, नामतः अपि, मथनः मथनेतिनामा अभूत् । तस्य मथनस्य, गुणाश्रया गुणवती सोमवदना चन्द्रमुखी, सोमपदपूर्विका श्रीः सोमश्रीरिति नाम वधूश्च, अभूदिति सम्बध्यते ॥६६॥

તે બન્નેનો, કામદેવના રૂપ ગર્વને તોડનારને બુદ્ધિમાન મથન નામે પુત્ર હતો તેની ચન્દ્રમુખી ને ગુણવંતી એવી સોમશ્રી નામે પત્ની હતી. ॥૬૬॥

सोऽन्यदा सखिभिरावृतो गतः, केलिकौतुकितयावनं वनम् ।
ऐक्षत द्रुमतले तपोधनं, मूर्त्तिबद्धमिव धर्ममर्हतः ॥६७॥

अन्यदा, स वसुदत्तः, सखिभिः मित्रैः आवृतः वेष्टितः सन्, केलौ क्रीडायां या कौतुकिता उत्सुकता तया कृत्वा प्राणिनाभवनं रक्षणं यस्माद् यस्मिन् वा अवनम् अवति रक्षति प्राणिन इति–वाऽवनम् नास्ति वनमपरं यस्मात्तत्तादृशं सर्वोत्कृष्टं वा, वनमुद्यानं गतः, तत्र द्रुमतले, अर्हतः जिनेश्वरस्य, मूर्तिबद्धं मूर्त्तिमन्तं, धर्ममिव, तपोधनं मुनिमैक्षत ॥६७॥

એક દિવસ તે ક્રીડાના કુતૂહલથી મિત્રો સાથે ઉદ્યાનમાં ગયો. ત્યાં ઝાડ નીચે તેણે જૈનધર્મ જાણે મૂર્તિમાન ન હોય એવા મુનિને જોયા. ॥૬૭॥

वीक्ष्य तं मुनिपतिं शमाश्रयं, मित्रमन्तिकगमन्वयुङ्क्त सः ।
कोऽयमङ्ग ! किमिहावतिष्ठते, कश्मलाविलकशाखिलाङ्गकः ॥६८॥

शमस्य निरीहताया: आश्रयमास्पदं शान्तस्वरूपं तं मुनिपतिं वीक्ष्य,स मथनः, अन्तिकगं समीपस्थं मित्रमन्वयुङ्क्त पृष्टवान्, किमित्याह—अङ्ग ! मित्र ! अयं समक्षस्थः कश्मलेन स्नानाद्यकरणान्मलेन आविलं कलुषितमस्वच्छं कृशं चाखिलमङ्गकमङ्गं यस्य स तादृशः विवर्णः कृशश्च, कः किंनामा, इहात्र द्रुमतले, किं किमर्थं कुतः अवतिष्ठते निवसति ? ॥६८॥

શાન્ત એવા તે મુનીશ્વરને જોઈ તેણે પાસે રહેલા મિત્રને પૂછયું કે હે મિત્ર ! અહિં મલિન અને દુબળા શરીરવાળો આ કોણ રહેલો છે ! ॥૬૮॥

तेन तं प्रति निवेदितं सखे ! साधुरेष विरतस्तपस्यति ।
एतदंह्रियुगलं विनम्य तत्, स्वं पुनीहि दुरितं लुनीहि च ॥६९॥

तेन मित्रेण तं मथनं प्रति उद्दिश्य निवेदितं कथितम् किमित्याह—सखे ! एष दृश्यमानः साधुः मुनिः विरतः वैराग्यवान् सन् तपस्यति तपः करोति, तत्तस्मात्, एतस्य साधोरंह्रियुगलं चरणद्वयं विनम्य प्रणम्य, स्वमात्मानं पुनीहि शुचिकुरु, दुरितं दुष्कर्म लुनीहि छिन्धि च। मुनिप्रणामेनात्मा पुनीते दुरितं च नश्यतीति भावः ॥६९॥

ત્યારે તે મિત્રે તેને કીધું કે હે મિત્ર ! આ સંયમી મુનિ તપ કરે છે. આના ચરણયુગલને નમી પોતાને ધન્ય કરીને પાપને કાપો. ॥૬૯॥

इत्युदीरितममुष्य सादरं, तन्निपीय मथनोऽनमन्मुनिम् ।
भूमिमण्डलरजोमिलच्छिरा, भावनां प्रकटयन्निवान्तरीम् ॥७०॥

इत्युक्तप्रकारेण, अमुष्य मित्रस्य तदुदीरितं कथितं सादरं निपीय श्रुत्वा, मथनः, भूमिमण्डलरजसा मिलत् शिरो यस्य स तादृशः भूमिनिहितमस्तकः सन्, आन्तरीं हृत्स्थां भावनां भक्त्यादिरूपचित्तवृत्तिं प्रकटयन्निव, मुनिमनमत्। नमनेन कृत्वा हृत्स्था भक्तिश्रद्धादिरेव प्रकटिता भवतीति भावः ॥७०॥

મિત્રના વચન આદરપૂર્વક સાંભળીને તે મથને પોતાની અંતરની ભાવના પ્રગટ કરતો ન હોય તેવી રીતે પૃથ્વીની ધૂળ માથામાં લાગે તેવી રીતે તે મુનિને નમ્યો. ॥૭૦॥

साधुराशिषमुदीर्य्य साधवे, साधुधर्ममुचितं दिदेश सः ।
आगताय महते महाशयाः, सारमेव सकलं विवृण्वते ॥७१॥

स साधुः मुनिः साधवे सज्जनाय तस्मै मथनाय, आशिषमाशीर्वादमुदीर्य्य कथयित्वा, उचितमनुरूपं साधुधर्मं यतिधर्मं दिदेश उपादिशत् ननु किमिति साधुधर्मं दिदेश, न पुनः गृहस्थधर्ममित्यत आह—महाशयाः उदारमनसः आगताय महते महीयसे सकलं सारं श्रेष्ठमेव मोक्षप्रापकत्वेन परमार्थभूतमेव पूर्वं विवृण्वते व्याख्यान्ति ॥७१॥

તે મુનિ તે ઉત્તમ જનને આશીર્વાદ આપી ઉચિત એવા સાધુ ધર્મની સંયમની દેશના આપી. કેમકે અભ્યાગત એવા ઉત્તમ જનને મહાત્માઓ બધું સારું જ કહે છે. ।।૭૧।।

देशनां स विनिशम्य हर्षवान्, भाषते स्म मथनो मुनीश्वरम् ।
धर्ममेतमुपदिष्टमर्हता, नालमस्मि विनिषेवितुं मनाक् ।।७२।।

देशनां धर्मोपदेशं विनिशम्य, हर्षवान् हृष्टः, प्रियत्वात्तस्याः दुर्लभत्वाच्चेति भावः, स मथनः, मुनीश्वरं भाषते स्म, किमित्याह—अर्हता जिनेश्वरेण, उपदिष्टमेतद्भवदुक्तं धर्मं विनिषेवितुमाचरितुम्, मनागीषदपि, अलं समर्थः नास्मि, अल्पसत्त्वात्, अस्य च कष्टसाध्यत्वादिति भावः ।।७२।।

દેશના સાંભળી ખુશી થયેલા તે મથને મુનિને કીધું કે જિનેશ્વરે પ્રરૂપેલા આ ધર્મનું સેવન કરવાને હું સહેજપણ સમર્થ નથી ।।૭૨।।

अभ्यधायि गुरुणा महामते ! श्राद्धधर्ममुररीकुरुष्व तत् ।
शुद्धदर्शनपुरस्सरं स तं, स्वीचकार वचसा मुनीशितुः ।।७३।।

गुरुणा मुनीश्वरेणाभ्यधायि उक्तम्, महामते ! तर्हि श्राद्धस्य श्रावकस्य धर्मम्, उररीकुरुष्व स्वीकुरुष्व, तस्यापि अर्हदुक्तत्वात्, सुखसाध्यत्वाच्चेति भावः । स मथनः मुनीशितुः, वचसोपदेशेन शुद्धदर्शनं निर्मलसम्यग्दर्शनं तत्पुरस्सरं तं श्राद्धधर्मं स्वीचकार ।।७३।।

ત્યારે મુનિએ કીધું કે હે બુદ્ધિમાન્ ! તો શ્રાવક ધર્મનો સ્વીકાર કરો. ત્યારે તે મથને મુનિની આજ્ઞાથી સમ્યક્ત્વપૂર્વક તેનો સ્વીકાર કર્યો. ।૭૩।।

स प्रणम्य मुनिपादपङ्कजं, मन्दिरं प्रति जगाम मित्रयुः ।
देवधर्मगुरुतत्त्वचिन्तना—ज्जीवितं सफलमेव संविदन् ।।७४।।

स मथनः, मुनिपादपङ्कजं प्रणम्य, सिद्धान्ते तत्त्वत्रयीकथनात् देवतत्त्व-धर्मतत्त्व-गुरुतत्त्वस्य चिन्तनात् मननपूर्वकविचारणात् जीवितं सफलं सार्थकमेव संविदन् जानन् मित्रयुः मित्रसमन्वितः मन्दिरं निजगृहं प्रति जगाम । सत्सङ्गो हि क्षणिकोऽपि जीवनं सफलयतीति भावः ।।७४।।

પછી તે મથન મિત્ર સાથે તે મુનિના ચરણકમળને નમી ઘર તરફ ગયો. તે દેવ, ગુરુ ધર્મનું તત્ત્વ ચિંતવતો તે જીવનને સફળ સમજવા લાગ્યો. ।।૭૪।।

तीर्थनाथभवनं स चान्यदा, स्वापतेयनिचयैरचीकरत् ।
तत्र बिम्बविनिवेशनक्षणे, भग्नभाव इति व्यचिन्तयत् ।।७५।।

अन्यदा च कालान्तरे मथनः, स्वापतेयनिचयैः धनराशिभिः कृत्वा तीर्थनाथस्य तीर्थंकरस्य भवनं प्रासादमचीकरत् निर्मापयामास, तत्र प्रासादे बिम्बस्य जिनप्रतिमायाः विनिवेशनस्य क्षणे काले, भग्नभावः भावनाविरहितः सन् इति वक्ष्यमाणप्रकारं व्यचिन्तयत् ।।७५।।

પછી અન્ત સમયે તે મથને દ્રવ્યોથી જિનેશ્વરનો મંદિર કરાવ્યો. ત્યાં બિંબની પ્રતિષ્ઠા વખતે ખંડિત ભાવવાળો તે આમ વિચારવા લાગ્યો, કે ॥૭૫॥

चिन्ताप्रकारमेवाह—

भूरि भूरि रभसाद्व्ययीकृतं, हन्त ! मेऽपि किमकार्यकारिता ।
इत्यनेकमनुतापमादधे, तापयन् हृदयमेव चिन्तया ॥७६॥

हन्तेति खेदे, रभसात् अविवेकतः, भूरिभूरि अतिमात्रं व्ययीकृतम्, प्रासादनिर्माणादिविधिविशेषः, मम बुद्धिमतोऽपि किं कीदृशी अकार्यकारिता इतीत्थं चिन्तया एव मथनः हृदयं तापयन् पीडयन्, अनेकमनुतापं पश्चात्तापम् 'पश्चात्तापोऽनुतापश्च' इत्यमरः, आदधे चकार ॥७६॥

ખેદ છે કે હું ઉતાવળથી ઘણું ઘણું ધન ખર્ચી નાખ્યું, મેં શું આ ખોટું કામ કર્યું ! એમ તે આવી ચિંતાથી હૃદયમાં બળતો ઘણો પશ્ચાતાપ કરવા લાગ્યો. ॥૭૬॥

यातवत्यपि कियत्यपि क्षणे, भूय एव विशदीकृताशयः ।
तीर्थराट्प्रतिमया समन्वितं, पूर्णमेव रचयाम्बभूव सः ॥७७॥

कियत्यपि क्षणे यातवत्यपि व्यतीते सति, भूयः पुनरेव, विशदीकृतः निर्मलः आशयो यस्य स तादृशः विशुद्धचेताः भावनावान् सन् स मथनः, तीर्थराट्प्रतिमया समन्वितं तत्कार्यं पूर्णमेव चकार, प्रतिष्ठादिसर्वकार्यं चकारेत्यर्थः ॥७७॥

કેટલાક ક્ષણો વીત્યે છતે ફરી પવિત્ર આશયવાળો તે મથને તીર્થંકરની પ્રતિમાથી યુક્ત એવા તે મંદિરને પૂરૂં કરાવ્યું. ॥૭૭॥

पूर्णतामुपगतेऽथ तत्र स, ध्यातवान् पुनरपि प्रसङ्गतः ।
वित्तवित्तविहितव्ययस्य मे, स्यात्फलं किमपि नो परत्र वा ॥७८॥

अथानन्तरम्, पूर्णतामुपगते तत्र कार्ये प्रतिष्ठादौ, प्रसंगतः प्रसंगवशात्, स मथनः, पुनरपि ध्यातवान् चिन्तयामास किमित्याह—वित्तस्य लब्धस्योपार्जितस्य वा वित्तस्य धनस्य विहितः कृतः व्ययो येन तादृशस्य मे मम, परत्र परलोके, किमपि फलं स्याद्वा नो, इत्येवं ध्यातवानिति ॥७८॥

પછી તે મંદિર પુરો થયે છતે ફરી પ્રસંગવશે તે વિચારવા લાગ્યો કે આ પેલા ધન વ્યયનો મને પરલોકમાં કંઈ ફળ મળશે કે નહિ. ॥૭૮॥

साधुयुग्ममपरेद्युरागतं, प्रत्यलाभयदसौ स्वमन्दिरे ।
प्रासुकैरशनपानकैः परे-ऽचिन्तयद्रजनिशेष इत्यपि ॥७९॥

अपरेद्युः स्वमन्दिरे आगतं साधुयुग्मं मुनिद्वयम्, प्रासुकैः प्रगता असवः प्राणा येषु तैरचित्तैः अशनैः भोज्यपदार्थैः पानकैः पेयपदार्थैश्च, प्रत्यलाभयत् सुपात्रदानं ददौ रजनिशेषे रात्रिचरमभागे इत्यपि वक्ष्यमाणप्रकारमप्यचिन्तयत् ॥७९॥

બીજા દિવસે આવેલા બે સાધુઓને મથન પોતાને ઘરે લઈ જઈ પ્રાશુક એવા ભાત–પાણીથી વહોરાવ્યું. ને પછી રાત્રિના છેલ્લે પહોરે એમ વિચારવા લાગ્યો ।।૭૯।।

तच्चिन्तामेवाह—

अव्यवस्थितफले वृषेऽत्र किं, जन्यते खलु मया परिश्रमः ? ।
एवमेष परिचिन्त्य निर्मलं, धर्ममाधित पुनर्विशुद्धधीः ॥८०॥

अव्यवस्थितं भवेद्वा नेत्यनिश्चितं फलं यस्य तादृशे अत्र वृषेऽस्मिन् दानादिधर्मे किं कस्माद् मया परिश्रमः उद्योगः जन्यते क्रियते ? न कर्त्तव्यः फलस्यानिश्चितत्वादिति भावः । एवमुक्तप्रकारं परिचिन्त्य पुनः विशुद्धधीः निर्मलमतिः असन्दिग्धबुद्धिरिति यावत्, एष मथनः निर्मलं धर्ममाधित चकार दधौ वा ॥८०॥

કે ધર્મનો ફળ કાંઈ નિશ્ચિત નથી, તો હું શું કામ ફોગટ શ્રમ કરું છું ? આમ વિચારીને તે ફરી શુદ્ધ બુદ્ધિવાળો થઈ પવિત્ર એવો ધર્મ કરવા લાગ્યો. ।।૮૦।।

वर्त्मनि व्रजत एकदा मुनी–नेष वीक्ष्य सजुगुप्समस्मरत् ।
नाहला इव मलाविला अहो!, एतके मलिनवाससो भृशम् ॥८१॥

एकदा एष मथनः वर्त्मनि मार्गे व्रजतः गच्छतः, मुनीन् वीक्ष्य, सजुगुप्सं निन्दया सहितम्, अस्मरत् चिन्तितवान् किमित्याह—अहो इति खेदे, जुगुप्सायां वा, एतके एते, नाहलाः पुलिन्दाः इव मलेन आविलाः अपवित्राः, भृशं मलिनवाससश्च, एवं च घृणा ( जुगुप्सा ) पात्रमेते इति भावः "पुलिन्दा नाहला निष्ट्या, शबरा वरुटा भटाः" इति हैमः ॥८१॥

એક સમયે માર્ગમાં જતો તે મુનિઓને જોઈ ઘૃણાપૂર્વક વિચારવા લાગ્યો કે અરે ! આ મલિન વસ્ત્રવાળા મુનિઓ મ્લેચ્છોની જેમ કેટલા બધા મેલા છે. ।।૮૧।।

उज्ज्वलानि सिचयानि यद्यमी, नित्यशः परिदधत्यनेनसः ।
किं विनश्यति ततस्तपस्विते—त्याद्ययं मुनिविगानमाचरत् ॥८२॥

यदि अनेनसः निष्पापा अमी मुनयः नित्यशः प्रतिदिनम्, उज्ज्वलानि स्वच्छानि सिचयानि वस्त्राणि परिदधति, किमिति प्रश्ने, ततः उज्ज्वलवस्त्रपरिधानात् तपस्विता मुनित्वं विनश्यति ? अर्थान्नैव विनश्यति, इत्यादि अयं मथनः, मुनेः विगानं निन्दामाचरत् ॥८२॥

જો આ બધા મુનિઓ ઉજળા ને ડાઘ વગરના વસ્ત્રો પહેરતા હોય તો શું તેથી તપસ્વીપણું નષ્ટ થઈ જશે ? આમ ઘણી ઘણી તે મુનિઓની નિંદા કરવા લાગ્યો. ।।૮૨।।

एवमेव समुपास्य दर्शनं, सातिचारमविचारसुन्दरः ।
अप्रतिक्रमभिधाय तद् गुरो—र्मृत्युमाप्य भुवनोद्धुरः सुरः ॥८३॥

जायते स्म वनजायतेक्षणो, वत्सरायुतमितायुरद्भुतः ।
प्रच्युतः स च ततो भवानभू—द्रत्नसारतनयो नयोज्ज्वलः ॥८४॥

( युग्मम् । )

एवमुक्तप्रकारेण एष मथनः, विचारेण सुन्दरः विचारसुन्दरः न विचारसुन्दरः अविचारसुन्दरः श्रेष्ठिसूः वसुदत्तपुत्रः सातिचारं पूर्वोक्तातिचारसहितं दर्शनमविशुद्धसम्यग्दर्शनं समुपास्य निषेव्य, तच्च गुरोरप्यनभिधायानुक्त्वा, तस्य प्रायश्चित्तमकृत्वैव मृत्युमवाप्य, वनजे कमले इव आयते दीर्घे ईक्षणे यस्य स तादृशः वत्सराणामब्दानामयुतेन दशसहस्रसंख्यया मितं समन्वितं परिच्छिन्नं वा, आयुर्यस्य स तादृशः, अद्भुतः विलक्षणः भुवनेषु उद्धरः उदग्रः, सुरः देवः अभूत्, ततः देवभवात् प्रच्युतः स मथनः, नयेन उज्ज्वलः पवित्रः नीतिमान्, रत्नसारतनयः पुत्रः, भवान् धनदोऽभूत् ॥८३।८४॥

આમ કુવિચારમાં પડ્યું તે શ્રેષ્ઠિપુત્ર સમ્યગ્દર્શનનું સાતિચાર પાલન કરી ગુરુની પાસે તેની આલોચના કર્યા સિવાય મૃત્યુ પામી લોકપ્રસિદ્ધ ને કમળ જેવા નેત્રવાળો ને દશ હજાર વર્ષના આયુષ વાળો અદ્ભુત દેવ થયો. તે જ ત્યાંથી ચ્યવીને તું નીતિમાન એવા રત્નસાર શ્રેષ્ઠિનો પુત્ર થયો છે. ॥૮૩॥૮૪॥

अथ वार्त्तामुपसंहरति—

तेन ते समभवंश्च सम्पदः, सापदः परपदाभिलाषिणः ।
भावभावितमनास्ततः पुमान्, धर्ममेव विदधीत धीधनः ॥८५॥

तेन च खण्डितभावनासमन्वितेन धर्मेण हेतुना, परपदस्य मोक्षस्याभिलाषिणः, ते तव, सापदः अन्तरा विपन्मिश्राः सम्पदः समभवन् मत्स्यगिलनादि विपत्तिजातमनुभूय तव सम्पत्प्राप्तिरित्यर्थः । ततस्तस्माद्धेतोः, धीधनः बुद्धिमान् पुमान् भावेन सद्भावनया भावितं परिप्लुतं मनो यस्य स तथा सन्नेव, धर्मं विदधीत, अन्यथा तु तवेव सर्वस्यापि त्वादृशस्य गतिरिति भावः ॥८५॥

તેથી તમને મોક્ષની અભિલાષાવાળા એવાને આપદ જેવી સંપત્તિઓ થઈ છે. માટે બુદ્ધિમાન પુરુષે ભાવનાશીલ મનવાળો થઈ ધર્મ અનુષ્ઠાન કરવો જોઈએ. ॥૮૫॥

प्राग्भवस्मरणमाप्य तत्क्षणं, ज्येष्ठनन्दन धनावहेऽथ तम् ।
वेश्मभारमधिरोप्य स व्रता—दानमातत सुवर्णदानकृत् ॥८६॥

अथ तद्वार्त्ताश्रवणानन्तरं प्राग्भवस्य पूर्वजन्मनः स्मरणमाप्य, स धनदः, तत्क्षणम्, जातोत्कट-वैराग्यत्वादिति भावः, ज्येष्ठे नन्दने पुत्रे धनावहे तं वेश्मभारं गृहभारमधिरोप्य, सुवर्णदानकृत्सन्, सुवर्णदानपूर्वकमित्यर्थः । व्रतस्य पञ्चमहाव्रतस्य आदानं ग्रहणमातत चकार, न ह्यन्तर्दृष्टेऽकृद्रे विषया-सक्तिः क्षणमपि तिष्ठतीति भावः ॥८६॥

તેથી જાતિસ્મરણ પામીને તે ધનદે તત્કાલ ધનાવહ નામે જ્યેષ્ઠ પુત્રને ઘરનો બધો ભાર સોંપી સુવર્ણદાન કરી વ્રતને ગ્રહણ કર્યું. ॥૮૬॥

सम्प्रति तद्व्रतदानस्य स्पृहणीयत्वमाह—

काञ्चिदेव नरजन्मकाञ्चनं, सद्व्रताचरणरत्नयोगतः ।
प्रापयेद् गुरुकलादसंविदा, लक्षकोटिकलनामहर्घताम् ॥८७॥

कश्चिद् भाग्यशाली जनः एव नरस्य जन्मैव दुर्लभत्वात् काञ्चनं मनुष्यभवरूपं सुवर्णं सद्व्रतस्याचरणमेव महत्त्वापादकत्वात् रत्नं तस्य योगतः सम्बन्धतः, गुरुरुपदेशक एव कलादः स्वर्णकारः विविधविचित्रोपदेशरचनाचतुरत्वात्, तस्य संविदा भावभूषणविधानचातुर्यरूपशिक्षणात्मकज्ञानेन, लक्षकोटिकलनाभिः लक्ष्यकोटिसंख्याभिः, अथवा लक्ष्यते दृश्यतेऽनेनेति लक्षं दृष्टिः तत्र या कोटिरग्रं मुख्यं सम्यग्दृष्टिः तस्याः कलना विकाशनं ताभिः, महर्घताम् अमूल्यतां पूज्यतां च प्रापयेत्, यथाहि—स्वर्णकारः स्वर्णं रत्नेन संयोज्य विविधरचनाचातुरीतः तत्कोटिमूल्यं करोति, केनचिदिभ्येन प्रयोजितः, तथा कोऽपि भाग्यशाली मनुष्यभवं सदाचरणद्वारा, गुरुसाहाय्येनामूल्यताऽऽपादनेन स्पृहणीयं करोतीति परंपरितरूपकम् ॥८७॥

કોઈક જીવ મનુષ્ય-ભવરૂપી સોનાને સદ્વ્રતોનું પાલનરૂપ રત્નના યોગે ગુરુરૂપી સોનારના જ્ઞાને કૌશલે લક્ષકોટિ મૂલ્યનું મહામુલાપણું પમાડી શકે છે. ॥૮૭॥

अथ धनदव्रतग्रहणानुसरणेनान्येषामपि व्रतग्रहणमाह—

तत्प्रिया तिलकसुन्दरी पिता, तस्य सापि जननी जनेश्वरः ।
कान्तया सह महाव्रतं ललु—र्निर्वृतिप्रणयकार्मणौषधम् ॥८८॥

तत्प्रिया धनदपत्नी तिलकसुन्दरी, तस्य पिता रत्नसारः, सा मणिचूलाख्यजनन्यपि, जनेश्वरः नृपः कान्तया सह सर्वे एव, निर्वृतौ मुक्तौ यः प्रणयोऽनुरागः तत्र कार्मणं तत्सम्पादनकुशलमौषधं महाव्रतं ललुः ॥८८॥

તેની પ્રિયા તિલકસુન્દરી તેના પિતા ને માતા અને પત્ની સાથે રાજા બધાયે મોક્ષની પ્રીતિ પ્રત્યે કામણગારી ઓસડ સમાન એવા મહાવ્રતનું ગ્રહણ કર્યું ॥૮૮॥

तन्मुनिक्रमसरोजषट्पदा—स्तद्यथाविधि समे प्रपाल्यते ।
प्राप्य देवपदवीं दिवि क्रमा—ल्लेभिरे पदमनन्तमव्ययम् ॥८९॥

तस्य शीलधारिमुनेः क्रमौ चरणौ एव रक्तत्वात्कोमलत्वाद् कल्याणरूपपरागवत्त्वाच्च सरोजे कमले, तत्र समासक्तत्वादहर्निशसेवकत्वाच्च षट्पदा भ्रमरा इव ते धनदादयः, तन्महाव्रतं यथाविधि विधिमनतिक्रम्य, प्रपाल्य, सेवित्वा, दिवि स्वर्गे देवपदवीं देवत्वं प्राप्य, क्रमात्क्रमशः, अनन्तम्, अव्ययं शाश्वतं पदं स्थानं मोक्षं लेभिरे ॥८९॥

આ પ્રમાણે તે મુનિના ચરણકમળમાં ભ્રમર જેવાં તેઓ બધાં વિધિ પ્રમાણે વ્રતનું પાલન કરી સ્વર્ગમાં દેવ પદ પામી ક્રમે કરીને અનંત અને અવિનશ્વર એવા મોક્ષ પદને પામ્યા. ॥૮૯॥

इत्थमात्मरुचिचारणव्रती, भूपतेरमिततेजसः पुरः ।
पौषधादवसितस्थितेः कथां, संप्रकाश्य परितोषमासदत् ॥९०॥

इत्थमुक्तप्रकारेण, पौषधात् पौषधग्रहणाद्धेतोः, अवसिता बद्धा नियता स्थितिरवस्थानं यस्य तस्य तादृशस्य भूपतेरमिततेजसः पुरः कथां धनदाख्यायिकां सम्प्रकाश्य कथयित्वा परितोषं प्रसन्नतामासदत्। क इत्याह—आत्मरुच्या स्वेच्छया चारणं लब्धविशेषप्रधानं गमनं यस्य स चासौ व्रती च स चारणमुनिरित्यर्थः। श्राद्धे सुपदेशः आत्मपरितोषाय जायते इति भावः ॥९०॥

ते ज प्रमाणे ઇચ્છાવિહારી ચારણ મુનિએ પૌષધમાં રહેલા રાજા અમિતતેજની આગળ આ કથા કહી ઘણાં સંતુષ્ટ થયા. ॥૯૦॥

श्रद्दधे नृपतिरेव तामपी–च्छामि नूनमनुशिष्टिमित्यणन् ।
तौ च चारणमुनी विहायसा, स्वेच्छया व्यहरतां दमाश्रयौ ॥९१॥

नृपतिरर्ककीर्तितनयोऽपि तां प्रतिपादितामनुशिष्टिमनुशासनमपि अवैकल्येनार्हद्धर्मपरिपाकनरूपामिच्छामि, इत्यणन् श्रद्दधे एव अर्हद्धर्मश्रद्धामेव कृतवान्, तौ च दमस्येन्द्रियनिग्रहस्य आश्रयावाधारौ जितेन्द्रियौ चारणमुनी, विहायसा आकाशमार्गेण स्वेच्छया यथेष्टं व्यहरताम् ॥९१॥

રાજા પણ નિશ્ચયપણાએ આજ્ઞાનો સ્વીકાર કરું છું એમ કહી પોતાની શ્રદ્ધાને પ્રગટ કરી. જિતેન્દ્રિય એવા તે બન્ને ચારણ મુનિઓ પણ સ્વેચ્છાએ આકાશમાર્ગે વિહાર કરી ગયા. ॥૯૧॥

तौ च खेचरमनुष्यनायकौ, वत्सरं प्रति जिनेन्द्रसद्मसु ।
चक्रतुः सुमहिमत्रयं महा—संपदामनुगुणं तथाहि च ॥९२॥

तौ च खेचरमनुष्यनायकौ विद्याधरेन्द्रौ श्रीविजया–मिततेजसौ, प्रतिवत्सरं प्रतिवर्षं जिनेन्द्रसद्मसु अर्हच्चैत्येषु महासम्पदामनुगुणं योग्यं सुमहिमत्रयं महोत्सवत्रयं चक्रतुः। तथाहि चेति तत्स्वरूपवर्णननिर्देशार्थम् ॥९२॥

તે વિદ્યાધરેન્દ્ર ને રાજા પણ દર વર્ષે જિનાલયોમાં મોટી સંપદાઓને અનુરૂપ એવા ત્રણ મહોત્સવો કરતા હતા ॥ જેમકે. ॥૯૨॥

चैत्रकाश्विनकमासयोरिमौ, स्वस्वजैनभवनेषु चक्रतुः ।
शश्वदेव विभवेन शाश्वता–ष्टाह्निके शुभनिबंधनं नृणाम् ॥९३॥

इमौ नृपौ श्रीविजया–मिततेजसौ +चैत्रकाश्विनकमासयोः चैत्रे आश्विने च मासि, स्वस्वजैनभवनेषु,

+ चैत्रस्य विमले पक्षे, यात्रैका शाश्वती भवेत् ।
द्वितीया चाश्विनीमासे, प्रसिद्धाऽष्टाह्निकाभिधा ॥५४३॥
देवा विद्याधराश्चैते, द्वीपे नन्दीश्वराभिधे ।
यात्रे कुर्युः नराः स्वस्व—स्थानचैत्येषु संमदात् ॥५४४॥

नृणां शर्मदेव शुभस्य निबन्धनं कारणं शाश्वताष्टाह्निकमहोत्सवौ, विभवेन बहुवित्तव्ययेन चक्रतुः ॥९३॥

તે બન્ને ચૈત્ર અને આસો મહિનામાં પોત પોતાના જિનાલયોમાં મનુષ્યોના, શુભ કારક એવા શાશ્વત અષ્ટાન્હિકા ઉત્સવ વૈભવ સાથે હંમેશા કરતા હતા. ॥૯૩॥

सीमभूमिभृति रामकेवल-ज्ञानभुव्यनुपमं तृतीयकम् ।
श्रीयुगादिजिनचैत्यमन्दिरे, कञ्चिदुत्सवममू वितेनतुः ॥९४॥

अमू श्रीविजया-मिततेजसौ, तृतीयकम् अनुपमम् किञ्चिद्विलक्षणमुत्सवम्, सीमभूमिभृति सीमपर्वते रामस्य बलरामस्याचलमुनिसंज्ञकस्य केवलज्ञानस्य भुवि स्थाने, श्रीयुगादिजिनचैत्यमन्दिरे वितेनतुः ॥९४॥

અને તીજો અનુપમને અદ્ભુત ઉત્સવ સીમપર્વત ઉપર બલભદ્ર અચલના કેવળજ્ઞાન ઉત્પન્ન થવાના સ્થાને શ્રીઆદિનાથ ચૈત્યમાં કરતા હતા. ॥૯૪॥

अर्ककीर्तिसुतभूमिवासवः, सम्पदा विजितवासवोऽन्यदा ।
खेचरैः परिवृतः परःशतै-राश्रितः परिषदं ससंमदः ॥९५॥

अन्यदा सम्पदा समृद्धया विजितः वासवः इन्द्रो येन स तादृशः इन्द्रादप्यधिकसम्पत्तिशाली, अर्ककीर्तेः सुतोऽमिततेजाः भूमिवासवः महीन्द्रः, परःशतैरनेकैः खेचरैः विद्याधरैः परिवृतः समन्वितः, ससम्मदः सहर्षः सन् परिषदं सभामाश्रितः ॥९५॥

धर्म एव दशधा विभाजितो-ऽप्येकतामिव गतोऽतिहार्दतः ।
एकवाससमुपास्तिजन्मनो, विष्टपत्रितयतत्त्ववेदिभिः ॥९६॥

विष्टपत्रितयस्य भुवनत्रयस्य तत्त्वं परमार्थरहस्यभूतानेकान्तं संविदन्तीत्येवंशीलाः सर्वज्ञाः तैः, एको नियतस्साद्यनन्तस्थितिरूपो वासः कर्मकारणाभावेन पुनर्भववासकार्याभावात् यत्र स एकवासो मोक्षः तस्मै समुपास्तिस्सम्यग्दर्शनादित्रयाराधना तस्यै जन्म यस्य स तथा तस्य साधोर्धर्म एव दशधा विभाजितः क्षमादिप्रकारेण विभागीकृतोऽपि अतिहार्दतः हार्दिकभक्त्येकतानतातः एकतां धर्मैकमूर्तित्वान्मुनेस्तदेकरूपतां गत इव, दशविधयतिधर्मातिहार्दिकाराधनातत्पर इति भावः । अस्य तं नेत्रविषयं निनायेत्यग्रिमेणान्वयः ॥९६॥

अन्तरेण सततोपवासिनां, यो विचित्रविषयोपलम्भनम् ।
पश्यताममृतपारणाविधिं, चक्षुषां विरचयन्निवारुचत् ॥९७॥

यः पश्यतां जनानां विचित्रविषयोपलम्भनमन्तरेण विचित्रस्य नानाप्रकारस्य विषयस्येन्द्रियगोचरस्योपलम्भनं प्राप्तिस्संयोगः तदन्तरेण तद्विना सततोपवासिनां चक्षुषां दर्शनामृतेन पारणाविधिं विरचयन्निव कारयन्निवारुचत् ॥९७॥

मासक्षपणपारणेच्छया-ऽभ्यापतन्तमतिमात्रदुर्बलम् ।
दुश्चरेण तपसा मुनीश्वरं, तत्र नेत्रविषयं निनाय तम् ॥९८॥

( चतुर्भिः कलापकम् )

मासक्षपणस्य मासोपवासस्य पारणायाः व्रतान्तभोजनस्य इच्छया, अभ्यापतन्तमागच्छन्तम्, दुश्चरेण अन्येन चरितुमशक्येन तपसा कृत्वा, अतिमात्रदुर्बलम् अत्यन्तकृशं न हि तादृशदुश्चरस्तपःकर्त्ता मुनिः सबलो भवतीति भावः, तं मुनीश्वरं तत्र परिषदि नेत्रविषयं निनाय ददर्श ॥९८॥

એક દિવસે સમ્પદાથી ઈન્દ્રને જીતનારા અર્કકીર્તિના પુત્ર શ્રી વિજયરાજા સેંકડો વિદ્યાધરોથી પરિવરેલા હર્ષપૂર્વક સભામાં બેઠેલો હતો. ત્યારે હર્ષપૂર્વક ત્રણે લોકના તત્ત્વના જાણકારો વડે દશભાગે વિભાગ કરાયેલો ધર્મ ઉપાસનાની શરૂઆતથી જ જાણે અત્યંત પ્રેમના લીધે એક થઈ ગયો હોય તેમ એક વસ્ત્રવાળાને જે નેત્રોને નાના પ્રકારના વિષયોના ભોગ સિવાય પણ સતત ઉપવાસ કરનારાઓની અમૃત પારણાની ક્રિયાઓ જોતા કરતા હોય. તેમ શોભતા દુષ્કર તપથી દુર્બલ થયેલા માસ ખમણની પારણાની ઈચ્છાએ ત્યાં આવતા એવા તે મુનીશ્વરને નેત્રની સામે કર્યો.—જોયો. ॥૯૫॥૯૬॥૯૭॥૯૮॥

अथ मुनेस्तत्कृतस्वागताद्याह—

सिंहविष्टरमपास्य सोऽथ तं, त्रिः परीय च विनम्य भक्तितः ।
धर्मलाभवचसातितोषितः, प्रासुकान्यशनपानकान्यदात् ॥९९॥

अथ दर्शनानन्तरं सः अमिततेजाः, सिंहविष्टरं सिंहासनम् अपास्य त्यक्त्वा महति समायाते निजासनत्यागस्य शिष्टाचारत्वादितिभावः। तं मुनिं त्रिः त्रिवारं परीय प्रदक्षिणीकृत्य, भक्त्या विनम्य प्रणम्य च, धर्मलाभस्य मुनिव्याहृतस्य वचसा वाण्या अतितोषितः अतिप्रसादितः प्रासुकानि अचित्तानि अशनपानकानि अदात्, अर्थात्तस्मै मुनये इति ॥९९॥

પછી તે રાજા સિંહાસન છોડી તે મુનિની ત્રણ પ્રદક્ષિણા કરીને ભક્તિથી નમી. તેના ધર્મલાભના આશીર્વાદથી અત્યન્ત ખુશ થયેલો છતો, પ્રાશુક એવા ભાત પાણીનો લાભ લીધો—તેમને આપ્યો. ॥૯૯॥

पात्रदानमहिमप्रकाशकं, तत्क्षणादजनि दिव्यपञ्चकम् ।
ज्ञानपञ्चकविपञ्चनस्थितिं, भूपतेर्वददिवात्मनः स्फुटम् ॥१००॥

पात्रदानस्य अतितपस्विमुनिरूपसुपात्रदानस्य महिम्नः प्रभावस्य प्रकाशकं प्रदर्शकम्, दिव्यपञ्चकं १-चेलोत्क्षेपः २-गन्धोदकपुष्पवृष्टिः ३-दुन्दुभिनादः ४-अहोदानमहोदानमित्युद्घोषणा वसुधारावृष्टिश्च इत्येवंरूपं भूपतेरमिततेजसः, आत्मनः ज्ञानपञ्चकस्य विपञ्चनस्य विस्तारस्य स्थितिं सत्त्वं स्फुटं वदत्कथयदिव, तत्क्षणात् अजनि ॥१००॥

ત્યાં રાજાના આત્માને પાંચ જ્ઞાનના વિસ્તાર થવાનું પ્રગટ સૂચવતો હોય તેમ તત્કાલ પાત્રને દાનની મહિમાને પ્રગટ કરતો વસુધારા વિગેરે દિવ્ય પંચક થયો. ॥૧૦૦॥

एवमार्हतवृषोद्यमे रतौ, श्रीत्रिपृष्ठतनयामितौजसौ ।
वत्सरान् प्रकृतिवत्सलौ नृपौ, तौ व्यतीयतुरिमौ सहस्रशः ॥१०१॥

एवमुक्तप्रकारेण, आर्हतः अर्हन्निर्दिष्टो यो वृषो धर्मः तस्य उद्यमे आचरणे रतौ तत्परौ, तौ प्रसिद्धौ, प्रकृतेः प्रजानां वत्सलौ स्नेहवन्तौ, इमौ श्रीत्रिपृष्ठतनयामितौजसौ श्रीविजयामिततेजसौ नृपौ विद्याधरेन्द्रौ, सहस्रशः वत्सरान् बहून्यब्दसहस्राणि व्यतीयतुः ॥१०१॥

આમ જૈનધર્મ વિષે ઉદ્યમવંત થઈને સ્વભાવથી પરસ્પર પ્રેમવાળા ત્રિપૃષ્ઠના પુત્ર શ્રીવિજયને અમિતતેજ બન્ને રાજા હજારો વર્ષ પસાર કર્યો ॥૧૦૧॥

तौ विमानमधिरुह्य मानिनौ, जग्मतुर्नरपती परेद्यवि ।
नन्दने सुरपतेर्मनोरमे, शाश्वतान् जिनपतीन्विवन्दितुम् ॥१०२॥

परेद्यवि एकदा, तौ मानिनौ मानधनौ नरपती श्रीविजयामिततेजसौ, विमानं व्योमयानमधिरुह्य, शाश्वतान् जिनपतीन् जिनेश्वरबिम्बान् विवन्दितुं, सुरपतेरिन्द्रस्य मनोरमे मनोहरे क्रीडां कर्तुं योग्ये इति यावत् नन्दने तदाख्योद्याने जग्मतुः ॥१०२॥

એક દિવસે શાશ્વત જિનેશ્વરોનું વન્દન કરવા સારૂ તે માનનીય બન્ને રાજા વિમાનમાં ચઢી ઇન્દ્રના મનોહર એવા નન્દન વનમાં ગયા હતા. ॥૧૦૨॥

तत्र काञ्चनशिलातलासनौ, वीक्ष्य चारणमुनीश्वरौ नृपौ ।
सत्तमौ विपुलधीमहामती, तौ प्रणेमतुरपेतकल्मषौ ॥१०३॥

तत्र नन्दनवने, काञ्चनस्य शिलायास्तलं पृष्ठमेवासनं ययोः तौ सुवर्णपीठस्थितौ अपेतकल्मषौ निष्पापौ, सत्तमौ, विपुलधीमहामती विपुलमति-महामतिनामानौ चारणमुनीश्वरौ वीक्ष्य नृपौ श्रीविजयामिततेजसौ तौ मुनी प्रणेमतुः ॥१०३॥

સજ્જન એવા ત્યાં બન્ને રાજાએ કાંચન શિલારૂપી આસન ઉપર નિષ્કલંક એવા વિપુલમતિને મહામતિનામે બે ચારણ મુનિઓને બેઉ પ્રણામ કર્યો. ॥૧૦૩॥

अथ तत्कृतदेशनामाह—

अग्रतोऽपि विनिविष्टयोस्तयो–राद्यसाधुरतनिष्ट देशनाम् ।
प्राप्य मानुषजनुः सुदुर्लभं, मा प्रमादवशगाः स्त साधवः ! ॥१०४॥

तयोः नृपयोः अग्रतोऽपि पुरत एव विनिविष्टयोरुपविष्टयोः तयोर्मुन्योः आद्यः प्रथमः ज्येष्ठ इति यावत्, साधुः मुनिः देशनामतनिष्ट ददौ। किमित्याह—साधवः हे सज्जनाः ! सुदुर्लभं मानुषजनुः मनुष्यजन्म 'जनुर्जननजन्मानि' इत्यमरः। प्राप्य, प्रमादस्य वशगाः अधीनाः मा स्त मा भूत ॥१०४॥

આગળમાં તે બન્ને રાજા બેઠા છતાં તે બન્નેમાં મોટા મુનિ દેશના આપવા લાગ્યા. હે સજ્જન પુરુષો, અત્યન્ત દુર્લભ એવો મનુષ્યભવ પામી પ્રમાદને આધીન થતા નહી. ॥૧૦૪॥

अप्रमत्तेन किं करणीयमिति चेत्तत्राह—

धर्ममार्हतमुपाध्वमादरा—ज्जन्मकोटिकृतकल्कनाशकम् ।
ग्रीष्मकालजनितं निरर्गलं, तापमम्बुभृदपास्यति क्षणात् ॥१०५॥

जन्मनां कोटिभिः कृतानां कल्कानां पापानां नाशकम्, तादृशकल्कनाशकत्वेन हि तस्यावश्योपास्यत्वमिति सूचितम् । आर्हतं सर्वज्ञोक्तं धर्मम् उपाध्वम् भजध्वम् । ननु नश्केनानेकेषां नाशः सुकरः इत्याशङ्काया निवृत्तये दृष्टान्तमाह—अम्बूनि बिभर्तीति सः मेघः, ग्रीष्मकालजनितं निरर्गलम् अर्गलात्प्रतिरोधकान्निष्क्रान्तम् अनावरणीयमग्रं च, अत्युग्रमिति यावत्, तापं क्षणात् न तु तत्र तस्य कालविशेषोऽपेक्षित इति भावः, अपास्यति दूरीकरोति । एवं च धर्मस्यापि तादृशकल्कनाशकत्वं न विरुध्यते इति भावः । दृष्टान्तालङ्कारः ॥१०५॥

કરોડો જન્મોના પાપનો નાશ કરનાર એવા જૈનધર્મની આદરપૂર્વક ઉપાસના કરો ઉનાળાના સમયે થયેલા ઉગ્રતાપ જે વાદલ તત્કાલ નાશ કરે છે. ॥૧૦૫॥

आशुशुक्षणिरिवेन्धनैर्घनै—र्वारिराशिरिव वारिराशिभिः ।
हा ! चकोर इव कौमुदीभरै—र्जीव एव विषयैर्न तृप्यति ॥१०६॥

घनैः प्रभूतैः, इन्धनैः दारुभिः, आशुशुक्षणिरग्निरिव, वारीणां जलानां राशिभिः समूहैः, वारिराशिः समुद्रः इव, कौमुदी चन्द्रिका तासां भरैरतिशयैः चकोर इव, विषयैः स्रक्चन्दनवनितादिरूपैः, एष शरीरी जीवः न तृप्यति, हा खेदे, जीवस्य कथमपि विषयैर्न तृप्तिरिति तस्य तृप्त्यै आयासः खेदायैवेति भावः । एवं च विषयोपभोगतृप्तेः धर्मः कर्त्तव्य इति प्रलापमात्रम्, विषयैस्तृप्तेरेवासम्भवात्, तस्मात्सद्य एव धर्म आचरणीयः, न तु तत्र प्रमादः कर्त्तव्य इति भावः । मालोपमा ॥१०६॥

જેમ ઘણાં લાકડાઓથી પણ અગ્નિ પાણિ ધોધથી પણ સમુદ્ર, ને ઘણાં ચાંદનીથી પણ ચકોર કદી તૃપ્ત થતા નથી તેમ હા ! જીવ વિષયોથી તૃપ્ત થતો નથી. ॥૧૦૬॥

ननु अस्तु तदपि, किन्तु यौवनादौ तदाचरणीयमिति चेत्तदपि न संभवति इत्याह—

धर्ममारचयितास्मि यौवने, वार्धकेऽपि यदि वा विरक्तधीः ।
धर्मराजमवितर्क्य मित्रकं, कोऽपि जल्पतु किमीदृशं वचः ॥१०७॥

यौवने यदि वा यौवने कथंचित्तदसंभवे, वार्द्धके वृद्धावस्थायामपि, विरक्तधीः सन् धर्ममारचयिता अस्मि, इति, ईदृशं वचः, धर्मराजमन्तकं मित्रमेव मित्रकं मित्रम्, स्वार्थे कः, अवितर्क्य अकृत्वा, कोऽपि जल्पतु किम् ! नैव जल्पितुं शक्नोतीत्यर्थः । यौवने वार्धक्ये वा तदा धर्माचरणं संभवति, यदि वा तज्जीवनं स्यात्, नित्यं च सन्निहितो मृत्युः, एवं च कुतस्तावज्जीवनाशा, धर्मराजश्चेन्मित्रं भवेत्, तदैव तत्संभवति, धर्मराजमैत्री च न संभवत्येवेति न धर्माचरणे कालक्षेपो व्यायानिति भावः ॥१०७॥

યુવાવસ્થામાં કે વૃદ્ધાવસ્થામાં વિરક્ત થઈ ધર્મ કરીશ, આવો વચન ધર્મરાજ યમરાજ તે મિત્ર બનાવ્યા શિવાય કોઈ બોલી પણ શકે શું ? ન બોલી શકે. ॥१०७॥

ननु यस्य धर्मराजेन मैत्री, तेन कालक्षेपे का हानिरिति चेत्तत्राह—

बालिशं त्यजति नो न पण्डितं, नैव रङ्कमपि नापि चक्रिणम् ।
नैव देवमपि नापि वासवं, क्रुद्ध एष शमनः कथंचन ॥१०८॥

क्रुद्धः, एतेन धर्मराजेन मैत्र्यसंभव उक्तः, क्रुद्धस्य स्वपरविवेकाभावात् तदाह—'क्रोधी हन्याद् गुरूनपि' इति, एष शमनः यमः 'शमनो यमराड् यमः' इत्यमरः । बालिशं मूर्खं नो त्यजति, पण्डितं न, क्रुद्धस्य विवेकरहितत्वात्तत्र मूर्खत्वं पण्डितत्वं वा अकिञ्चित्करम्, रङ्कमकिञ्चनमपि नैव, अकिञ्चनो हि दयापात्रं प्रसिद्धः तत्र चेन्नान्तकस्य दया, तर्ह्यन्यत्र का चर्चा, एवं च क्रुद्धस्य न क्वापि दयासंभव इति सूचितम् । चक्रिणमपि न, सर्वतो हि भाग्यशाली चक्रवर्ती, तमपि न त्यजति, मनुष्या इवामरा अपि यमाधीना एवेत्याह—देवमपि नैव, वासवं देवेन्द्रमपि न, एवं चान्तकः सर्वतो बलवान् सर्वमेव हन्तीति स्वमरक्षितं मत्वा सद्य एव धर्मे प्रवृत्तिः कार्येति भावः ॥१०८॥

ક્રુદ્ધ થયેલો પેલો યમરાજ મૂર્ખ કે પંડિત, રંક કે ચક્રવર્તી, દેવ કે ઇન્દ્ર, કોઈને પણ કોઈ રીતે છોડતો નથી. ॥१०८॥

ननु प्रार्थनादिभिः धर्मराजात्त्राणसंभव इत्यपि नेत्याह—

उत्तमर्ण इव न प्रतीक्षते, प्रार्थितोऽपि बहुभिश्चटूक्तिभिः ।
याममात्रमपि नो मुहूर्त्तकं, न क्षणं कुपित एष दण्डभृत् ॥१०९॥

कुपित एष दण्डभृत् कालः 'कालो दण्डधरः' इत्यमरः । उत्तमर्णः ऋणदाता इव, बहुभिः चटूक्तिभिः प्रियोक्तिभिः, प्रार्थितः अपि, एतेन तस्यातिनिर्दयत्वमुक्तम्, याममेव याममात्रम् प्रहरं "द्वौ याम-प्रहरौ समौ" इत्यमरः । न प्रतीक्षते विलम्बते मुहूर्त्तकं मुहूर्त्तमपि नो, क्षणमपि नो, अत्युग्रः स्वनिश्चयेऽचलश्च स इति ततस्त्राणाशा सर्वथैव न युज्यते इति तत्काल एव धर्मः कार्य इति भावः ॥१०९॥

કુપિત થયેલો તે યમરાજ ઘણી પ્રિય વાણીથી પ્રાર્થના કરાયા છતાં પણ દેણદારને લેણદારની જેમ જ પહેાેરે કે ઘડી કે ક્ષણવાર પણ પ્રતીક્ષા કરતો નથી સાહસતો નથી. ॥१०९॥

अथोपसंहरति—

तज्जनाः ! जिनप्रतिरूपितं, धर्ममाचरत निश्चलाशयाः ।
येन वोऽपि शिवसम्पदः स्थिराः, संभवेयुरुभयत्र भाविनः ॥११०॥

तद् धर्मराजस्यानिवार्यत्वादित्थं सन्निहितत्वेन मृत्योरनिश्चयाद् भाविनः हे भावुकाः जनाः । निश्चलाशयाः सन्तः, चञ्चलत्वे तु न कार्यसिद्धिः सामग्र्या एव विकलत्वादिति भावः । जिनपतिना

प्ररूपितं प्रवर्तितं धर्ममाचरत, येनार्हद्धर्मेण नत्वन्यप्ररूपितधर्मेण, वः युष्माकमपि, शिवस्य कल्याणस्य सम्पदः समृद्धयः, उभयत्र इह परत्र च, स्थिराः अविनश्वराः एव संभवेयुः, अन्यथा तु नेति भावः ॥११०॥

હે લોકો ! તેથા સ્થિર મનવાળા થઈ જિનેશ્વરે પ્રરૂપેલા ધર્મનું પાલન કરો જેથી તેમ તમોને બન્ને લોકમાં કલ્યાણ કરનારી એવી સ્થિર શુભ સંપદાઓ—શુભ ગુણો થશે. ॥૧૧૦॥

एवमस्य वचनं निशम्य तौ, संसृतेः परिहृतौ निबन्धनम् ।
पृच्छतः स्म परिशेषमायुषः, प्राञ्जलौ नवविनेयवन्मुनिम् ॥१११॥

अस्य मुनेः एवम् उक्तप्रकारं वचनं संसृतेः संसारस्य, परिहृतौ दूरीकरणे निबन्धनं कारणं निशम्य, तौ श्रीविजयामिततेजसौ नवो यो विनेयः शिष्यस्तद्वत्, प्राञ्जलौ सरलौ, मुनिम् आयुषः निजजीवितकालस्य, परिशेषमवशिष्टमंशम्, कियदावयोरायुः परिशिष्यते इत्येवं पृच्छतः स्म ॥१११॥

તેનો આવો વચન સાભળી તે બન્નેએ ભવબંધનનો રાગાદિનો ત્યાગ કર્યો નવા શિષ્યની જેમ હાથ જોડીને મુનિને પોતાનું બાકીનું આયુષ્ય પૂછ્યું. ॥૧૧૧॥

तौ प्रति प्रणिजगाद चारणः, साधुरेव दिवसानि विंशतिम् ।
षड्युतानि नियतानि संस्कृत-च्छन्दसामिव विभाजनाविधाः ॥११२॥

चारणः साधुः, तौ नृपौ प्रति, प्रणिजगाद, किमित्याह—संस्कृतच्छन्दसां विभाजनायाः विधाः प्रकाराः इव, नियतानि निश्चितानि, मात्राच्छन्दसामसंस्कृतानां न संख्यानियमः किन्तु वर्णमात्रोभयाश्रितानां संस्कृतच्छन्दसां संख्यानियमः, तद्वत्, षड्युतानि विंशतिं दिवसानि षड्विंशतिदिवसानि षड्विंशतिदिनान्येव, आयुरवशिष्यते इति शेषः ॥११२॥

ત્યારે ચારણ મુનિએ તે બન્નેને કીધું સંસ્કૃત છન્દોના ભેદોને વિશેષની જેમ નિશ્ચયે ૬ સંખ્યાયે કરીને સાથે વીસ દિવસ ૨૬ છવ્વીશ દિવસનું છે. ॥૧૧૨॥

तच्छ्रुत्वा तयोः पश्चात्तापमाह—

दुर्लभं मनुजजन्म हारितं, हा ! प्रमादमदसंगमेन नौ ।
ईदृशं कथमहो ! निरर्थकं, सर्वशस्यपुरुषार्थसाधनम् ॥११३॥

हा इति पश्चात्तापे, नौ आवयोः दुर्लभं मनुजजन्म, प्रमादस्य मदस्य च संगमेन सम्पर्केण हारितं गमितम्, अहो इति मुहुः खेदे, सर्वेषां शस्यानां प्रशस्यानां पुरुषार्थानां यद्वा सर्वेषु जन्मसु शस्यमुत्तमं पुरुषार्थानां साधनम्, मनुजजन्म, ईदृशमेवंरीत्या कथं निरर्थकं मुधैव, हारितमिति शेषः, सफलमेतत्स्यात्तथा आवाभ्यां नाचरितमिति भावः ॥११३॥

ત્યારે તે બન્ને પશ્ચાતાપ કરવા લાગ્યા કે અરે રે અમો બન્ને સઘળાં ધન્ય જેવા પુરુષાર્થ—ધર્મ અર્થ કામ મોક્ષનું સાધન એવો દુર્લભ આ મનુષ્ય ભવ શી રીતે ફોગટમાં ગુમાવ્યો ? ॥૧૧૩॥

ननु यावदेवावशिष्टं तत्रैव तत्साधनीयमिति चेत्तत्राह—

अन्तरेण परमायुरर्जना, श्रेयसो वितनुते न योग्यताम्
वेश्मनि ज्वलति जातवेदसा, कस्य हास्यमपि नान्धुनिर्मितिः ॥११४॥

अन्तरेण परमायुः चिरायुर्विना इत्यर्थः। श्रेयसः कल्याणस्य अर्जना उपार्जना, योग्यतामौचित्यं न वितनुते प्रथयति, अल्पायुष्के श्रेयोऽर्जनयोग्यतैव नास्तीति कुतः एतावदल्पे आयुषि श्रेयस उपार्जनं कुर्वः इति भावः। अयोग्यत्वमेव समर्थयति दृष्टान्तेन—जातवेदसा अग्निना वेश्मनि गृहे ज्वलति दह्यति सति, अन्धोः कूपस्य निर्मितिः निर्माणं खननमिति यावत्, कस्य हास्यं हास्यपात्रं न ! अपि सर्वस्यैव हास्यमितिभावः। दृष्टान्तालङ्कारः ॥११४॥

લાંબી આયુષ્ય ન હોય તો તેની આયુષ્યનો લાભ મોક્ષની યોગ્યતા આપતો નથી ટુંકા આયુષ્યથી મોક્ષ સાધી શકાય નહિ ઘર અગ્નિથી બળતું હોય ત્યારે કુવાનું ખોદવું કોને હાસ્યકારક ન હોય? હોય જ ॥૧૧૪॥

सान्त्वनामतनुतां मुनीश्वरौ, भूभुजोरथ तयोर्विषण्णयोः ।
खेदमेदुरहृदौ युवां कथं, धीधनौ भवथ एवमुन्नतौ ॥११५॥

अथानन्तरम्, मुनीश्वरौ, विषण्णयोः अनुतप्तयोस्तयोः भूभुजोः, सान्त्वनामाश्वासनमतनुताम् प्राददताम्, सान्त्वनामेवाह—उन्नतौ उदाराशयौ, धीधनौ बुद्धिमन्तौ युवाम् एवमुक्तप्रकारेण खेदेन ग्लान्या जन्मव्यर्थत्वज्ञानजन्यया मेदुरं विसंस्थुलं हृदयोस्तौ तादृशौ खिन्नौ कथं भवथः ? खेदो न करणीय इत्यर्थः। यो हि धीमान उदाराशयश्च स न खिद्यति, खेदस्य नीचप्रकृतिस्वभावत्वात्।
"विगतं नानुशोचन्ति, नराः पण्डितबुद्धयः।" इत्युक्तेरितिभावः ॥११५॥

આમ વિષાદ પામેલા બન્ને રાજાને તે બન્ને મુનિઓ સાન્ત્વના આપવા લાગ્યા, મોટા બુદ્ધિમાન તમે બન્ને આમ શીદને ખિન્ન થાઓ છો? ॥૧૧૫॥

ननु गतस्य न खेदः, किन्तु शुभोपार्जनावसरो नास्तीत्यतः खेद
इति चेत्तत्राह—

घस्रमात्रमपि सेवितं व्रतं, भावतो भवति निर्वृतिप्रदम् ।
दीपिका विरचिताऽपि किं गृहे, नान्धकारनिकरं निरस्यति ? ॥११६॥

घस्रमेकदिनमात्रमपि, किं पुनः द्वित्र्यादिदिनेष्विति भावः, भावतः निर्मलचित्तवृत्तितः, सेवितमनुष्ठानं व्रतं निर्वृत्तिपदं मोक्षदं सुखदं वा, "निर्वाणं निर्वृतिः सुखम्" इत्यमरः। भवति। तव तु षड्विंशतिदिवसानामवशिष्यते इति तावद्व्रताचरणे तु सुकरा निर्वृतिप्राप्तिरिति शुभोपार्जनावसरो नास्तीति खेदो न कर्त्तव्य इत्यर्थः। अणुरपि विशेषोऽध्यवसायकर इति भावः। तत्रैव दृष्टान्तमाह—गृहे, विरचिता प्रकाशितमात्राऽपि दीपिका, अन्धकारस्य निकरं पुञ्जं न निरस्यति दूरीकरोति, किम् ? अपि त्ववश्यं दूरीकरोतीत्यर्थः। व्रतं हि दीपकस्वभावं लेशमात्रतोऽपि स्वसाध्यसाधनसमर्थमिति भावः ॥११६॥

એક દિન પણ ભાવથી સેવેલો વ્રત મોક્ષને આપે છે. દીવો પેટાવ્યાની સાથે જ ઘરમાં અન્ધકાર સમૂહને નાશ કરતો નથી ? કરે જ છે.॥૧૧૬॥

चारु चारणमहर्षिबोधितौ, तौ जवान्निजनिजं निकेतनम् ।
नागरैः प्रमुदितैरवेक्षितौ, भूपती शुभमती समागतौ ॥११७॥

चारणमहर्षिणा बोधितौ, तौ शुभमती भूपती श्रीविजयामिततेजसौ, जवात् वेगतः, एतेन करिष्यमाणकर्त्तव्योत्साहः सूचितः । प्रमुदितैः नागरैः अवेक्षितौ सन्तौ, निजनिजं चारु निकेतनं निवासस्थानं समागतौ ॥११७॥

આમ સારી રીતે ચારણ મુનિ વડે પ્રબોધાયેલા ને શુભ મતિવાળા પ્રસન્ન થયેલા શહેરી લોકોથી જોયેલા એવા તે બન્ને રાજા જલ્દીથી પોતપોતાને ઘરે આવ્યા. ॥૧૧૭॥

अथ तयोर्दीक्षाग्रहणमाह श्लोकद्वयेन—

भक्तिपूर्वमुपहूय सर्वतः, पूज्यभावमुपनीय भावतः ।
संघमार्च्य परमं चतुर्विधं, दीनदौस्थ्यमपनीय दानतः ॥११८॥

न्यस्य राज्यमपि पुत्रयोः स्वयो—स्तौ व्रतं जगृहतुर्महीपती ।
विश्वनन्दनगुणाभिनन्दन—स्यान्तिके मुनिपतेः पितुर्गुरोः ॥११९॥

( युग्मम् । )

चतुर्विधं श्रमण-श्रमणी-श्रावक-श्राविकारूपं परममुत्तमं संघम्, सर्वतः सर्वस्मात्स्थानात् सर्वप्रकारेण वा भक्तिः प्रीतिस्तत्पूर्वं यथा स्यात्तथा, उपहूयाकार्य, भावतः सद्भावनापूर्वकम् पूज्यभावम् उपनीय तीर्थङ्करैः पूज्यस्सङ्घोऽस्माकमपि पूज्य एवेति हृदि विभाव्य आर्च्य पूजयित्वा, दानतः द्रव्यादिदानात्, दीनानां दौस्थ्यं दारिद्र्यम् अपनीय दूरीकृत्य एतेन दानबाहुल्यं सूचितम्, नान्यथा दारिद्र्यापहरणसंभव इति भावः । स्वयोः पुत्रयोः राज्यमपि न्यस्य उपनीय, तौ महीपती श्रीविजया-मिततेजसौ, पितुरर्ककीर्त्तेः गुरोर्मुनिपतेः, विश्वं नन्दयतीति विश्वनन्दना गुणाः यस्य तस्य अभिनन्दनस्य तदाख्यमुनेः अन्तिके व्रतं जगृहतुः ॥११८।११९॥

ચતુર્વિધ સંઘને ભક્તિપૂર્વક બોલાવી ભાવથી સર્વ રીતે પૂજ્ય ભાવ દેખાડી. દાન આપીને દીન દુઃખિઓનું દુઃખ દૂર કરી પોતપોતાના પુત્રને રાજ્ય આપી તે બન્ને રાજા પિતાના ગુરુને સંસાર અને આનંદ આપનાર ગુણવાળા એવા અભિનંદન મુનીશ્વર પાસે વ્રતનું ગ્રહણ કર્યું. ॥૧૧૮॥૧૧૯॥

पादपोपगमनाम्नि तस्थतु—स्तौ मुनी अनशने समाहितौ ।
अस्मरत्स्वपितरं तथास्थितः, श्रीविराजिविजयो महामुनिः ॥१२०॥

तौ मुनी श्रीविजयामिततेजसौ, पादपोपगमनाम्नि अनशने, समाहितौ सन्तौ तस्थतुः । तथास्थितः अनशनस्थितः, श्रीविराजिविजयः श्रिया विराजी शोभमानो विजयः अर्थात् श्रीविजयः महामुनिः, स्वपितरं त्रिपृष्ठवासुदेवमस्मरत् ॥१२०॥

તે બન્ને મુનિ સમાધિસ્થ થઈ પાદપોપગમન નામનું અનશન કરવા લાગ્યા, અને તે સ્થિતિમાં શ્રી વિજય રાજાએ પોતાના પિતાનું સ્મરણ કર્યું. ॥૧૨૦॥

किमनन्तरमित्याह—

तस्य ऋद्धिमधिकां विचिन्तयन्, स्वस्य किञ्चन तनीयसीं ततः ।
स्यामहं कमलया पितुः सम–स्तन्निदानमकरोदसाविति ॥१२१॥

तस्य स्वपितुः त्रिपृष्ठस्य अधिकामतिशयिताम्, ऋद्धिं विचिन्तयन् स्वस्य ततः स्वपितुः, किञ्च तनीयसीम् अल्पाम् विचिन्तयन्निति अनुषज्यते, असौ श्रीविजयः, कमलया लक्ष्म्या पितुः समस्तुल्यः अहं स्याम्, इतीत्थं तस्य निदानमकरोत् ॥१२१॥

તેની ઋદ્ધિ–પ્રભાવને અધિકને પોતાની તેથી કંઈક ઓછી વિચારીને હું લક્ષ્મી પ્રભાવથી પિતા જેવો થાઉં એમ તે રાજાએ નિયાણું કર્યું. ॥૧૨૧॥

तौ विपद्य मुनिपुङ्गवौ शुभ—ध्यानसन्ततिनिलीनमानसौ ।
प्राणतेऽनुपमऋद्धिवैभवौ, कल्प एव भवतः स्म नाकिनौ ॥१२२॥

तौ द्वौ शुभध्यानस्य सन्तत्यां परम्परायां निलीनं मग्नं मानसं ययोस्तौ तादृशौ शुभध्यान-परायणौ मुनिपुङ्गवौ श्रीविजयामिततेजसौ, विपद्य मृत्वा प्राणते तदाख्ये एव कल्पे अनुपमऋद्धिवैभवौ नाकिनौ देवौ भवतः स्म ॥१२२॥

શુભ ધ્યાનની પરંપરામાં લાગેલ મનવાળા તે બન્ને મુનીશ્વરો કાળ કરીને પ્રાણત કલ્પમાં અનુપમ ઋદ્ધિ સહિત સમૃદ્ધિવાળા એવા દેવો થયા. ॥૧૨૨॥

नन्दितादिपदसुस्थितादि— वर्त्तनामकविमानकद्वये ।
दिव्यचूल–मणिचूलसंज्ञकौ, तत्र च व्यलसतां हृतान्तरम् ॥१२३॥

तत्र प्राणते कल्पे च, नन्दितादिपदसुस्थितादिमावर्त्तनामकविमानद्वये नन्दितावर्त्ताख्ये सुस्थितावर्त्ताख्ये च विमानद्वये, दिव्यचूल–मणिचूल–संज्ञकौ, हृतमपनीतमन्तरमवकाशो यथा स्यात्तथा निरन्तरमित्यर्थः । व्यलसताम् तत्र नन्दितावर्त्ताख्ये विमाने उत्पन्नस्यामिततेजसो दिव्यचूलेति नाम सुस्थितावर्त्ताख्ये चोत्पन्नस्य श्रीविजयस्य मणिचूलेति नामाऽभूत् ॥१२३॥

અને ત્યાં નંદિતાવર્ત ને સુસ્થિતાવર્ત નામના બે વિમાનોમાં દિવ્યચૂલને મણિચૂલ નામે તે બન્ને દેવો રાગદ્વેષ રહિત થઈ વિલાસ કરવા લાગ્યા. ॥૧૨૩॥

अथ तयोस्ततः पुत्रोत्पत्तिस्थानमाह

जम्बुनामनि महान्तरीपके, प्राग्विदेहसुषमाविशेषकम् ।
श्रीजयोऽस्ति विजयः सुखास्पदं, सत्यनामरमणीयसंज्ञकः ॥१२४॥

जम्बुनामनि महान्तरीपके महाद्वीपे जम्बूद्वीपे इत्यर्थः । प्राग्विदेहस्य पूर्वमहाविदेहस्य सुषमायाः परमशोभायाः विशेषकं तिलकरूपं सुखास्पदं स्थानं सत्यं नाम यस्य स सत्यनामा अन्वर्थनामा रमणीय इति संज्ञाऽऽख्या यस्य स तथा ततः कर्मधारयः । श्रिया जयो यस्य स श्रीजयः विजयोऽस्ति ॥१२४॥

જંબુ નામે મહાદ્વીપમાં પ્રાગ્વિદેહની લક્ષ્મીના તિલક સમાન સુખની ખાણ સમાન ને યથાર્થ મનોહર નામવાળા શ્રીજયનામે વિજય છે. ॥૧૨૪॥

तत्र सैतपुलिनेऽस्ति दक्षिणे, पुण्यधाम नगरी शुभाऽभिधा ।
पश्यता शतमखेन यां मता, चक्षुषां दशशती फलोत्तरा ॥१२५॥

तत्र रमणीये विजये दक्षिणे सैतपुलिने सीतायाः सीतानद्याः इदं सैतं च तत्पुलिनं सैतपुलिनं तस्मिन् पुण्यस्य धामास्पदम्, शुभाभिधा नगरी अस्ति, यां शुभानाम्नीं नगरीं पश्यता शतमखेनेन्द्रेण, चक्षुषां स्वनेत्राणां दशशती सहस्रम्, फलोत्तरा सफला मता मानिता, नेत्रद्वयस्य तन्नगरनिरीक्षणेऽपर्याप्तत्वान्नेत्रबाहुल्येन सामस्त्येन तन्नगरवीक्षणात्साफल्यमिति भावः ॥१२५॥

ત્યાં સીતા નદીને દક્ષિણ કાંઠે પુણ્યનું સ્થાન સમાન શુભા નામે નગર છે. જેને જોતાં ઈન્દ્ર પોતાની હજાર આંખને સફળ માને છે. ॥૧૨૫॥

सङ्गरप्रहतशत्रुसन्ततिः, सत्यसङ्गरशिरोऽवतंसकः ।
अन्वशान्नयसुधांशुसागर—स्तां चिरं स्तिमितसागरः प्रभुः ॥१२६॥

सङ्गरे युद्धे प्रहता शत्रूणां सन्ततिर्येन स तादृशः, तथा, सत्यसंगरेषु सत्यप्रतिज्ञेषु शिरोऽवतंसकः मुकुटस्वरूपः पुरुषोत्तमः, नयः नीतिरेव सुधांशुश्चन्द्रस्तस्य सागर इव प्रवर्त्तकः स्तिमितसागरः तन्नामा प्रभुः राजा, तां नगरीं चिरमन्वशात् ॥१२६॥

તે નગરમાં લાંબા કાળથી, યુદ્ધમાં શત્રુ સમૂહનો નાશ કરનાર સત્ય પ્રતિજ્ઞા વાળાઓના શિરોમણિ સમાન ને નીતિરૂપી ચંદ્રમાના સમુદ્ર જેવા સ્તિમિતસાગર નામે રાજા રાજ્ય કરતો હતો. ॥૧૨૬॥

द्वे प्रिये अभवतां वसुन्धरा–ऽनुद्धरा च किल तस्य भूपतेः ।
प्रीतिरत्यभिधयैव विश्रुते, संवरद्विष इव प्रिये हृदः ॥१२७॥

तस्य भूपतेः वसुन्धरा तन्नाम्नी, अनुद्धरा तन्नाम्नी च, द्वे प्रिये भार्ये, संवरद्विषः कामस्य, प्रीतिरत्यभिधया एव विश्रुते ख्याते प्रीतिरतिनाम्न्यौ, हृदः प्रिये इव, अभवताम् । उपमा ॥१२७॥

તે રાજાની કામદેવની પ્રસિદ્ધ રતિમે પ્રીતિ નામની પત્નીની જેમ અત્યન્ત પ્રિય એવી વસુન્ધરાને અનુદ્ધરા નામે બે પત્નીઓ હતી. ॥૧૨૭॥

स्वीयमायुरुपभुज्य नन्दिता—वर्तनामकमहाविमानतः ।
जन्तुरप्यमिततेजसश्च्युतः, संजगाम महिषीं वसुन्धराम् ॥१२८॥

स्वीयमायुरुपभुज्य नन्दितावर्तमहाविमानतः च्युतः, अमिततेजसः जन्तुः जीवः, वसुन्धरां महिषीं संजगाम प्राप, तत्कुक्षाववातरदित्यर्थः ॥१२८॥

નંદિતાવર્ત નામના મહાવિમાનથી પોતાની આયુ ભોગવી અમિતતેજનો જીવ આવીને રાણી વસુન્ધરાનાં ઉદરમાં ગયો. ॥૧૨૮॥

सा सुखेन शयिता सुलक्षणा, तत्क्षणं प्रविशतो मुखान्तरे ।
स्वप्नकांश्चतुर ऐक्षतोपदा—लम्भितानिव चतुर्दिगीश्वरैः ॥१२९॥

सुखेन शयिता सा वसुन्धरा सुलक्षणा, तत्क्षणं तस्मिन्काले, मुखान्तरे मुखमध्ये, प्रविशतः, चतुरः चतुःसंख्याकान्, स्वप्ना एव स्वप्नकास्तान् बलदेवजन्मसूचकान् चतुर्दिगीश्वरैः चतुर्भिर्दिक्पालैः उपदासु लम्भितान् प्रापितान् उपहृतानिव ऐक्षत । उत्प्रेक्षा ॥१२९॥

સારા લક્ષણોવાળીને સુખે સુતેલી તે રાણીએ ચાર દિક્પાલો ચાર ઉપહારો આપ્યા હોય તેમ સ્વપ્નમાં ચાર સ્વપ્નો મુખમાં પ્રવેશતા જોયાં. ॥૧૨૯॥

तद्विलोकनसमनन्तरं प्रिया—ऽजागरीन्नरपतेः शशंस च ।
ईदृशां मम फलं नु किं विभो !, स्याच्छुभं तदितरत्नवेति सा ? ॥१३०॥

तस्य स्वप्नस्य विलोकनस्य दर्शनस्य समनन्तरमनन्तरमेव प्रिया वसुन्धरा, अजागरीत्, नरपतेस्तथा शशंस कथयामास, विभो ! ईदृशां स्वप्नानां फलं मम स्यात्तथा, स्याच्चेत्, शुभं किं नु अथवा, तदितरदशुभम्, इति शशंसेत्यर्थः ॥१३०॥

તે જોયા પછી તે જાગી જઈને રાજાને તે કીધું ને પૂછ્યું કે હે રાજા આવા સ્વપ્નોનું શુભ ફળ થશે કે અશુભ ? ॥૧૩૦॥

अथ स्वप्नस्वरूपमाह—

अभ्रमुप्रियतमो विलोकितः, कीर्त्तिराशिरिव मूर्त्तिमाश्रितः ।
जङ्गमस्तुहिनकाश्यपीधरः, शृङ्गपाटिततटो वृषोऽपि च ॥१३१॥

मूर्तिमाश्रितः कीर्त्तिराशिरिव अभ्रमोः प्रियतमः ऐरावतः, जङ्गमः संचरन्, तुहिनस्य हिमस्य काश्यपीधरः पर्वतः हिमाचलः, स इव तत्सदृश इत्यर्थः स क इत्याशङ्कायां विशेष्यमाह—शृङ्गाभ्यां कृत्वा पाटितं विदारितं तटं नद्यादेः कूलं येन तादृशः वृषः बलीवर्दः अपि च विलोकितः, स्वप्ने इति शेषः द्वयोरभ्रमुवल्लभवृषभयोरुज्ज्वलत्वान्मूर्त्तिमत्कीर्तिराशित्वेनोत्प्रेक्षा इति बोध्यम् ॥१३१॥

शीतरश्मिरथ पूर्णमण्डलो, विश्वतापमपसारयन्निव ।
स्वच्छनीरनिकरैः प्रपूरितं, पद्मराजिरुचिरं महासरः ॥१३२॥

अथ पुनश्च, विश्वस्य जगतः तापम् अपसारयन् दूरीकुर्वन्निव कल्प्यमानः, पूर्णमण्डलः शीत-रश्मिश्चन्द्रः, स्वच्छैः नीराणां जलानां निकरैः राशिभिः कृत्वा प्रपूरितं तथा पद्मानां राज्या श्रेण्या कृत्वा रुचिरं मनोहरं महासरः लिङ्गव्यत्ययेन विलोकितमिति पूर्वेणान्वयः ॥१३२॥

યશનો સમૂહ મૂર્તિમાન હોય તેમ ઐરાવત હાથી જોવાયો છે ને હાલતો ચાલતો હિમાલય પર્વત હોય તેવોને શીંગડાથી નદીના તટને ઉખેડતો બળદ અને સંસારના તાપને દૂર કરતો હોય તેવો પૂર્ણમંડલ-વાળો ચંદ્રમા તથા સ્વચ્છ પાણીથી ભરેલો ને કમળ સમૂહથી શોભતો એવો મોટા તળાવ સ્વપ્નમાં જોયો હતો. ॥૧૩૧॥૧૩૨॥

तन्निवेदितमिदं हृदि क्षणं, संप्रधार्य नृपतिर्बभाण सः ।
देवि ! वैरिबलजित्वरो बलः, संभविष्यति भवत्तनूभवः ॥१३३॥

तया वसुन्धरया निवेदितमिदमुक्तम् हृदि क्षणं संप्रधार्य विचार्य, स नृपतिः बभाण, किमित्याह—देवि ! वैरिणां बलानां सत्त्वानां सेनानां च जित्वरः जेता, बलः बलवान् भवत्यास्तनूभवः पुत्रः संभविष्यति ॥१३३॥

તેણીએ કીધેલું આ બધુ ક્ષણવારમાં વિચારી રાજાએ કીધું કે હે દેવી ! તમને શત્રુ સેનાના જીતનાર એવા બળવાન પુત્ર થશે. ॥૧૩૩॥

भूमिपालवचनं मनोरमं, संनिधाय हृदि सांशुकाञ्चले ।
एवमस्त्विति निवेदनोन्मुखी, ग्रन्थिमेव निबबन्ध हर्षतः ॥१३४॥

मनोरमं प्रियं भूमिपालवचनं हृदि सन्निधाय मनसि कृत्वा एवं भवदुक्तप्रकारमस्त्विति निवेदनेन कृत्वा उन्मुखी सोत्सुका सा वसुन्धरा, हर्षतः, अंशुकस्य परिहितसूक्ष्मवस्त्रस्याञ्चले प्रान्ते ग्रन्थिमेव निबबन्ध । शुभं श्रुत्वा हि तदस्त्विति धिया यावत्फलप्राप्ति स्त्रियः वस्त्राञ्चले ग्रन्थिं निबध्नन्तीत्याचारादिति भावः ॥१३४॥

રાજાનો આવો મનોહર વચન સાંભળી મનમાં એમ જ થાઓ, એમ મનાવતી ખુશિથી તે રાણીએ પોતાના વસ્ત્રના આમ સમાં ગાંઠ બાંધિ. ॥૧૩૪॥

तत्प्रभृत्यपि नरेश्वरप्रिया, गर्भमेव बिभराम्बभूव सा ।
अर्थजातमिव नीतिरुज्झिता, धर्मबुद्धिरिव तत्त्वमान्तरम् ॥१३५॥

तत्प्रभृत्यपि तदारभ्यैव, नरेश्वरप्रिया सा वसुन्धरा, गर्भम्, उज्झिता त्यक्ता उदारा नीतिः, अर्थजातं वित्तराशिमिव, नीचा नीतिस्तु वित्तनाशायैवेति भावः । आन्तरं हृद्गतं तत्त्वं ज्ञानम्,

धर्मबुद्धिरिव, धर्मबुद्धिर्यथा आन्तरं तत्त्वम् आत्मरहस्यं बिभर्ति तथेत्यर्थः, बिभराम्बभूव दधौ । मालोपमालङ्कारः ॥१३५॥

त्यारथी मांडीने ज ते राजानी पत्नी, जेम उत्तम नीति अर्थनुं ने धर्मबुद्धि आत्मतत्त्वनुं धारण करे छे तेम गर्भनुं धारण कर्युं. ॥१३५॥

गौरवर्णपरिपूर्णविग्रहं, कामपालकलिताग्र्यलक्षणम् ।
सन्निधानमिव सा वसुन्धरा, पुत्रमप्यजनयद्वसुन्धरा ॥१३६॥

सा वसुन्धरा गौरेण वर्णेन परिपूर्णः, यद्वा गौरः वर्णः यस्य स तादृशः, परिपूर्णः अविकलश्च विग्रहः शरीरं यस्य स तं तादृशम्, अत एव, कामपालः हलायुधः कृष्णज्येष्ठभ्राता 'कामपालो हलायुधः' इत्यमरः । तस्य कलितं धृतमग्र्यं मुख्यं लक्षणं येन तं तादृशम्, कामपालस्य गौरवर्णत्वादिप्रसिद्धेरिति भावः । पुत्रं वसुन्धरा पृथिवी, सन्निधानम्, अमूल्यनिधिमिव अजनयत् सूते स्म । उपमा ॥१३६॥

अने ते वसुन्धरा देवी पृथ्वी उत्तम रत्नने उत्पन्न करे तेम गोरवर्ण ने संपूर्ण अंगवाळाने बलभद्रना मुख्य लक्षणोथी युक्त एवा पुत्रनो जन्म पण आप्यो. ॥१३६॥

चेटिकाभिरभिवर्धितो नृप—स्तस्य जन्मनि परप्रमोदतः ।
निर्विकल्पमविकल्पितं परं, कल्पवृक्ष इव काङ्क्षितं ददौ ॥१३७॥

तस्य पुत्रस्य जन्मनि जन्मनिमित्तं चेटिकाभिः दासीभिः, अभिवर्धितः कृतवर्धापनः नृपः कल्पवृक्ष इव, कल्पवृक्षतुल्यः नृपः, परं किन्तु, अविकल्पितं याचनं विनैव, कल्पनाया अविषयं वा प्रचुरमित्यर्थः, अत्र च पक्षे परमित्यस्य अतिशयेनोत्कृष्टं वाऽर्थः । निर्विकल्पं देयमेतन्नवेत्यादिविकल्पम-कृत्वैव, काङ्क्षितमिष्टं च ददौ । एतेन तस्य दानशौण्डत्वं दानातिशयं च ध्वन्यते, हर्षाद्धि लोकः सर्वस्वमपि दातुमुत्सहते इति भाव. ॥१३७॥

चेटिका वडे दासीओ वडे वधायेला राजाए ते बाळकनो जन्म थये छते अत्यंत हर्षथी विचारणा कर्या शिवाय मांग्या वगर ज जेने जे ईष्ट हतुं ते कल्पवृक्षनी जेम आप्युं. ॥१३७॥

द्वादशापि दिवसेश्वरानसौ, भूपतीनपि महौजसा सुतः ।
जेष्यतीति नृपतिर्विनिर्ममे, द्वादशेऽह्नि किल नाम्न उत्सवम् ॥१३८॥

सुतः महता ओजसा बलेन प्रतापेन च द्वादश अपि, न त्वेकं द्वावेव वा, ओजसः महत्त्वादिति भावः । दिवसेश्वरान् सूर्यान्, पुराणादौ सूर्यस्य द्वादशात्मतया वर्णनादिति भावः । भूपतीनपि अनेकान् राज्ञश्च, नतु कतिपयानेव, ओजसः महत्त्वादेवेति भावः, जेष्यति अभिभविष्यति, इति बुद्ध्वा, नृपतिः स्तिमितसागरः, द्वादशेऽह्नि दिने, एकादशे द्वादशे वाह्नि पिता नाम कुर्यादित्युक्तेरिति भावः । नाम्नः नामकरणस्य, उत्सवं विनिर्ममे चकार, किलेत्यैतिह्ये ॥१३८॥

आ बाळक पोताना महान् बळ तेजथी बारहे सूर्यने राजाओने जीतशे. मारे राजा बारमे दिवसे, तेनो नामकरणोत्सव कर्यो. ॥१३८॥

उत्सवे बहुविधे प्रसर्पति, प्रीतिपूर्वमपराजिताभिधा ।
भूभुजाऽस्य विदधे समन्ततो, द्वेषिभूपतिभयैककारणम् ॥१३९॥

बहुविधे नैकप्रकारे उत्सवे प्रसर्पति जायमाने सति भूभुजा राज्ञा स्तिमितसागरेण प्रीतिः पूर्वं यथा स्यात्तथा, सहर्षमित्यर्थः । अस्य शिशोः समन्ततः सर्वतोभावेन, द्वेषिणः शत्रवो ये भूपतयस्तेषां भयस्य एकं प्रधानं कारणम्, नामश्रवणादेव भयं यथा स्यादिति भावः, अपराजित इत्यभिधा नाम, विदधे चकार ॥१३९॥

અનેક પ્રકારના ઉત્સવો થયે છતે, રાજાએ હર્ષપૂર્વક સર્વ રીતે શત્રુ રાજાઓને ભય પમાડે એવું અપરાજિત એવું નામ કર્યું. ॥૧૩૯॥

अथ श्रीविजयजीवावतारमाह—

प्राणतत्रिदिवतोऽवतीर्णके, जीव एव विजयस्य राट्प्रिया ।
स्वप्नसप्तकमवैक्षतापरा, पुण्यगर्भमहिमानुभावतः ॥१४०॥

प्राणताख्यात् त्रिदिवतः दशमदेवलोकात् विजयस्य श्रीविजयस्य जीवे अवतीर्ण एवावतीर्णकः तस्मिन्, अवतीर्णमात्र एव, पुण्यस्य पुण्यप्राप्तस्य उत्तमजीवाश्रयत्वेन पवित्रस्य वा गर्भस्य महिम्नः प्रभावस्य अनुभावतः अपरा अन्या राट्प्रिया राज्ञी अनुद्धरा, स्वप्नसप्तकं सप्त स्वप्नानवैक्षत ॥१४०॥

પ્રાણત કલ્પથી શ્રી વિજયનો જીવ અવતર્યે છતે, રાજાની બીજી સ્ત્રી અનુદ્ધરાએ પવિત્ર ગર્ભના મહિમાના પ્રભાવે સાત સ્વપ્નો જોયા. ॥૧૪૦॥

अथ वासुदेवजन्मसूचकान् सप्त स्वप्नानेव क्रमशो वर्णयति—

केसरी प्रथममेव बूत्कृतै-र्दिग्गजानपि विभीषयन् शुभः ।
शारदेन्दुकरराशिकेशर-श्चञ्चलाचलविलोचनाञ्चलः ॥१४१॥

प्रथममादावेव, बूत्कृतैः सिंहनादैः, दिग्गजान् अपि किमुतान्यानित्यपि शब्दार्थः । विशेषेण भीषयन्, शारदेन्दोः शरच्चन्द्रस्य कराणां मयूखानां राशिरिव धवलाः केसराः सटाः यस्य स तादृशः, चञ्चला विद्युत् सेव चले इतस्ततो घूर्णिते विलोचनयोर्नयनयोरञ्चलौ प्रान्तभागौ यस्य स तादृशः, दर्पोद्धुरः विचिक्रमिषुश्चेत्यर्थः, अत एव शुभः शुभलक्षणान्वितः शुभफलापादकश्च, केशरी सिंहः, दृष्ट इति शेषः, स्वप्ने इति च ॥१४१॥

क्षीरनीरनिधिनन्दना ततः, क्षीरनीरनिचयैर्मतङ्गजैः ।
पार्श्वतो विरचिताभिषेचना, पद्मपीठविनिवेशितक्रमा ॥१४२॥

ततः केसरीदर्शनानन्तरम्, पद्मं कमलमेवासनत्वात्पीठमासनं तत्र विनिवेशितौ स्थापितौ क्रमौ चरणौ यया सा तादृशी, पद्मासनासीनेत्यर्थः । तथा पार्श्वतः उभयतः मतङ्गजैः क्षीरनीरनिचयैः कृत्वा, विरचितं कृतमभिषेचनमभिषेको यस्याः सा तादृशी कृताभिषेका, क्षीरनीरनिधेः क्षीरसमुद्रस्य नन्दना पुत्री लक्ष्मीरित्यर्थः, स्वप्ने ददृशे इति शेषः ॥१४२॥

चक्रवाकमिथुनानि हर्षयन्, पद्मजातिमभितो विकासयन् ।
सर्वशोऽपि ककुभः प्रकाशयन्, संहरंश्च तिमिराण्यहर्पतिः ॥१४३॥

तिमिराणि अन्धकारान्, संहरन्, नाशयन्, अत एव सर्वशः साकल्येन अपि ककुभः दिशः प्रकाशयन्, पद्मजातिं पद्मानां या या जातिस्तां सर्वजातीयपद्मानि अभितः सर्वतः विकासयन्, चक्रवाकमिथुनानि, संयोगापादनात् हर्षयन् अहर्पतिः सूर्यश्च स्वप्ने दृष्ट इति शेषः ॥१४३॥

पद्मिनीदलगताम्बुमौक्तिक—क्षोदनिर्मलजलौघपूरितः ।
कण्ठदेशनिहिताम्रपत्रकः, पूर्णपूर्णकलशोऽथ शोभितः ॥१४४॥

अथानन्तरम्, पद्मिन्याः दले पत्रे गतानि स्थितानि यानि अम्बूनि जलबिन्दवः तद्वन्मौक्तिकानां क्षोदः चूर्णं तद्वत् निर्मलानां जलानामोघैः समूहैः पूरितः, कण्ठदेशे कण्ठौ निहितानि धृतानि आम्राणां पत्राणि एव पत्रकाणि यस्य स तादृशः, अत एव शोभितः, पूर्णः पूर्णकलशः स्वप्ने दृष्ट इति शेषः ॥१४४॥

वाहिनीभिरधिकं समाश्रितः, सार्वभौम इव जीवनाश्रयः ।
आगताभिरतिसारसद्रसैः, सत्त्वमादधदपांनिधिस्ततः ॥१४५॥

ततः कलशविलोकनानन्तरम्, आगताभिः वाहिनीभिः नदीभिः सेनाभिश्च अधिकमतिशयेन समाश्रितः मिलितः परिवेष्टितश्च जीवनानां जलानां प्राणवृत्तीनां च आधारत्वने पालकत्वेन च आश्रयः अवलम्बः अति अत्यन्तसारा बलाधायकद्रव्यविशेषाः अत्यन्तं निर्मलत्वादिभिः कृत्वा श्रेष्ठाश्च ये सद्रसाः उत्तमाः रसाः जलानि, रसायनानि च, तैः कृत्वा सत्त्वं बलं गम्भीर्यं यादांसि च, आदधत् धारयन्, अत एव, सार्वभौमः चक्रवर्ती स इव, अपांनिधिः समुद्रः स्वप्ने ददृशे इति शेषः ॥ श्लेषोत्थापितोपमा ॥१४५॥

रत्नराशिरथ तेजसां भरै—र्ध्वान्तसंहतिविधूननक्षमः ।
द्वादशार्कमहसां समुच्चयः, किं न्वयं समुदितो मुखाशया ? ॥१४६॥

अथानन्तरम्, तेजसां भरैस्समूहैः कृत्वा, ध्वान्तानां तमसां संहतेः समूहस्य विधूनने नाशने क्षमः समर्थः, रत्नानां राशिः, स्वप्ने ददृशे इति शेषः । रत्नराशितेजास्येवोत्प्रेक्षते—द्वादशार्काणामेव महसां तेजसां समुच्चयः राशिः, मुखं प्रथमं पूर्वमिति यावत्, मुखशब्देन पूर्वा दिग्गृह्यते, दिग्गणने प्राथम्येन तस्या एवोपादानात, तया आशया दिशा 'दिशस्तु ककुभः काष्ठा आशाश्चेत्य' मरः । पूर्वतः इत्यर्थः । अयं रत्नराशिः समुदितः उदयं गतः, किं नु ! उत्प्रेक्षे इत्यर्थः । न हीमानि रत्नराशितेजांसि, किन्तु द्वादशसूर्यतेजांस्येवेति संभावयामीत्यर्थः ॥१४६॥

ज्वाल्यकालकमनीयसंगमः, सत्यनिर्मथितदाहशक्तिकः ।
ज्वालजालकलितान्तरिक्षको, धूमसङ्गविकलो विभावसुः ॥१४७॥

जाड्यकाले हेमन्तादौ कमनीयोऽभिलषणीयः जाड्यनाशकत्वात्संगमः, सम्बन्धः, सेवनमिति यावत्, यस्य स तादृशः, यदुक्तं शीतकालमुपलक्ष्य—

"प्रलोभयति कामिनीस्तन इवास्तधूमोऽनलः" इति । सत्येन निर्मथिता तिरस्कृता दाहशक्तिर्यस्य स तादृशः, दिव्यप्रयोगादौ हि सत्याश्रितो नाग्निना दह्यते इति भावः । ज्वालस्य शिखायाः जालेन विस्तारेण कृत्वा कलितं व्याप्तमन्तरिक्षमाकाशं येन स तादृशः जाज्वल्यमानः, अत एव, धूमस्य संगेन विकलः निर्धूम इत्यर्थः, विभावसुः अग्निः, स्वप्ने ददृशे इति शेषः ॥१४७॥

स्वप्नसन्ततिमिमां विलोक्य सा–ऽनुद्धरा प्रमुदिता समुत्थिता ।
लक्षरत्नमिव रङ्ककामिनी, प्रेयसे सरभसं व्यजिज्ञपत् ॥१४८॥

लक्षं लक्षमूल्यकं रत्नम्, रङ्कस्य दरिद्रस्य कामिनी भार्या इव, एतेन स्वप्नानामतिप्राबल्यमतिहर्षप्रदत्वं चोक्तम्, इमां प्रागुपवर्णिताम्, स्वप्नानां सन्ततिं परम्पराम् विलोक्य, समुत्थिता प्रबुद्धा प्रमुदिता अतिहर्षं गता सा अनुद्धरा, सरभसं झटित्येवौत्सुक्यादिति भावः । प्रेयसे पत्ये व्यजिज्ञपत् कथयामास ॥१४८॥

પહેલા પોતાની ગર્જનાથી દિગ્ગજોને પણ ભય પમાડતો એવો સિંહ શરદ ઋતુના ચંદ્રમાનાં કિરણ સમૂહ સમાન કેસરાવાળો સ્થિરનેત્ર ને ફરતા કટાક્ષવાળો સિંહ પછી. કમલનાં આસન ઉપર મૂકેલી પગ વાળીને બન્ને બાજુથી હાથીઓ વડે દૂધને પાણીથી અભિષેક કરાતી તીજો. ચક્રવાક પક્ષીના જોડવીને ખુશ કરતો કમલ સમૂહોને વિકસાવતો સર્વ દિશાઓને પ્રકાશિત કરતો જે અન્ધકાર ના સમૂહને નાશ કરતો સૂર્ય ચોથો. કમલિની પત્ર પર રહેલા પાણી જેવા મોતીના ચૂર્ણ જેવા નિર્મળ જળોથી ભરેલો ને કંઠમાં આંબાના પત્રોથી શોભતો એવો શોભાયમાન ભરેલો પૂર્ણ કલશ પાંચમો સેનાઓ વડે જીવનદાતા ચક્રવર્તી રાજાની જેમ. જીવન પાણીના આશ્રય એવી નદીઓ સવિશેષપણાએ આશ્રિત ને આવેલા એવા. અતિશય નદીઓના પાણીથી પોતાના સત્ત્વ–મહાસત્ત્વનું ધારણ કરતો છઠ્ઠું મુખરૂપી દિશાથી બારહ સૂર્યના તેજનો ઢગલો ઉગ્યો હોય. તેવો પોતાના તેજ સમૂહોથી અન્ધકાર સમૂહોના નાશ કરવામાં સમર્થ એવો રત્નપુંજ, સાતમો શિયાળાના સમયમા જેનુ સેવન પ્રિય છે ને સત્યના પ્રભાવે જેની દાહ શકતી ઠંડી પડિ ગઈ હોય તે જ્વાલાના સમૂહથી આકાશમાં વ્યાપેલો ધુમાડા રહિત એવો અગ્નિ, આમ આ સાતે સ્વપ્ન સમૂહોને ગરિબ સ્ત્રી લાખો રત્નોની જેમ જોઈ જાગેલી તે અનુદ્ધરા, ખુશ થઈ ઉતાવળથી પતિને જણાવ્યું. ॥૧૪૧–૨–૩–૪–૫–૬–૭–૮॥

अङ्गकं पुलकितं दधन्नृप–स्तन्निशम्य स जगौ प्रियामिति ।
स्वप्नलब्धिविनिवेदितागमः, केशवस्तव सुतो भविष्यति ॥१४९॥

तत्स्वप्नवृत्तान्तं निशम्य, नृपः हर्षात् पुलकितं रोमाञ्चितम् अङ्गमेवाङ्गकं दधत्, प्रियाम् इति वक्ष्यमाणप्रकारेण जगौ । इतीति किमित्याह—तव स्वप्नानां लब्धिर्लाभः दर्शनमिति यावत्, तया कृत्वा, विनिवेदितः सूचितः आगमोऽवतारो येन स तादृशः, केशवः विष्णुः सुतो भविष्यतीति ॥१४९॥

તે સાંભળી અંગોમાં રોમાંચ અનુભવતો રાજાએ પ્રિયાને કીધું આ સ્વપ્ન લાભથી જણાવ્યું છે. પોતાનું આગમન જેણે એવા વાસુદેવ તમારો પુત્ર થશે. ॥૧૪૯॥

मेरुभूमिरिव कल्पशाखिनं, श्यामलं सुतमसूत सा सुखम् ।
भाग्यभङ्गिलतितात्मनां नृणां, न प्रसूतिजमसं प्रसूः श्रयेत् ॥१५०॥

मेरुभूमिः कल्पशाखिनं कल्पवृक्षमिव, स अनुद्धरा, सुखमक्लेशं यथा स्यात्तथा, श्यामलं श्यामवर्णं सुतमसूत। ननु प्रसवे दुःखावश्यंभावात् सुखमिति कथमिति चेत्तत्राह—भाग्यस्य भंग्या वैचित्र्येण वैलक्षण्येन कृत्वा कलितः सुसम्पन्न आत्मा येषां तेषां भाग्यशालिनां नृणाम्, प्रसूः जननी प्रसूतिजम् 'आमनस्यं प्रसूतिजम्' इत्यमरः। अशं दुःखं न श्रयेत् श्रयते ॥१५०॥

મેરુ પર્વતની ભૂમિ કલ્પવૃક્ષને જેમ, તે અનુદ્ધરા શ્યામવર્ણ પુત્રને સુખથી જન્મ આપ્યો, ઉત્તમ ભાગ્યશાલી મનુષ્યોની માતા પ્રસુતિ કષ્ટને પ્રસવ પીડાને પામતી નથી. ॥૧૫૦॥

मागधा द्रविणमापुरीप्सितं, गायनाश्च विपुला अलङ्कृतीः ।
प्रीणिताद्मरपतेः सुतोद्भवात्, शर्मणे न खलु कस्य तादृशः ? ॥१५१॥

सुतोद्भवाद्धेतोः प्रीणितात्प्रसन्नान्नरपतेः सकाशात्, मागधाः मङ्गलपाठकाः ईप्सितम् द्रविणं धनं गायनाः नर्त्तकादयश्च विपुलाः बह्वीः अलङ्कृतीः भूषणान्यापुः प्रापुः, तादृशः सुतोद्भवः प्रीणितो नरपतिश्च, कस्य शर्मणे सुखाय, न खलु ! अपि तु सर्वस्यैव सुखाय कल्पते इत्यर्थः ॥१५१॥

પુત્રના જન્મથી ખુશ થયેલા રાજા પાસેથી ભાટ ચારણોને ઇચ્છા પ્રમાણે દ્રવ્ય ધનો મેળવ્યાં ને ગાયકો ઘણાં અલંકારો મેળવ્યા તેવો બાલક કોના કલ્યાણ માટે નથી થતો ? બધાના જ કલ્યાણ માટે થાય છે. ॥૧૫૧॥

वेदशास्त्रयुगलेन वा बुध-श्चन्द्रसूर्ययुगलेन वा नभः ।
अर्थकामयुगलेन वा वृष-स्तद्द्वयेन नृपतिर्व्यभूष्यत ॥१५२॥

वेदस्य शास्त्रस्य मन्वादिस्मृतेश्च युगलेन द्वयेन, बुधः पण्डितः, वा इव, "व वा यथा तथा वैवं साम्ये" इत्यमरः, चन्द्रसूर्ययुगलेन, नभो वा आकाशमिव, अर्थकामयुगलेन, वृषः गृहस्थधर्मो वा, तयोः पुत्रयोः द्वयेन, नृपतिः व्यभूष्यत शोभते स्म ॥१५२॥

જેમ વેદ ને શાસ્ત્ર આ બેથી પંડિત ચંદ્રમાને સૂર્ય આ બેથી આકાશ અર્થ અને કામ આ બેથી ધર્મ ભૂષિત થાય, તેમ તે બે પુત્રોથી રાજા ભૂષિત થયો. ॥૧૫૨॥

तस्य नाम विदधे महीभुजा-ऽनन्तवीर्य इति सान्वयं मुदा ।
भावि यादृशमहो ! शरीरिणां, तादृशं भवति चेष्टितं पुरा ॥१५३॥

महीभुजा स्तिमितसागरेण मुदा सहर्षम्, तस्य पुत्रस्य अनन्तवीर्य इति सान्वय मन्वर्थं नाम विदधे, अहो इत्याश्चर्ये, शरीरिणाम् यादृशं भावि, तादृशं पुरा प्रथमत एव, चेष्टितं व्यापारः भवति ॥१५३॥

મહાબળી એવા રાજાએ હર્ષથી તેનું અનન્તવીર્ય એવું યથાર્થ નામ આપ્યું કેમકે પ્રાણીઓને જેવું ભાવિ હોય છે. પહેલાથી જ તેવી ચેષ્ટાઓ થાય છે. ॥૧૫૩॥

अङ्कतोऽङ्कमुपयातुमुद्यतौ, बालिकाभिरवनीभुजामिमौ ।
पाल्यमानवपुषौ प्रयत्नतो, वृद्धिमापतुरथ क्रमेण तौ ॥१५४॥

अथानन्तरम्, बालिकाभिः बालचेष्टाभिः कृत्वा, अवनीभुजाम् सामन्तनृपाणाम्, अङ्कतः क्रोडतः एकस्मात् अङ्कमपरमुत्सङ्गमुपयातुमुद्यतावुत्सहमानौ बालानामेष स्वभाव इति भावः । तौ इमौ अपराजितानन्तवीर्यौ, प्रयत्नतः पल्यमानवपुषौ सन्तौ, क्रमेण वृद्धिमापतुः ॥१५४॥

એક ખોલામાથી બીજા ખોલામા જવાને તત્પર એવા રાજાના આ બે બાલકો ધાવમાતાની નજરે શરીરનુ પાલન કરાતા ક્રમે ક્રમે વધવા લાગ્યા. ॥૧૫૪॥

कामपाल–गरुडध्वजाविमौ, श्वेतकृष्णवपुषौ विरेजतुः ।
संगतावधिकहार्दतो मिथः, क्षीरवार्धिलवणाम्बुधी इव ॥१५५॥

इमौ अपराजिता-नन्तवीर्यौ, श्वेतं गौरं कृष्णं कृष्णवर्णं च वपुः ययोस्तौ तादृशौ, कामपालः बलदेवः गरुडध्वजः गरुडो ध्वजे यस्य स तथा विष्णुः वासुदेव इति यावत्। द्वयोरपि तयोः गौर-कृष्णवर्णत्वादिति भावः । विरेजतुः शुशुभाते, तथा अतिहार्दतः अतिशयप्रेम्णा "प्रेमा ना प्रियता हार्दम्" इत्यमरः । मिथः परस्परं संगतौ एकत्र क्षीरेण गौरत्वमपरत्र निर्मलजलेन नीलिमा इति हेतोरिति भावः, विरेजतुरिति सम्बध्यते । उपमाऽलङ्कारः ॥१५५॥

ગોરને કૃષ્ણ વર્ણવાળા આ બન્ને બલભદ્રને વાસુદેવ અત્યન્ત પ્રેમથી ભેગા થયેલા ક્ષીરસમુદ્રને ક્ષાર સમુદ્રની જેમ શોભતા હતા. ॥૧૫૫॥

उद्भवैः शुभदिने समर्पितौ, तौ कलागुरुरशिक्षयत्कलाः ।
स्थान एव विनयो नियोजितः, किं करोति न मनीषितं नृणाम् ? ॥१५६॥

कलागुरुः पण्डितः, शुभदिने, उद्भवैः उत्सवपूर्वकम् "मह उद्धव उत्सवः" इत्यमरः । समर्पितौ शिक्षणार्थं दत्तौ पित्रा, तौ अपराजितानन्तवीर्यौ, कलाः शास्त्राणि अशिक्षयत्, शिक्षायाः साफल्यं समर्थयति—स्थाने प्रतिभादिसमन्विते पात्रे एव नियोजितः निहितः, विनयनं विनयः शिक्षा, किमिति प्रश्ने, नृणां मनीषितमभिलषितं न करोति ? अपि त्ववश्यं करोति इत्यर्थः । अत एव तादृशे पात्रे शिक्षा समाप्ता सफला चेति भावः ॥१५६॥

શુભ દિનમાં ઉત્સવપૂર્વક સોંપાયેલા તે બન્ને કલાગુરુએ કલાઓનું શિક્ષણ આપ્યું અવસરે પાત્રમાં કરાયેલો વિનય મનુષ્યોને શું ઈષ્ટ નથી કરતો પણ કરે છે. ॥૧૫૬॥

रणरणकिता दृष्टौ द्रष्टुं जनो वितनोति न,
श्रयति न पुनः श्रद्धालुत्वं नरेन्द्र इलाभवे ।

मनसिजमपि क्षामच्छायं व्यनक्ति विवेकवान्,

नयनपदवीमापाद्यैतौ नराधिपनन्दनौ ॥१५७॥

एतौ नराधिपनन्दनौ राजपुत्रावपराजिता-नन्तवीर्यौ, नयनपदवीं दृष्टिगोचरमापाद्य प्राप्य विवेकवान् तारतम्यग्रहणक्षमः जनः, दस्रौ अश्विनौ सूर्यपुत्रौ देववैद्यौ, सौन्दर्येण प्रसिद्धावपि, "नासत्यावश्विनौ दस्रावाश्विनेयौ च तावुभौ" इत्यमरः । द्रष्टुम्, रणरणकितां सोत्सुकत्वं न वितनोति करोतीत्यर्थः । ततोऽप्यधिकसौन्दर्यशालित्वादनयोः, अधिकगुणे लब्धे न्यूनगुणे इच्छा निवर्तते इति भावः । पुनस्तथा इलाभवे पुरूरवसि, नरेशे चक्रवर्तिनि, "पुरूरवा बौध ऐल उर्वशीरमणश्च सः" इति हैमः । श्रद्धालुत्वम् अयमेव सर्वाधिकः सुन्दरः इति विश्वस्तत्वं न श्रयति, अनयोरपि सौन्दर्येण ततोऽन्यूनत्वादिति भावः । मनसिजं कामदेवमतिसुन्दरत्वेन विश्रुतमपि "शम्बरारिर्मनसिजः कुसुमेषुरनन्यजः" इत्यमरः । क्षामा कृशा न्यूनेति यावत्, छाया कान्तिर्यस्य, अर्थाच्चयोरेव, स तादृशस्तम्, व्यनक्ति वर्णयति । कामोऽप्यनयोः कान्त्या न्यून इत्येवं वर्णयति इत्यर्थः । अत्रोपमानभूतदस्राद्यपेक्षया अनयोराधिक्यवर्णनाद्व्यतिरेकः ॥१५७॥

આ બન્ને રાજપુત્રોને જોઈ લોકો અશ્વિનીકુમારોને જોવાની ઉત્સુકતા ધરાવતા રહ્યા નહિ. પૃથ્વી પર રહેલા રાજા વિષયે પણ શ્રદ્ધા નહિ રાખતા થયા હતા તે વિવેકીઓ કામદેવને પણ અલ્પ કાન્તિવાળા માનતા થયા હતા. ॥૧૫૭॥

सा काचिन्न नितम्बिनी समभवद्या वीक्ष्य रूपं तयोः,

पाण्डित्यं प्रकटीचकार न च तद् व्यावर्णयन्ती मुहुः ।

या तत्संगममीहते स्म न हृदा नेत्रे स्तुवाना निजे,

स्वप्ने तौ समवाप्य मोहनमयं नैवाऽऽपि सौख्यं यया ॥१५८॥

सा तादृशी काचिदपि नितम्बिनी योषा न समभवत्, सा केत्याह–या नारी तयोः कुमारयोः रूपं सौन्दर्यं वीक्ष्य मुहुर्वारंवारं, तद्रूपं व्यावर्णयन्ती पाण्डित्यं निजवाचः पटुतां न च प्रकटीचकार, सर्वाऽपि ताववर्णयदित्यर्थः । अतिदर्शनीयत्वेन हृद्यत्वादिति भावः । तथा या निजे स्वकीये नेत्रे यदेतौ दृष्टावित्येवं वर्णयन्ती, हृदा मनसा, तयोः संगमपि न ईहतेऽभिलषते स्म, भुवनमोहिनी तयोः सुन्दरतेति सर्वाऽपि तत्राकृष्टा इति भावः । सा न समभवदित्यत्रापि सम्बध्यते । तथा, यया नार्या स्वप्ने तौ कुमारौ समवाप्य मोहनमयं मोहनात्मकं कामक्रीडादिरूपं, सौख्यं सुखं नैव आपि प्रापि, सा न समभवदित्यन्वयः, तयोराकृष्टा तद्गतमनसा सुप्ता सर्वापि स्वप्ने तौ प्राप्य मनोऽनुकूलं सुखमनुभवति स्म । जाग्रदनुभूतमेव प्रायः स्वप्नेऽनुभूयते इति भावः । एतेन तयोः सौभाग्यगुणवत्तोक्ता ॥१५८॥

એવી કોઈ સ્ત્રી નહિ હોય જેણી એ તે બન્ને રાજપુત્રોનું રૂપ જોઈ તેને વર્ણવતી પોતાની ચતુરાઈ પ્રગટ કરતી ન હોય, અને પોતાના બન્ને નેત્રો ને વખાણતી છતી તેના અંગ સંગની ઈચ્છા ન કરતી હોય કે સ્વપ્નમાં તેને પામી મોહજનિત સુખ ન પામી હોય. ॥૧૫૮॥

नृपः स्तिमितसागरः समवलोक्य धानुष्कतां,
तयोर्निजकुमारयो रतिकुमारसंवादयोः ।
अमन्यत न कञ्चन प्रबलमेव विद्वेषिणं,
विलक्षमतिमार्गणं गुणविमुक्तिबद्धादरम् ॥१५९॥

स्तिमितसागरः नृपः, तयोः रतिकुमारं कामपुत्रं संवदेते निरुन्ध इति तौ तयोः, रतिः कामप्रिया, सौन्दर्याधिक्यात्तत्पुत्रविरोधिनोः निजकुमारयोरपराजितानन्तवीर्ययोः धानुष्कतां धनुर्धरत्वं समवलोक्य वीक्ष्य विलक्षं विशिष्टं विविधं वा लक्षं शरव्यं वेध्यमित्यर्थः । "लक्षं लक्ष्यं शरव्यं च" इत्यमरः । तत्र मतिमार्गण मतिपूर्वका मार्गणा बाणा यस्य स तथा तम्, यद्वा विलक्षः लक्षच्युतः मतिः बुद्धिरेव मार्गणः बाणो यस्य तं तादृशम्, कुमतिमिति यावत् । अत एव, *गुणैः शौर्यादिभिः कृत्वा या विमुक्तिः राहित्यमत एव, बद्धं संसक्तम्, अविद्यमानं दरं भयं यस्तत् महाभयमित्यथः । तद्यत्र तम्, शौर्याद्यभावादिति भीतम्, विद्वेषिणं शत्रुम्, कञ्चनापि प्रबलं स्वाधिकबलं नैवामन्यत, तयोरपूर्वधानुष्कत्वेनातिबलत्वानुमानात् ॥१५९॥

राजा स्तिमितसागर रतिना कुमार जेवा पोताना ते बन्ने कुमारोनुं धनुर्धरपणुं जोई कोई पण लक्षथी च्युत छे बुद्धिरूपी बाण जेना एवा ईच्छवा छतां पण अहि नहि करी शकनारा ने गुणथी रहित थवाना अभिप्राय वाला-क्रूर एवा शत्रुओने प्रबळ मानतो न हतो. ॥१५९॥

बुद्ध्या प्राक् समुपासितौ नृपसुतौ सौभाग्यभङ्ग्या ततो,
गाम्भीर्येण मनोहरेण च ततोऽप्यौदार्यसंयोगिना ।
लावण्येन ततस्ततोऽतिरभसात् शौर्य्येण वर्य्येण तत्,
वञ्च्येऽहं किमहो ! विमृश्य तदिदं तौ यौवनेनाश्रितौ ॥१६०॥

नृपसुतौ तौ प्राक् पूर्वं बुद्ध्या समुपासितौ सेवितौ, ततः सौभाग्यस्य भङ्ग्या सौभाग्यगुणेनेत्यर्थः । समुपासिताविति सर्वत्र सम्बध्यते । ततोऽपि औदार्यसंयोगिना मनोहरेण गाम्भीर्येण उदारतासहितेन भावगुप्तिसामर्थ्येन । ततः लावण्येन, ततः अतिरभसात् शीघ्रमेव वर्येण प्रशस्येन शौर्येण, तत्ततः, अहो इति विस्मये । अहं यौवनं वञ्च्ये तत्सेवनवञ्चितं स्याम्, किमिति वितर्के, इदं विमृश्य इव तत्तादृशौ तौ नृपसुतौ, यौवनेन तारुण्येनाश्रितौ । बुद्धिमन्तौ, सौभाग्यशालिनौ, उदारौ, गम्भीरौ, सुन्दरौ, शूरौ, युवानौ च तौ जातौ, इत्यर्थः ॥१६०॥

ते बन्ने राजकुमारोने प्रथम बुद्धि उपासना करवा मांडी पछी सौभाग्य ने उत्तम गंभीरता ते पछी उदारतानी साथे लावण्य. त्यार पछी अत्यंत उतावळथी श्रेष्ठ वीरता. अहो ! तो हुं केम वंचित रहुं एम विचारीने जाणे. यौवने पण ते बन्नेनो आश्रय कर्यो, बुद्धिमान सुभग गंभीर उदार सुंदर ने वीर ते बे कुमारो युवावस्थाने प्राप्त थाय. ॥१६०॥

---

* गुणानां विमुक्तौ त्यजने बद्ध आदरो येन स तथा तं निर्गुणमित्यर्थः ।

राज्ञा तौ परिणायितौ नृपसुते रूपेण चेतोभुवः,
पत्नीं पत्तिपदं प्रपञ्चविगमात्सम्प्रापयन्त्यावपि ।
भुञ्जन्तौ विषयातिरक्तमनसौ सौख्यानि ताभ्यां समं,
कल्याणं कलयाम्बभूवतुरिमौ भूपालपुत्रौ भृशम् ॥१६१॥

राज्ञा स्तिमितसागरेण, तौ कुमारौ, रूपेण सौन्दर्येण कृत्वा, चेतोभुवः कामस्य, पत्नीं रतिम्, न्यूनसौन्दर्यत्वात् पत्तेः पदातेः भृत्यस्य पदं स्थानं सम्प्रापयन्त्यौ, नृपसुते राजपुत्र्यौ, परिणायितौ विवाहितावपि, अथ, प्रपञ्चविगमात् निरुपाधि यथा स्यात्तथा, अत्यन्तमित्यर्थः, विषये अतिरक्तं मनः ययोस्तौ तादृशौ सन्तौ, ताभ्यां राजपुत्रीभ्यां समं सौख्यानि सुखानि भुञ्जन्तौ इमौ भूपालपुत्रावपराजितानन्तवीर्यौ, कल्याणं शुभं भृशमत्यन्तं कलयाम्बभूवतुः प्रापतुः ॥१६१॥

રાજાએ તે બન્નેને બે રાજકન્યાઓ સાથે પરણાવ્યા જે કન્યાઓ કામદેવની સ્ત્રીને સૌંદર્ય છિનવાઈ જવાથી સમૃદ્ધિ નષ્ટ થઈ જવાથી પોતાની દાસી બનાવનારી હતી વિષયમાં અત્યંત આસક્ત મનવાળા એવા તે કુમારો તે કન્યાઓની સાથે સૌખ્ય અનુભવતા કલ્યાણ પ્રાપ્ત કરતા હતા. ॥૧૬૧॥

आसीच्छ्रीगुरुगच्छमौलिमुकुट—श्रीमानभद्रप्रभोः,
पट्टे श्रीगुणभद्रसूरिसुगुरुर्विज्ञानभाजां गुरुः ।
तच्छिष्येण कृतेऽत्र षोडशजिनाधीशस्य वृत्ते महा-
काव्ये श्रीमुनिभद्रसूरिकविना सर्गोऽगमत्सप्तमः ॥१६२॥

अयं श्लोकः पूर्ववद्व्याख्येयः ॥१६२॥

શ્રી ગુરુ ગચ્છના શિરોમણિ મુકુટ સમાન શ્રીમાનભદ્રસૂરિના માટે જ્ઞાનીઓમાં શ્રેષ્ઠ એવા સુગુરુ શ્રી ગુણભદ્રસૂરિ થયા. તેના શિષ્ય શ્રીમુનિભદ્રસૂરિ કવિએ રચેલ સોળમાં તીર્થંકર શ્રી શાંતિનાથ ચરિત્ર નામના મહાકાવ્યમાં સાતમો સર્ગ સમાપ્ત થયો. ॥૧૬૨॥

इति श्रीमुनिभद्रसूरिविरचित—शान्तिनाथमहाकाव्ये शासनसम्राट्—सूरिचक्रचक्रवर्ति—पूज्यपादाचार्यदेवेश श्री श्री श्री १००८ श्रीमद्विजयनेमिसूरीश्वर—पट्टप्रभावक—न्यायविशारद आचार्यदेवेश श्री श्री श्री १००८ श्री मद्विजयदर्शनसूरीश्वरविरचितायां 'प्रबोधिनी' नाम वृत्तौ

## सप्तमः सर्गः समाप्तः ।

卐

* ॐ अर्हम् *

# ॥ अथ अष्टमः सर्गः ॥

**भवरुजापगमाय शमौषधं, सुलभमेव, दिदेश गतस्पृहः ।**
**जगति यः स पुनस्त्रिजगद्भिषग्, भवतु शान्तिविभुर्भवतां श्रिये ॥१॥**

अथाष्टमसर्गप्रारम्भे वर्णनीयचरित्रनायकमेवोपस्थितत्वात्स्वेष्टत्वाच्च प्रकृते स्वस्याप्युपकारको यथा स्यादिति सर्वजगदुपकारकत्वेन स्तौति य इति । यः गतस्पृहः गता विशिष्टज्ञानादिना विनष्टा दूरीकृता वा स्पृहा इच्छा, उपलक्षणत्वाद्रागादिर्यस्य येन वा स गतस्पृहः वीतरागः, यो हि वीतरागस्तस्य न कदापि स्वार्थे अभिनिवेशः स्वार्थस्य नितरामभावात् किन्तु परार्थ एव, सातिशयितकरुणायाः उपयोगवन्ध्याया असम्भवात्तदाह—जगति विश्वे भवरुजापगमाय–भवस्य रुजा कर्मात्मकभावरोगः "रोगो रुजा इति हैमः" भव्यात्मसम्बन्ध्यपि आधारे आधेयकर्मोपचारात् । यद्वा भवे रुजा रोगः रागादिः मानसिकाधिव्याधिकारित्वात परम्परया लौकिकपीडाकरत्वाच्च चर्मणि व्याघ्रो हत इतिवत् भवे इति निमित्तसप्तमी तथा च भवहेतुका रुजा रोगः अथवा भव एव रुजा, जीवानां हि भवावधिरेव रोगादिसम्भव इति भवे तदुपचारः तस्या अपगमाय नाशाय, शमः रागद्वेषाद्युपशमः स एव औषधम् औषधान्तरेण रागादिनाशस्यासम्भवात्, सुलभम् तत्त्वौषधान्तरवत्पराधीनत्वाद् व्याधिना प्राप्यत्वाच्च स्वाधीनत्वाद् मनोनिरोधमात्रजन्यम् शमौषधन्तु मनोनिरोधश्चाभ्यासवैराग्याभ्याम्, तयोश्चात्मव्यापाराधीनत्वमिति संयमवतो न तद्दुर्लभमिति भावः, दिदेशः उपदिष्टवान् । एतेन तस्य भिषगन्तरवैलक्षण्यमुक्तम्, लौकिको हि भिषग् नैकेन सुलभेन लौकिकमपि रोगमौषधेन व्याहन्तुमीशः, स्वयमेव च भवरोगाक्रान्तत्वात्कुतोऽन्यदीयभवरोगौषधं दिश्यात् । अयं तु स्वयं तादृश रोगमुक्तः अलौकिकस्य दुश्चिकित्स्यस्यापि भवरोगस्य सुलभमेकमेव चौषधं वेष्टुं प्रभुरिति भावः वेष्टुमीष्ट इति । स, पुनरिति वाक्यालङ्कारे । त्रिजगद्भिषक्—त्रीणि च तानि जगन्ति च त्रिजगन्ति तेषां तद्गतजीवानां भिषग्वैद्यः, वैद्यान्तरन्तु अन्यवैद्यस्तु यस्यकस्यचिदेव प्राणिनो रोगस्य भिषग् अयन्तु त्रिजगतामेव भवरोगाक्रान्तत्वात्तेषाञ्चैकमात्रसुलभशमरूपौषधदेशकः इति प्रसिद्धाश्विनीकुमारधन्वन्तर्यादिभ्यो व्यतिरेकः । शान्तिविभुः वर्णनीयचरित्रनायकत्वेन दृष्टिगोचरः श्रीशान्तिनाथः प्रभुः, भवतां पठितृश्रोतॄणाम्, श्रिये भवतु । यो हि त्रिजगद्भिषक् ततो भवतां श्रीलाभोऽवश्यमाशास्य इति भावः । अत्र सर्गे प्रायः द्रुतविलम्बितं छन्दः, तल्लक्षणं यथा "द्रुतविलम्बितमाह–नभौ भरौ" इति ॥ १ ॥

જેણે વીતરાગ સંસારમાં ભવરૂપી રોગની શાંતિને માટે શમરૂપી સુલભ ઔષધની દેશના આપી હતી તે ત્રણે જગતના વૈદ્ય શ્રી શાન્તિનાથ ભગવાન તમારા કલ્યાણ માટે થાઓ. ॥૧॥

उपवने क्वचनापि गुरुः स्वयंप्रभमुनिः समवातरदन्यदा ।
दिनपतिं तपसां महसा जयन्निधनतां तमसां प्रसभं दिशन् ॥२॥

अन्यदा, एकदा, क्वचनापि—अनिर्दिष्टनाम्नि कस्मिंश्चिदपि उपवने उद्याने तत्पुरोद्याने तपसाम्, महसा-तेजसा, "महस्तूत्सवतेजसोः" इत्यमरः । दिनपतिं सूर्यं जयन्नधरीकुर्वन् अत एव तमसाम् अज्ञानानां पक्षे अन्धकाराणां निधनतां नाशं प्रसभं प्रसह्य दिशन् कुर्वन्, सूर्यो हि बाह्यान्धकारात्मकस्यैव तमसः स्वभावत एव नाशकः, अयं तूपदेशबलादप्यभ्यन्तराज्ञानात्मकस्यापि तमसो नाशक इत्यतोऽपि सूर्याद् व्यतिरेकः । गुरुः स्वयंप्रभमुनिः समवातरत्समागतवान् समवासरत् ॥२॥

એક દિવસે તપના તેજથી સૂર્યને જીતનારાને અજ્ઞાનનં હઠથી દૂર કરનારા એવા સ્વયંપ્રભ મુનિ કોઈ ઉદ્યાનમાં સમોસર્યા. ॥૨॥

स्तिमितसागरभूमिपतिस्तदा, तुरगवाहविनोदमधिष्ठितः ।
परिसरं समियाय पुरः पुरस्सरदनेकपदातिपरिष्कृतः ॥३॥

तदा स्वयंप्रभमुनेः उपवने समागमनानन्तरम् स्तिमितसागरभूमिपतिः, स्तिमितसागराख्यराजा तुरगवाहविनोदम् तुरगस्याश्वस्य यो वाहः वहनं वाहः वाहनं गतिविशेषेण धावनम् स एव मनोरञ्जकत्वाद्विनोदः क्रीडा तम्, एतेन तस्याश्वहृदयगतिवेदित्वं विनोदप्रियत्वञ्चोक्तम् । अधिष्ठितः आश्रितः । सविनोदमश्वं गतिविशेषेण धावयन्नित्यर्थः । तथा पुरः नगरात् पुरस्सरन्तः पुरस्सरदनेकपदातिपरिष्कृतः अग्रे गच्छन्तः अनेके च ते पदातयः पादाभ्यां गच्छन्तः जनाः तैः परिष्कृतः परिवारितः, भूषित इत्यर्थः । यद्यप्यश्वारूढत्वात्स्वस्यैव पुरस्सरत्वं सम्भाव्यते, मानार्हत्वाच्च, तथापि उपलक्षणत्वात्सहचरा अपि पदातयः अश्ववाहविनोदे चाग्रपश्चाद्धावस्य सम्भवात् पदातीनां पुरस्सरत्वोक्तिः । एतेन नृपस्य गमने हर्षोत्साहौ प्रदर्शितौ । परिसरम् नगरसमीपप्रदेशम्, यद्वा पुरः परिसरमित्यन्वयः । पुरः नगरस्य परिसरं समीपप्रदेशम् समियाय जगाम, "पर्यन्तभूः परिसरम्" इतिहैमः ॥३॥

त्यारे अश्वक्रीडामां तत्पर स्तिमितसागर राजा आगल चालता अनेक पदाति सैन्योथी शोभतो नगरनी पासेना उद्यानमां गया. ॥३॥

कमपि कालमसौ क्षितिपालकः, स चतुरः परिवाह्य तुरङ्गमान् ।
श्रमजलाविलगात्रविलेपनस्तदपि काननमभ्यसरज्जवात् ॥४॥

कमपि अल्पत्वादनिर्देश्यम्, एतेन विनोदापेक्षया मुनिसमीपगमने आदराधिक्यं सूचितम् । कालम्, व्याप्तौ द्वितीया । असौ प्रकृतः क्षितिपालकः भूभृत्स्तिमितसागरः चतसृभिः सङ्ख्याभिः सह सचतुरः चतुःसङ्ख्याकान्, तुरङ्गमान् अश्वान्, एतेन तस्य रथस्थत्वं सूचितम् । नहि एकेन चत्वारस्तुरङ्गमा वाह्या इति भावः, यद्वा चतुरः पटुस्स इत्यर्थः । परिवाह्य सविनोदं धावयित्वा, अत एव श्रमजलाविलगात्रविलेपनः श्रमेण अश्वपरिवाहनाऽऽयासेन कृतं यज्जलं स्वेदः तेन आविलं क्लिन्नम्, गात्रस्य शरीरस्य विलेपनं चन्दनाद्यङ्गरागः यस्य स तादृशः स्वेदक्लिन्नाङ्गरागः, एवं, एतेन तस्य

आतुरता सूचिता, श्रमजलापनोदाय विश्रामकरणात्, सौकुमार्यवन्दनाद्युपभोगादरश्च सूचितः । तदपि मुन्यधिष्ठितमेव अपेरेवकारार्थत्वात् काननम् तत्पुरोद्यानं जवात् शीघ्रमेव । यद्वा जवादित्यस्य परिवाहेत्यत्रान्वयः । अभ्यसरदभिजगाम ॥४॥

તે રાજા કેટલોક કાલ સુધી ચાર ઘોડાઓને દોડાવી પરસેવાથી રેબ ઝેબ અંગ લેપવાળો થયો છતો તે ઉદ્યાનમાં વેગથી ચાલવા લાગ્યો. ॥૪॥

अथोपवनवर्णनेन सहैव राजानं स्तौति—

कुसुमगुच्छविनम्रमहीरुह – प्रकरनिश्चलभृङ्गरुतैरलम् ।
क्षितिपतेः शरदिन्दुसहोदरां, यदुपवर्णयतीव गुणावलिम् ॥५॥

यत्काननम् कर्तृ कुसुमेत्यादि रुतैरित्यन्तम्-कुसुमानां पुष्पाणां गुच्छाः स्तबकाः तैः विनम्राणि यानि महीरुहाणां वृक्षाणां प्रकराणि समूहाः तेषु निश्चलाः मकरन्दबाहुल्यान्मनोज्ञादेकाग्रचित्तेन मनोहृत्य-पानासक्तत्वात्स्थिराः ये भृङ्गाः भ्रमरास्तेषां रुतैः शब्दैः कृत्वा, एतेन वनस्य कुसुमादिसमृद्धिरुक्ता । शरदिन्दुः शरच्चन्द्रः लक्षणया मरीचिः, तस्य सहोदरां तुल्याम्, विशदामित्यर्थः । क्षितिपतेः राज्ञः स्तिमितसागरस्य, गुणावलिम् कीर्त्यादिगुणश्रेणिम्, अलमत्यर्थम्, उपवर्णयतीव-उपवर्णनं करोतीव, स्तौतीवेत्युत्प्रेक्षा । भृङ्गरुतानामतथाभूतानामपि गुणोपवर्णनपरत्वेन सम्भावनात् । तत्र च शरदिन्दु-सहोदरेत्युपमाङ्गीभूतेति सङ्करः ॥५॥

જે બગીચાઓમાં ફૂલોના ગુચ્છાઓથી નમ્ર બનેલા વૃક્ષો ઉપર સ્થિર બેઠેલા ભ્રમરોના ગુંજારવથી રાજાના શરદ ઋતુનાં ચંદ્રમા સમાન નિર્મળ ગુણ સમૂહને વર્ણવતો હતા જાણે. ॥૫॥

सुरभिशीतसमीरनिषेवितो, भवति तत्र स यावदपश्रमः ।
रहसि तावदमुं प्रतिमास्थितं, मुनिमपश्यदशोकतरोस्तले ॥६॥

तत्र उद्याने, स स्तिमितसागरो नृपः सुरभिशीतसमीरनिषेवितः सुरभिः सुगन्धिश्चासौ शीतः शीतलश्च तेन समीरेण मारुतेन निषेवितः स्पृष्टः शीतलमन्दसुगन्धपवनवीजितः सन्नित्यर्थः "सुरभिश्चम्पके स्वर्णे जातिफलवसन्तयोः । सुगन्धौ च मनोज्ञे च" इति कोषः । "समीरमारुतमरुद्" इति च । अत्र सुरभिशीतोक्त्यैव पवनस्य मन्दत्वलाभः । कम्पितलतापुष्पादेः गृहीतसलिलशीकरस्य च पवनस्य-मन्दस्यैव सम्भवात् । यावता अपश्रमः, अपगतः श्रमो मार्गस्वेदो जवादश्ववाहनजन्यखेदो वा यस्य स तादृशः, अपश्रमो खेदरहित इत्यर्थः भवति, तावद्, श्रमापनोदसमकालमेवेत्यर्थः । अशोकतरोः तन्नाम्यवृक्षविशेषस्य, तले अधोभागे रहसि-एकान्ते, विजने इत्यर्थः । प्रतिमया प्रतिमास्थितं कायोत्सर्गमुद्रया ध्यानैकताने स्थितम् अवतिष्ठमानम् अमुं पूर्वोक्तं मुनिम् स्वयंप्रभमुनिम्, अपश्यत् ॥६॥

તે ઉદ્યાનમાં જેટલામાં રાજા સુગંધિત ઠંડા પવનથી શ્રમ રહિત થાય તેટલામાં એકાન્તમાં અશોક વૃક્ષ તલે પ્રતિમા ધ્યાને રહેલા તે મુનિને જોયા. ॥૬॥

अथ मुनिदर्शनानन्तरम् सद्भावोदयान्नृपकर्त्तव्यमाह—

दुरतिसन्ततिरेतदवेक्षणा-दपगता प्रणतेः शुभसन्ततिः ।
प्रभवतीति विमृश्य हृदा नृपः, प्रणमति स्म मुनिं मतिमन्नुतम् ॥७॥

नृपः स्तिमितसागरः एतदवेक्षणात् एतस्य स्वयंप्रभमुनेः अवेक्षणात् दर्शनात्, दुरितसन्ततिः दुरितानां दुष्कृतानां सन्ततिः समूहः पापपरम्परा । "अंहो दुरितदुष्कृतमि"त्यमरः । अपगता विनष्टा भवतीतिशेषः । प्रणतेः प्रणामकरणाच्च, शुभसन्ततिः कल्याणपरम्परा, प्रभवति, समुत्पद्यते इतीत्थम्, हृदा मनसा, विमृश्य चिन्तयित्वा मतिमन्नुतं मतिमता श्रद्धादिसद्भावात्पवित्रबुद्धिना नुतम् स्तुतम्, मुनिम् स्वयंप्रभाख्यं तपस्विवर्यम्, प्रणमति स्म । एतेन मुनेः प्रभावातिशयः नृपस्य च श्रद्धातिशयः सूचितः ॥७॥

આ મુનિના દર્શનથી પાપ સમૂહ દૂર થાય છે. ને પ્રણામ કરવાથી શુભ પરંપરા થાય છે. એમ મનમાં વિચારી તે રાજા બુદ્ધિમાનોથી વંદન કરાયેલા એવા મુનિપતિને નમ્યો. ॥૭॥

अथ तदा मुनेः यत् कर्त्तव्यं तदाह—

मुनिपतिः प्रतिमां परिपूर्य सः, क्षितिभुजेऽप्रतिमां दददाशिषम् ।
उपदिदेश कृपामयमार्हतं, सुकृतमुग्रकषायनिवर्त्तकम् ॥८॥

स प्रस्तुतः, मुनिपतिः स्वयंप्रभाख्यमुनीशः, प्रतिमां कायोत्सर्गमुद्रां परिपूर्य समाप्य, क्षितिभुजे राज्ञे स्तिमितसागराय, अप्रतिमाम् अतुल्याम् आशिषम् धर्मलाभादिशुभाशंसनम्, ददत् कृपामयम् दयाप्रधानम् अत एव उग्रकषायनिवर्त्तकम्, उग्र उत्कटः यः कषायः क्रोधाद्यान्तरारिसमूहः तस्य निवर्त्तकम् आर्हतम् अर्हदुक्तम्—"सुकृतं धर्मं 'धर्मः पुण्यवृषः श्रेयः सुकृते' इति हैमः । उपदिदेश । सर्वकल्याणकरमर्हदुक्तमुक्तवानित्यर्थः । अर्हदुक्ताचरणेन कषायनिवृत्तावात्मलाभादितिभावः ॥८॥

તે મુનીશ્વર પ્રતિમાધ્યાન પૂર્ણ કરી તે રાજાને અનુપમ એવી આશીષ આપતા દયામૂલ પુણ્ય કારક તથા ઉગ્ર કષાયોના નાશકારક એવો જૈનધર્મનો ઉપદેશ આપવા માંડ્યો. ॥૮॥

आर्हतोक्तोपदेशप्रकारमेवाह—

परिहरन्ति कषायपरिग्रहः, किमिति नैव जनाः सुखलिप्सवः ? ।
न खलु कर्हिचनापि निषेवितः, शुभमयं खलवत्प्रथयिष्यति ॥९॥

सुखलिप्सवः सुखं कल्याणं लिप्सन्ते इति ते सुखलिप्सवः जनाः कषायपरिग्रहम् कषायस्य परिग्रहं स्वीकारं यद्वा कषाय एव परिगृह्यते इति परिग्रहः, परिवारं वा "परिवारः परिग्रहः" इति हैमः । परिगृह्यते कर्मानेनेति परिग्रहः तम् कषायेऽभिनिवेशः,कषायरूपं व्यसनम्, वा, किमिति केन कारणेन, नैव, परिहरन्ति त्यजन्ति । कषायस्वीकारः सुखलिप्सा चेति । द्वयं विरुद्धम्, कषायसत्त्वे सुखप्राप्त्यसम्भवात् एवञ्च तत्परिहार आवश्यकः, तदेवाह—अयं कषायपरिग्रहः, निषेवितः, अपरिहृतः,

खलवद्दुर्जनवत्, कर्हिचित् कदापि शुभम् कल्याणं न, प्रथयिष्यति विस्तारयिष्यति । खल्विति निश्चये । यथा हि दुर्जनः निषेवितः अनिष्टायैव भवति, दुर्जनतायास्तथैवात्मलाभात्, एवं कषायपरिग्रहोऽपि न सुखाय, अन्ततो बन्धप्रयोजकतया दुःखदकत्वादिति तत्परिहार आवश्यक इति भावः ॥९॥

સુખની ઈચ્છા રાખનારા લોકો કષાય પરિગ્રહનો પરિત્યાગ કેમ કરતા નથી ? સેવન કરાયેલો આ કષાય પરિગ્રહ દુર્જનની જેમ કદીપણ શુભ આપશે નહિ. ॥૯॥

त्यजति निम्बतरुर्यदि तिक्ततां, ससितदुग्धघटैर्भृशमुक्षितः ।
यदि सुधासमतां च विषं भजेद्विविधमन्त्रपवित्रितमप्यदः ॥१०॥
मधुरयाऽपि गिरा परिवर्णितः, कनकरत्नविहायितमानितः ।
यदि खलः कलयेदपि साधुतां, तदपि पुण्यमहो ! न कषायतः ॥११॥

युग्मम् ।

कषायसत्त्वे चित्तनैर्मल्यस्य सर्वथाऽसम्भव इत्याह–युग्मेन निम्बतरुः सितदुग्धघटैः पिचुमन्दः ससितया शर्करया सह वर्त्तते इति ससितम् "शर्करा तु सितोपला सिता च" इति हैमः । तच्च तत् दुग्धञ्च तस्य घटैः सितोपलामिश्रितदुग्धपूर्णघटैः कृत्वा भृशम्, उक्षितः सिक्तः, यदि, तिक्ततां कटुतां त्यजति त्यजेत्, सम्भावनाया यदियो वर्तमाना । अदः प्रसिद्धं निकृष्टञ्च विविधमन्त्रपवित्रितमपि विषम्, विविधैः, मन्त्रैः पवित्रितमभिमन्त्रितम् अपि, यदि, सुधासमतां सुधायाः समतां तुल्यताम् भजेत्, मधुरया श्रुतिमनोहरया अपि गिरा वाण्या परिवर्णितः स्तुतः, कनकस्य सुवर्णस्य रत्नस्य च विहायितेन दानेन मानितः अनुकूलितः "दानमुत्सर्जनं त्यागः प्रदेशनविसर्जने । विहायितं वितरणमि" ति–हैमः । खलः यदि साधुतां सज्जनतां कलयेत् स्वीकुर्यादपि, अपिना स्वभावपरिवर्त्तनस्य सर्वथाऽसम्भवः सूचितः । तदपि, सर्वथाऽसम्भवस्य कथञ्चित्सम्भावनायामपि, कषायतः, पुण्यम् न, अहो इत्याश्चर्ये । आश्चर्यं कषायस्य स्वभावो यदसम्भवस्यान्यस्य कथञ्चित्सम्भावनायामपि अपुण्यजनकत्वरूपस्य तत्स्वभावस्य कदापि केनापि च न सम्भवति परिवर्त्तनमित्यर्थः ॥१०–११॥ युग्मम् ।

જો સાકર સહિત દૂધના ઘડાઓથી સીંચાયેલો લિમડાનો વૃક્ષ કડવાશ છોડે, તેમજ અનેક પ્રકારના મંત્રોથી પવિત્ર કરાયેલો પણ પ્રસિદ્ધ વિષ અમૃત તુલ્ય થાય. તેમ વળી ને મધુર વાણીથી પણ પ્રશંસિત ને સોનાને રત્નો આપીને મનાવેલો દુર્જન સાધુતાને વરે તો પણ આશ્ચર્ય છે કે કષાયથી પુણ્ય થાય નહિ. ॥૧૦–૧૧॥

अमरदत्तनृपादिवदेतके, विरचिता वचसाऽपि कषायकाः ।
इह भवेऽपि परत्र च शर्मणे, नहि भवेयुरधर्मनिबन्धनम् ॥१२॥

अधर्मस्य निबन्धनम् कारणम्, "वेदाः प्रमाणमितिवद्विधेयतावच्छेदकत्वा धर्मकारणत्वस्य, एकत्वादेकवचनम् ।" एतके एते कषायकाः कषायाः वचसाऽपि, विरचिताः निषेविताः अमरदत्त-

नृपादिवत् इह भवे अत्र लोके परत्र परलोके च शर्मणे सुखाय नहि भवेयुः । अपिना मनसा आरब्धास्तु कषाया नैवात्र परत्र शर्मदाः, किन्तु दारुण विपाकतयाऽतिदुःखप्रदा एवेति सूचितम् ॥१२॥

અમરદત્ત રાજા વિગેરેની જેમ વાણીથી પણ સેવાયેલો કષાય આ ભવમાં કે પરભવમાં કલ્યાણ માટે થઈ શકે નહિ પાપનું કારણ જ થશે. ॥૧૨॥

इति निशम्य शुभानगरीश्वरः, प्रणिजगाद गुरूनभिवन्द्य सः ।
अमरदत्तनृपादय एव के, त इह ये भगवद्भिरुदाहृताः ॥१३॥

शुभा तदाख्या या नगरी तदीश्वरः स स्तिमितसागरः, इति पूर्वोक्तं निशम्य, गुरून् स्वयम्प्रभसूरीन्, आदरार्थे बहुवचनम् । अभिवन्द्य, एतेन राज्ञो विनय उक्तः । प्रणिजगाद उवाच, किमित्याकाङ्क्षायामाह—इह अत्र देशनावसरे, भगवद्भिः पूज्यैः-"पूज्ये तत्र भवानत्रभवाँश्च भगवानपि" इति हैमः । ये अमरदत्तनृपादयः, उदाहृताः अमरदत्तनृपादिवदितिशब्देन उदाहरणतया निर्दिष्टाः, ते के ? तेषां चरितं कथयन्त्विति प्रश्नाशयः ॥१३॥

આમ સાંભળી શુભા નગરીના રાજા સ્તિમિતસાગરે ગુરુને પ્રણામ કરીને પૂછ્યું કે આપ અહીં દૃષ્ટાન્ત આપો છો તે અમરદત્ત વગેરે રાજા કોણ હતા. ॥૧૩॥

गुरुरुवाच नरेन्द्र ! निशम्यतां, समवधाय मनागपि दक्षिणे ।
भरत एव पुरं सुररोचितं, तिलकसंज्ञकमस्ति समृद्धिमत् ॥१४॥

अथ कथां प्रस्तौति—गुरुः श्रीस्वयंप्रभसूरिः उवाच-किमित्याह—नरेन्द्र ! समवधाय सावधानो भूत्वा, नह्यप्रमादिना वस्तुतत्त्वं ग्रहीतुं शक्यत इति भावः । निशम्यताम् श्रूयताम् किमित्याकाङ्क्षायां कथां प्रस्तौति दक्षिणे भरते एव दक्षिणार्द्धभरते सुरैः रोचितम्—सुरशब्देन रोचितम् तिलकसंज्ञकं सुरतिलकाख्यमित्यर्थः, समृद्धिमत् धनधान्यादिव्याप्तम्-पुरम् अस्ति ॥१४॥

ત્યારે ગુરુએ કીધું કે હે રાજા સહેજ સાવધાન થઈને સાંભળો દક્ષિણ ભરતમાં દેવોથી શોભાયમાન ને સમૃદ્ધિશાલી એવો તિલકપુર નામે નગર હતો. ॥૧૪॥

अजनि तत्र नृपो मकरध्वजः, प्रवररूपकलामकरध्वजः ।
यमवलोक्य परं घुसदङ्गनाः, श्रदधुरेव वरं न निजं वरम् ॥१५॥

तत्र सुरतिलकपुरे, प्रवरेण रूपेण सौन्दर्येण कलया युवतिजनमनःसमाकर्षणादिरूपेण गुणेन च यद्वा प्रवरया रूपकलया सौन्दर्यरूपेण गुणेन मकरध्वजः कामः तदुपमः स इव, रूपवान् कलावांश्चेत्यर्थः । मकरध्वजः तन्नामा नृपः अजनि । यम् नृपमवलोक्य, घुसदाम् दिविसीदन्तीति तेषाम् देवानाम् अङ्गनाः स्त्रियः परमुत्कृष्टम्, निजानुरूपमित्यर्थः, वरम् पतिम्, श्रदधुः विश्वसन्ति स्म, अयमेव नः पतिरित्येवं सादरं मन्यन्ते स्मेत्यर्थः । निजं वरं पतिं, देवमित्यर्थः, नैव । देवादप्यधिकगुणशालित्वादिति भावः । रूपादिभिर्देवाङ्गनाया अपि स कमनीय इति सारार्थः ॥१५॥

ત્યાં શ્રેષ્ઠ એવા સૌન્દર્યનાં અંશોથી કામદેવ જેવો મકરધ્વજ નામે રાજા થયો. જેને જોઈને દેવોની સ્ત્રીઓ પોતાના વર–પતિને જોઈને વર શ્રેષ્ઠ કે પતિ માનતી ન હતી ॥૧૫॥

सुवदना महिषी मदनाभिधा, तदवनीदयितस्य बभूव सा ।
स्वदयितापुरतः प्रशशंस यत्सुभगतां विनयानुगतां स्मरः ॥१६॥

तदवनीदयितस्य नृपस्य मदनाभिधा नामैकदेशग्रहणे नामग्रहणमितिन्यायेन मदनसेनाख्येत्यर्थः तच्चरित्रान्तरे मदनसेनेति नामदर्शनात् मदननाम्नी सा लोकप्रसिद्धा सुवदना सुमुखी महिषी पट्टराज्ञी बभूव, स्मरः कामः स्वदयितापुरतः स्वदयितायाः स्वप्रियायाः रत्याः पुरतोऽग्रे विनयानुगताम् अनुसृताम् विनयसहकारप्रकर्षवतीम् इत्यर्थः । यत्सुभगताम् यस्याः सुभगताम् सौन्दर्यम् प्रशशंस वर्णयामास । रतेरप्यधिकसुन्दरी सेत्यर्थः । अत्र कामस्य तया वर्णनाऽसम्बन्धेऽप्युक्तेरसम्बन्धे सम्बन्धरूपाऽतिशयोक्तिः, ततश्च रतेरप्यधिकसुन्दरीति व्यतिरेको ध्वन्यते ॥१६॥

તે રાજાની મદના નામે પ્રસિદ્ધ એવી સુન્દર મુખવાળી રાણી હતી. કામદેવ જેની વિનયથી ઓતપ્રોત સુન્દરતાની પોતાની પત્નીની આગળ પ્રશંસા કરતો હતો. ॥૧૬॥

अथ राज्ञ्या गर्भधारणमाह—

कमलराजिविराजिसरोवरं, शयितबुद्धतमा रजनीभरे ।
समवलोक्य निवेद्य महीभुजे, तदनु गर्भमधत्त नृपप्रिया ॥१७॥

नृपप्रिया मदना, कमलराजिविराजिसरोवरं, कमलानां राजयः श्रेणयः ताभिः विराजते इति तत्तादृशम्, कमलपङ्क्त्युपशोभितम्, सरोवरम् तडागम्, कमलाकरमित्यर्थः, स्वप्ने इति अर्थादवगम्यते, शयितबुद्धितमा पूर्वं शयिता पश्चाद् बुद्धा जागृता रजनीभरे–रजन्याः रात्रेः भरेऽतिवेलायां निशीथे, चतुर्थयामे रात्र्यः समवलोक्य दृष्ट्वा महीभुजे राज्ञे निवेद्य कथयित्वा, स्वप्नदृष्टंसरोवरमित्यनुषज्यते, तदनु तत्पश्चात् एतेन भीयमाणगर्भस्य स्वप्नानुकूलतोक्ता । गर्भमधत्त ॥१७॥

તે રાણી રાત્રે સ્વપ્નમાં કમળ સમૂહથી શોભિત તળાવ જોઈ પહેલા સૂતેલી પણ જાગી ગયેલી છતી રાજાને તે જણાવીને ગર્ભનું ધારણ કર્યું. ॥૧૭॥

अथ तस्यास्तनयोत्पत्तिमाह—

अजनयत्तनयं नयशालिनं, कमलकेसरनामतया श्रुतम् ।
प्रणयिनी नृपतेरखिलार्थिना-मशमयच्च धनैश्चिरदुःस्थताम् ॥१८॥

नृपतेः प्रणयिनी प्रिया मदना, कमलकेसरनामतया श्रुतम्, कमलकेसर इति नाम्ना प्रसिद्धम्, नयशालिनम्, नीतिज्ञम् तनयमजनयदजनि 'स्वार्थे णिच्' । तनयोत्पत्तिजन्यहर्षकरयमाह—धनैः, अखिलार्थिनाम्, सर्वयाचकानाम्, चिरदुःस्थताम्–चिरादागतम् दौर्गत्यम्, अत्र चिरपदमहिम्ना दुःस्थतायाम् पूर्वमन्येन शमनाशक्यत्वं सूचितम्, तेन च तादृशदुःस्थताशमनेन तस्या असाधारणवदान्यत्वं

ध्वन्यते, अशमयत् व्यलोपयत्, येनजननशमनयोः यौगपद्यम् उच्यते । अत्रासाधारणदानसम्पत्तिवर्णनादुदात्तालङ्कारः । तल्लक्षणं यथा—"लोकातिशयसम्पत्तिवर्णनोदात्तमुच्यते" इति ॥१८॥

राजानी ते पत्नी नीतिथी शोभनारा कमलकेशर नामे प्रसिद्ध एवा पुत्रने जन्म आप्यो. तथा बधा याचकोनी लांबा काळनी दरिद्रताने धन आपी दूर करी. ॥१८॥

अथ तनयोत्पत्यनन्तरम्—

विदितविद्यमवद्यपराङ्मुखं, दितधनुर्धरमानपरिश्रमम् ।
क्षितिपतिर्युवराजपदेऽथ तं, सचिववासनयाऽभ्यषिचत्सुमम् ॥१९॥

क्षितिपतिः मकरध्वजो नृपः विदितविद्यम्, अधीतशास्त्रम्, अवद्यपराङ्मुख, अवद्यात्पापात्पराङ्मुखं निवृत्तम्, धर्माचरणपरायणमित्यर्थः दितधनुर्धरमानं परिश्रम, दितः खण्डितः–धनुर्धरस्य मानोऽभिमानो येन स तादृशः परिश्रमः धनुर्विद्याभ्यासो यस्य स तं तादृशम् धनुर्धराग्रगण्यम् तम् कमलकेसरनामकुमारम सचिववासनया, सचिवस्य वासना संस्कारः तया समम् सचिवबुद्धयेत्यर्थः । युवराजस्य सचिवत्वन्कार्यसहकारित्वादितिभावः। युवराजपदे अभ्यषिचत युवराजं निर्मितवानित्यर्थः ॥१९॥

पछी मंत्रीनी इच्छा साथे राजा विद्याओना जाणकार पापथी विमुख धनुर्धारीओना अभिमानने श्रमनुं खंडन करनार एवा तेनो युवराज पद उपर अभिषेक कर्यो. ॥१९॥

जितकलापिकलापकलापकं, नृपतिकेशकलापमथाऽन्यदा ।
व्यरचयद्विवरीतुमुपक्रमं, स्वरुचि यावदसौ नृपवल्लभा ॥२०॥

अथानन्तरं अन्यदा कदाचित् असौ नृपवल्लभा नृपप्रिया स्वरुचि निजेच्छयैवेत्यर्थः,नतु प्रेरणया, एतेन पतिसेवाऽनुरागः सूच्यते । जितोऽधः कृतः कलापिनां मयूराणां कलापस्य समूहस्य कलापः–कलापानां बर्हाणां कलाप एव कलापकं समूहो येन स तादृशः तम् पुष्पादिगुम्फितत्वात् मयूरपिच्छादप्यधिकसुन्दरमित्यर्थः, नृपतिकेशकलापम्–नृपस्य केशपाशम् विवरीतुम् प्रसाधयितुम्, यावत् उपक्रममारम्भम् व्यरचयदकरोत् ॥२०॥

पलितमभ्रतिरोहितचन्द्रमः, प्रकटितैककरभ्रमकारणम् ।
नृपतिमूर्द्धनि वीक्ष्य निरैक्षयत्, स्मितमुखी मुकुरेण महिष्यपि ॥२१॥

पतिमूर्धनि तम् वीक्ष्य स्मितमुखी महिषी मुकुरेण निरैक्षयदपि अभ्रेण मेघेन तिरोहितोऽन्तरितो यश्चन्द्रमाः तस्य प्रकटितः दृश्यमानः य एकः करः किरणस्तस्य भ्रमकारणम् भ्रमकरम् चन्द्रैककरवद्धवलम्, पलितस्य विरलत्वोदककरोपमापलितम् वार्धक्यश्वेतकेशम् वीक्ष्य स्मितमुखी भवान् वृद्धो जात इति परिहासकरणाय हसितमुखी, महिषी मुकुरेण दर्पणेन—"दर्पणे मुकुरादर्शावि" त्यमरः । निरैक्षयददर्शयदपि । अपिः स्ववीक्षणसमुच्चये ॥२१॥

पछी एक दिवस राणी पोतानी रुचिथी मयुरपींछाने पण जीतनारा एवा राजाना केशकलापने

જેટલામાં છૂટા પાડવાનો ઉપક્રમ કરવા લાગી. તેટલામાં રાજાનાં માથામાં વાદલામાં ઢંકાયેલા ચંદ્રમાના એક કિરણનો ભ્રમ કરાવે એવો પલિત પાકેલો ધોલો થયેલો હસતી હસતી રાજાને અરીસામાં દેખાડ્યો. ॥૨૦-૨૧॥

**तदवलोक्य महीमघवा हृदि, व्यषददन्यपराजितसैन्यवत् ।**
**दयितया हितया स तया ततो, निजगदे जगदेकपतिः पतिः ॥२२॥**

तत् पलितकेशमवलोक्य महीमघवा मह्यां मघवा इन्द्र इव महीपतिः हृदि अन्येन शत्रुणा पराजितं यत्सैन्यम् । यद्वा अन्येन पराजितं सैन्यं यस्य स तद्वत्, व्यषदद् विषादमगात् । नहि वार्धक्यम् कस्यचिदपीष्टमितिभावः । ततः नृपतिविषादमनुमाय, हितया हितकारिण्या तया दयितया प्रियया मदनया, जगतः एकः पतिः राजा, चक्रवर्तीत्यर्थः । पतिर्भर्त्ता स नृपः निजगदे ऊचे ॥२२॥

राज्ञीकृतं राज्ञः सान्त्वनमाह—

जरितया प्रिय ! किं परितप्यते, पटहघोषणया प्रतिषेत्स्यते ।
सकल एव जनः स तु दण्डयते, दशमिनं प्रवदिष्यति यो नृपम् ॥२३॥

प्रिय ! जरितया, जरा वृद्धावस्थाऽस्त्यस्येति जरी, तस्य भावो जरिता तया पलितसूचितवृद्धावस्थया, किं किमर्थं परितप्यते विषीदसि, सकल एव जनः दण्डयते, दण्डितो भविष्यति, अकालेऽपि यमातिथिर्भविष्यति, यः नृपं दशमिनम्—दशमोऽवस्थाविशेषोऽस्यास्तीतिदशमी तं नवत्यधिकवयसम् वृद्धमित्यर्थः, प्रवदिष्यति नृपो वृद्ध इत्येवम् प्रवादं दास्यति, इत्येवम् पटहघोषणया, प्रतिषेत्स्यते प्रतिषेधाज्ञा दास्यते, सकलो जन इत्यनुषज्यते । प्रतिषेधाज्ञया हि न कोऽपि त्वां वृद्धं कथयितेति तदर्थं खेदो न कार्यः । लोको हि युवानमेव मत्वा भवत आदरं करिष्यति, न त्वयं वृद्धभावान्न किञ्चित्कर्तुं शक्त इत्येवम् तिरस्करिष्यति, भवदाज्ञायाः पूर्ववत्पालनादिति खेदो न कर्त्तव्य इति ॥२३॥

રાજા તે જોઈ શત્રુથી પરાજય પામેલ સૈન્યની માફક મનમાં ઘણોજ વિષાદ પામ્યો ત્યારે સંસારમાં એક છત્ર જેવા પતિને હિત ઈચ્છનારી તે રાણીએ કીધું કે હે પ્રિય ! આ વૃદ્ધપણાથી શું કામ સંતાપ પામો છો ? પટહ ઘોષણા કરીને એવો નિષેધ કરીશું કે જે રાજાને ઘરડો કહેશે તે બધા દંડ પાત્ર થશે. ॥૨૨-૨૩॥

**नरपतिः स्मितपूर्वमथावदत्, प्रियतमे ! न च वृद्धतया त्रपे ।**
**अनवलोक्य पुनः पलितं मम, व्रतमुपादिषताखिलपूर्वजाः ॥२४॥**

**अथ अभिप्रायान्तरकृतः खेद इत्याह—अथ राज्ञीकृतसान्त्वनवचनानन्तरम् नरपतिः स्मितपूर्वम् स्मितमीषद्धास्यं पूर्वं यस्मिन् कर्मणि तद्यथास्यात्तथा, एतेन राज्यभिप्रायेऽस्वरसः सूचितः अवदत् । किमित्याह—प्रियतमे ! वृद्धतया, अहं वृद्धो जात इत्येवं वृद्धभावेन न च नैव त्रपे लज्जे तर्हि को हेतुरित्यत आह मम अखिलपूर्वजाः पितृपितामहादयः पलितम् अनवलोक्य पुनः इत्येवकारार्थे अनवलोक्यैवेत्यर्थः । व्रतम् उपादिषत गृहीतवन्तः, अहं तु पलितोऽपि न तथेति स्वस्य विषयसुखे दुस्तर्के अशाश्वते चाभिनिवेशित्वमालोच्य खेद इत्यर्थः ॥२४॥**

પછી રાજા હસીને બોલ્યો કે હે પ્રિયતમે વૃદ્ધાવસ્થા ને કારણે હું લજ્જા પામતો નથી. પણ મારા બધા પૂર્વજો ધોળાવાળ જોયા પહેલા વ્રતનું ગ્રહણ કર્યું હતું ।।૨૪।।

पूर्वोक्तिलक्षितभावमेव स्पष्टप्रतिपत्तये वर्णति—

अहमहो ! विषयैरुपलालितः, पलितवानपि नैव समाददे ।
इति विषादनिबन्धनमाशु ते, निगदितं मयका प्रियवादिनि ।।२५।।

प्रियवादिनि ! विषयैः स्रक्चन्दनवनितादिभिर्भोग्यैः, उपलालितः, आवर्जितः, पलितवानपि श्वेतकेशोऽपि, अपिना पूर्वजानामपलितत्वसमुच्चयः । अहं स्वावमानने एकवचनम् । नैव, समाददे, व्रतमिति शेषः । इत्याश्चर्ये, इति एतत् विषादनिबन्धनम् विषादकारणम्, न तु पलितत्वमात्रम् मयका मया ते तव आशु शीघ्रं निगदितम् कथितम्, यथा त्वम् मम विषादे अन्यथाभिप्रायं परित्यजेरिति भावः ।।२५।।

। હું વિષયોથી છેતરાયેલો છતો ધોળાવાળ વાળો થઈ ગયો, છતાં પણ જે વ્રતનું ગ્રહણ કર્યું નહિ. માટે હે પ્રિયવાદિની તમારો વચન મને શિઘ્ર વિષાદનું કારણ થયું છે. ।।૨૫।।

हृदि निधाय तदुक्तमियं ततः, प्रियमुवाच रसाधिपतेः प्रिया ।
किमधुनाऽपि न तत्क्रियते तरां, फलितमेव जनैरुपवर्ण्यते ।।२६।।

रसाधिपतेः रसायाः भूमेरधिपतेः राज्ञः, "भूर्भूमिरचलाऽनन्ता रसा विश्वम्भरा स्थिरा" इत्यमरः । इयम् सद्यः प्रस्तुता प्रिया राज्ञी, तदुक्तम् नृपोक्तम्, हृदि निधाय मनसाऽवधार्येत्यर्थः । ततः तदनन्तरम्, प्रियम् नृपम् उवाच । किमित्याह—तर्हि, व्रतग्रहणमिति वा । अधुनाऽपि पलितभावे जातेऽपि किं न क्रियते तराम्, कस्मान्न क्रियते, न कोऽपि तत्र प्रतिबन्धक इत्याशयः । अहं तु तवाज्ञावशवर्तिनि तवेच्छैव ममेच्छेति नाहं तत्र प्रतिबन्धिकेत्यन्तर्भूताशयः तथैव समर्थयति—जनैः कार्यकरणेच्छुभिः, फलितम् एव न तु सङ्कल्पितम्, उपवर्ण्यते उच्यते । यो हि कर्त्ता सन् प्राग् वदति किन्तु कृत्वैव वदति, पूर्वमुक्तावकरणेऽपवादसम्भवात्, तस्मात् शुभस्य शीघ्राऽऽचरणमेव वरमिति भावः । अत्र जनकृतफलितकथनोपन्यासेन सामान्येन व्रतग्रहणात्साहसमर्थनादर्थान्तरन्यासोऽलङ्कारः ।।२६।।

પછી રાજાની પત્નીએ તેનું વચન મનમાં ધારી રાજાને કીધું કે તો પછી હમણાં કેમ કરતા નથી, જે ક્રિયા સફળ હોય લોકો તેની પ્રશંસા કરે છે. ।।૨૬।।

अथ राज्ञः कृत्यमाह—

तदनु तद्वचनं हितमीहितं, समवधार्य्य सुतं विनिवेश्य तम् ।
निजकराज्यपदे नृपतिर्वने, प्रमदया सह तापसतां ललौ ।।२७।।

तदनु तत्पश्चात्, राज्ञीकृतसमर्थनानन्तरम्, तद्वचनं तस्याः राज्ञ्याः वचनम्, हितम्, हितकारि, ईहितमभिलषितञ्चेति समवधार्य मनसा निश्चित्य, तं पूर्ववर्णितम् सुतं पुत्रं कमलकेसरम्,

निजकराज्यपदे विनिवेश्य स्थापयित्वा, नृपतिः मकरध्वजः प्रमदया स्त्रिया सह वने तापसवत् तपस्विव्रतम् ललौ, वानप्रस्थव्रतं गृहीतवानित्यर्थः। स्त्रिया सह तत्रैवाधिकारात्, अन्यत्र स्त्रीसाहित्यस्यासम्भवादितिभावः ॥२७॥

ત્યાર પછી રાણીની વાત હિતને કરવા જેવી છે. એમ મનમાં ધારી રાજા પોતાના સ્થાને પોતાના પુત્રને મુકી તે પત્નીની સાથે જ વનમા જઈ તપસ્વીપણાનો સ્વીકાર કર્યો. ॥૨૭॥

यमपि गर्भमुवाह निकेतने, स्थितिमती मकरध्वजवल्लभा ।
स ववृधे जलसिक्तवसुन्धरा–निहितबीजगताङ्कुरवत्क्रमात् ॥२८॥

मकरध्वजवल्लभा मदना निकेतने पूर्वकालीयगृहस्थाश्रमे, नतु वानप्रस्थे तत्र ब्रह्मचर्येणैव स्थितेः, अन्यथा व्रतभङ्गात्। स्थितिमती स्थिता सती यं गर्भम् उवाह धृतवत्यासीत्, सोऽपि गूढगर्भः, जलेन सिक्तम् वसुन्धरायाम् क्षेत्रे निहिताद्रुप्ताद्बीजाद् गतं जातमङ्कुरमिव ववृधे पुपोष ॥२८॥

મકરધ્વજની પત્ની ઘરમાં રહેતી વખતે જે ગર્ભનુ ધારણ કર્યું હતું તે પાણીથી સિંચાયેલા ભૂમિમાં રહેલા બીજના અંકુરાની જેમ ક્રમશઃ વધવા લાગ્યો. ॥૨૮॥

नृपमुनिः समवेक्ष्य विशेषविद्रहसि तां समपृच्छदुवाच सा ।
प्रथम एष मया व्रतविघ्नभी–कलितया कथितो न भवत्पुरः ॥२९॥

विशेषं गर्भादिलक्षणविशेषं वेत्तीति स तादृशः विशेषज्ञः विशेषविद् नृपमुनिः राजर्षिः मकरध्वजः समवेक्ष्य उदरवृद्धिलक्षणविशेषेणोपलक्ष्य गर्भमिति शेषः। रहसि एकान्ते, तां स्वप्रियां तपस्विनीम्, समपृच्छत् गर्भविषयजिज्ञासां कृतवान्, एतत्सत्यं वा कुत एतदितिवेति भावः। सा तपस्विनी मदना उवाच किमित्याह—व्रतविघ्नभीकलितया व्रते व्रतग्रहणे यः विघ्नः तस्माद् या भीः स्वधृतगर्भप्रकाशने तन्मोचनार्थाधः कालविलम्बः स्यात्, स च विघ्नान्तरस्याऽपि सम्भवान्न युक्तः, स्वस्य तत्रोत्साहाधिक्याचेति भावः। तया कलितया ग्रस्तया मया भवत्पुरः भवदग्रे प्रथमं प्रागेव एष धृतगर्भः न कथितः। एवञ्च एतत्सत्यमेव, अत्र च अन्यथा शङ्का च त्वया न कर्त्तव्येति भावः ॥२९॥

વિશેષજ્ઞ એવા તે રાજા મુનિ ગર્ભ જોઈ એકાંતમાં તેને પૂછ્યું તેણી એ કીધું કે પહેલા વ્રત ગ્રહણમાં વિઘ્નના ભયના લીધે મેં તમારી આગળ વાત કરી નહિ ॥૨૯॥

अथ तस्याः पुत्रोत्पत्तिमाह—

कुलपतेः पुरतोऽकथि तेन तत्स च रहोऽधृत तां विततान्वयाम् ।
सकललक्षणसारसमन्वितं, सुतमसूत ततः समये सती ॥३०॥

तेन नृपमुनिना तत् मदनायाः गर्भव्यतिकरम्, कुलपतेः, मुनिकुलनेतुः पुरतः अग्रे अकथि कथितम्, गोपनस्य अयुक्तत्वादिति भावः। स कुलपतिश्च तां विततान्वयाम् विततः विस्तृतः प्रसिद्धो वा अन्वयः कुलं यस्याः सा ताम् सत्कुलप्रसूतां मदनाम् रहः, गुप्तस्थाने अधृत–रक्षितवान्, वानप्रस्थानां

तादृशव्यतिकरस्यापवादजनकत्वात् तस्याः सुरक्षार्थं चेति भावः । ततस्तदनन्तरम् स समये गर्भपूर्ति-काले सती पतिव्रता मदना सकललक्षणसारसमन्वितं सकलानां लक्षणानां सामुद्रिकोक्तानां सारेण श्रेष्ठांशेन समन्वितम् सुतं पुत्रमसूत सुषुवे ॥३०॥

त्यारे तेणे कुलपतिनी आगळ ते वृत्तान्त कीधो, अने ते कुलपति कुलीन एवी ते मकरध्वजनी पत्नीने शुभ रीते राखी पछी ते सती स्त्रीए सर्व श्रेष्ठ लक्षणोथी युक्त एवा पुत्रनो जन्म आप्यो. ॥३०॥

अथ मदनायाः रोगोत्पत्तिमाह—

विदधतीषु यथाऽवगमं तपोधनकनीषु चिकित्सितमञ्जसा ।
उचितभेषजहीनतया वने, विषमसूचिरुजाऽजनि साऽर्दिता ॥३१॥

यथेति—अवगमं ज्ञानमनतिक्रम्य यथाऽवगमम् स्वज्ञानानुसारेण तपोधनकनीषु, तप एव धनं यस्य स तादृशस्तस्य कन्यासु तापसीषु अञ्जसा सौकर्येण चिकित्सितम् रोगप्रतीकारोपायम् विदधतीषु कुर्वतीष्वपि सत्सु वने, वैद्यादिसाधनस्य नगर एव सम्भवादिति भावः । उचितेन योग्येन रोगप्रती-कारसमर्थेन भेषजेन हीनतया रहिततया सा मदना विषमसूचिरुजा विषमया असाध्यया सूचिरुजा विषूचिकारोगेण अर्दिता पीडिता अजनि जाता ॥३१॥

तपस्वीओनी कन्याओ तत्परताथी ज्ञान प्रमाणे चिकित्सा करता छता योग्य औषधना अभावे मकरध्वजनी पत्नी विषुचिका रोगथी पीडित थई गई. ॥३१॥

विधुरतां धृतवत्सु जटाधरेष्वपि तदीयरुजाऽनुपशान्तितः ।
दयितया सह देवधरस्तदा, वणिगुपैदपि निर्जरसेनया ॥३२॥

तदीयाया मदनासम्बन्धिन्याः रुजायाः रोगस्य अनुपशान्तितः अशमनाद्धेतोः जटाधरेष्वपि-तदाख्यकुलपतिष्वपि आदरार्थे बहुवचनम् । वानप्रस्थानां केशकर्त्तनाभावात् । जटाधारित्वम् । अपिना तेषां ममत्वाद्यभावेऽपि सस्नेहदयालुत्वात् वैधुर्यमिति विरोधपरिहार सूचितः । विधुरताम्-मातरि मृतायामयं बालः कथं प्रतिपाल्यं इति, विमनस्कताम् ,; मनःपीडामित्यर्थः। धृतवत्सु, तदा तस्मिन् समये निर्जरसेनया निर्जरसेनेत्याख्यया, दयितया प्रियया सह देवधरः तदाख्यः वणिग् उपैत् समागच्छदपि । अपिर्विधुरत्वागमनयोः समकालत्वाय। एतेन जातकस्य दैवानुकूल्यमुक्तम्,अग्रे तेनैव तल्लालनवर्णनात्॥३२॥

तेनो रोग शांत नहि थवाथी जटाधारी मुनिओ खेद अनुभवे छते देवधर नामे वणिक निर्जर सेना नामनी पोतानी पत्नी साथे त्यां आव्यो. ॥३२॥

पुरवरं स च हर्षपुरं गतो, वलित उज्जयिनीनगरीवणिक् ।
गुरुजटाधरभक्तिपरायणः, शुभमनाः प्रविवेश तपोवनम् ॥३३॥

उज्जयिन्याः तदाख्यायाः नगर्याः वणिक् स देवधरः, पुरवरं नगरश्रेष्ठम् हर्षपुरं तदाख्यं नगरं गतः, वाणिज्यार्थमिति शेषः, वलितः ततः परावृत्तश्च-गुरुजटाधरभक्तिपरायणः;गुरौ जटाधरे तदाख्ये

कुलपतौ या भक्तिः तत्र परायणः प्रवणचेताः अत एव शुभमनाः उदाराशयः तपोवनम् प्रविवेश, गुरुसन्दर्शनार्थमिति भावः ॥३३॥

પહેલા તે હર્ષપુર નગર ગયો ત્યાંથી પાછો વળતો તે ઉજ્જયિનીનો વણિક દેવધર ગુરુ એવા તે જટાધારી મુનિની ભક્તિના લીધે શુભ ભાવે ને તપોવનમાં પ્રવેશ કર્યો. ॥૩૩॥

अथ तस्मै कुलपतेः पुत्रार्पणं वर्णयति—

कुलपतिं प्रणिपत्य विलक्षतां, प्रतिनिमित्तमपृच्छदथो वणिक् ।
गुरुरुवाच यथायथमेष च, प्रणयिनीनवसूतिरिहास्ति मे ॥३४॥

वितरताशु तमद्भुतलक्षणं, तनयमेव यथा भवतां वधूः ।
तमनुशास्ति तरां मयकाऽर्पितं, स च तथैव चकार विचारवित् ॥३५॥

कुलपतिं जटाधरं प्रणिपत्य प्रणम्य, अथो अनन्तरम्, वणिग् देवधरः विलक्षतामौदासिन्यम्। विमनस्कतामित्यर्थः, प्रति विलक्षतायामित्यर्थः, निमित्तम् हेतुम्, 'कुतो भवान् विलक्ष' इत्येवमपृच्छत्, गुरुः जटाधरः यथायथम् यथावृत्तम् उवाच-एव देवधरश्च उवाचेत्यनुषज्यते। किमुवाचेत्याह—इह अत्र मे मम प्रणयिनी प्रियतमा, नवसूतिः सद्यः प्रसूता अस्ति, तम् अद्भुतलक्षणम् तनयम्, आशु शीघ्रं वितरत मह्यम् दत्त। यथा येन भवतां गुरुचरणानां वधूः स्नुषा मम प्रियतमा एव, मयका मया अर्पितम् तम् तनयम् अनुशास्ति तराम् पालयति तराम्, विचारवित्, अवसरोचितविचारकुशलः स गुरुः जटाधरश्च तथैव, वणिगुक्तप्रकारेणैव चकार तनयं तस्मै अर्पयामासेत्यर्थः ॥३४॥३५॥

પછી તે વણિક કુલપતિને નમીને ઉદાસીનતાનું કારણ પૂછયું ગુરુએ સાચે સાચી વાત કીધી. ત્યારે તે બોલ્યો કે અહીં મારી પત્ની નવો જ પ્રસવવાળી છે. તેને પોતાની વધૂની જેમ જ તે અદ્ભુત લક્ષણવાળો બાલક જલ્દી આપી દો એ આપેલા તે પુત્રને સારી રીતે રાખશે ત્યારે તે વિચારક કુલપતિએ તેમ જ કર્યું ॥૩૪-૩૫॥

अथ वणिक्प्रिया प्रवृत्तिमाह—

कुलपतिप्रतिपादितपुत्रकं, समुपलभ्य वणिग्दयिताऽतुषत् ।
युगमजीजनदित्यपि सर्वतः परिजनादपि सिद्धिमचीकरत् ॥३६॥

वणिग्दयिता देवधरप्रियाकुलपतिप्रतिपादितम् कुलपतिना दत्तं पुत्रकं पुत्रम्, समुपलभ्य अतुषत्, तथा, युगम् यमलम् अजीजनत् इत्यपि इत्येवम्, सर्वतः सर्वत्र, परिजनादपि परिजनेष्वपि परिजनमुद्दिश्येति—'यब्लोपे पञ्चमी' सिद्धिं प्रसिद्धिम्। अचीकरत् परिजनद्वारापि देवधरपत्नी अपत्ययुगलं प्रसूतेति लोके प्रसिद्धिः कारितेति भावः ॥३६॥

તે વણિકની પત્ની કુલપતિએ આપેલા પુત્ર મેળવી અત્યન્ત ખુશ થઈને જોડલું ઉત્પન્ન થયું છે એમ સર્વ ઠેકાણે પોતાના પરિજનોથી વાત ફેલાવી દીધી. ॥૩૬॥

प्रमदया प्रमदोद्धतया समं, स गत उज्जयिनीपुरमुत्सवात् ।
अमरदत्तमथाह्वत नन्दनं, स्वभिधया तनयां सुरसुन्दरीम् ॥३७॥

प्रमदेन हर्षेण "प्रमदो हर्षे" इत्यमरः। उद्धतया परिपूर्णया पुत्रलाभेन प्रचुरप्रमोदसम्पन्नया प्रमदया स्त्रिया सह 'प्रमदा मानिनी कान्ता" इत्यमरः। उज्जयिनीपुरं गतः स देवधरः अथ पश्चात् उत्सवात् उत्सवपूर्वकम्, अभिधया नाम्ना नन्दनम् पुत्रम् अमरदत्तम्, तु पुनः तनयां स्वकन्याम् सुरसुन्दरीमाह्वत कारयामास। पुत्रस्यामरदत्त इति तनयायाश्च सुरसुन्दरीति नामकरणमकरोदित्यर्थः ॥३७॥

પછી તે વણિક અત્યંત ખુશ એવી પત્ની સાથે ઉત્સવપૂર્વક ઉજ્જયિની નગરે ગયા પછી ત્યાં પુત્રને અમરદત્ત નામે કન્યાને સુરસુન્દરી નામે બોલાવવા લાગ્યા ॥૩૭॥

अथामरदत्तस्य मित्रसम्पत्तिमाह—

धनधनेश्वरसागरजीविताभ्यधिकमित्रश्रीदयिताभवः
अमरदत्तसुहृत्समभूदिहासमगुणाकरमित्रमुदाह्वयः ॥३८॥

इह उज्जयिन्याम्, धनेन धनेश्वरः कुबेर इव यः सागरस्तन्नामा श्रेष्ठी तस्य जीविताऽभ्यधिका मित्रश्रीत्याख्या दयिता तस्या भव उत्पन्नः, असमानामनुपमेयानाम् आद्रणीयानाम् गुणानामाकरः खानिरिव मित्रमुत् आह्वयः नाम यस्य स मित्रमुन्नामा मित्रानन्दाख्य इत्यर्थः। चारित्रान्तरे तथैव दर्शनात् मुत्आनन्दयोः पर्यायशब्दत्वात्, अमरदत्तस्य सुहृत् मित्रं समभूत् अजायत ॥३८॥

તે અમરદત્તનો ધન ધનેશ્વર સાગરનો પ્રાણ કરતા પણ પ્રિય એવી મિત્રશ્રી પત્નીથી જન્મ પામેલો અનુપમ ગુણોના ખાણ જેવો મિત્રમુદ નામે મિત્ર હતો. ॥૩૮॥

अथ वर्षर्तुसमवतारमाह—श्लोकत्रयेण—

यमवलोक्य समुन्नतमम्बरे प्रमदमान्तरमेव शिखण्डिनः ।
प्रकटयन्त्यपि नृत्यविधानतः स्तनिततुङ्गमृदङ्गरवानुगम् ॥३९॥

यं जलभृत्समयम्, अर्थात् मेघसमयम्, समयपदोपादानेन तत्समय एव मयूरनृत्यमिति कविसमयसूचनार्थम्, अम्बरे आकाशे, समुन्नतम् घटाटोपप्रततम्। एतेन सजलत्वम्, ततश्चासितनीलत्वम्, तस्मादपि च दर्शनीयत्वमुत्कण्ठापादकत्वञ्चोक्तम्। अवलोक्य शिखण्डिनः मयूराः स्तनिततुङ्गमृदङ्गरवानुगम् स्तनितं गर्जितमेव तुङ्गोऽतिमहान् तालबद्धः मृदङ्गस्य तदाख्यवाद्यविशेषस्य रवः ध्वनिः तमनुगच्छतीति तद्यथा स्यात्तथा, स्तनितरूपमृदङ्गध्वन्यनुसारेणेत्यर्थः। नर्तका हि मृदङ्गशब्दानुसन्धानेन नृत्यन्तीति भावः। एतेन मयूरनृत्येऽपि तालबद्धतोक्ता। नृत्यविधानतः-नृत्यरूपेण व्यापारेण, आन्तरम् हृदयस्थम्, प्रमदं हर्षमेव प्रकटयन्त्यपि, अपिरेवार्थे। जलधरशब्दो हि मयूरान् मदयतीति भावः। लोकेऽपि हि हर्षे सति नृत्यादिकं तत्प्रकटनार्थं कुर्वन्तीत्याकूतम्। सजलभृत्समयः उपययावित्यग्रेतनेनान्वयः। रूपकाऽलङ्कारः ॥३९॥

सितविहङ्गमपङ्क्तिरवेक्ष्य यं, समुदितं नभसि स्तनितोद्धतम् ।
अवजिता शिखिनां विरुतैरिव, प्रचलिता सर एव नु मानसम् ॥४०॥

नभसि, आकाशे, समुदितम्, समुन्नतम्, अत एव स्तनितोद्धतम् स्तनितेन मेघगर्जितेन स्तनितं गर्जितम् इतिहैमः । स्तनितेन उद्धतम् उत्कटम् यं जलभृतम् अवेक्ष्य शिखिनां मयूराणाम् विरुतैः केकाभिः जातैरिति शेषः । मेघं दृष्ट्वा मयूरा विरुवन्ति इति भावः । अवजिताः तिरस्कृता इव । वर्षर्तौ हि केकैव प्रशस्यते न तु हंसस्वरः, स तु शरदि प्रशस्यते तत्र च केका न प्रशस्यते । यदुक्तं माघे—"समय एव करोति बलाबलं प्रणिगदन्त इतीव शरीरिणाम् । शरदि हंसरवाः परुषीकृतस्वर मयूरमयूरमणीयताम्" इति । यद्वा नभसि समुदितं स्तनितोद्धतम् यं अवेक्ष्य सितविहङ्गमपङ्क्तिः शिखिनां विरुतैः अवजिता इवेत्यन्वयः, पूर्वत्रान्वये अवेक्षणाश्रयाः शिखिन एव । अत्र पक्षे तु सितविहङ्गमपंक्तिरिति भेदः । सितविहङ्गमपङ्क्तिः सिताः श्वेता ये विहङ्गमाः पक्षिणः हंसा इत्यर्थः, तेषां पंक्तिः, श्रेणिः, हंसा हि आकाशे श्रेणीबद्धाश्चलन्तीति भावः । मानसं तदाख्यं सरः ह्रदं प्रति प्रचलिता एव, न्वित्युत्प्रेक्षायाम् । वर्षाकाले हंसा मानसं यान्तीति प्रसिद्धिः । तत्र मयूरविरुतविजितत्वोत्प्रेक्षा । अन्योऽपि हि विजितोऽन्यत्र गच्छन् दृष्ट इति भावः । उत्प्रेक्षाऽलङ्कारः ॥४०॥

उपययौ जलभृत्समयोऽन्यदा, तपऋतुं गमयन्विषयाद्बहिः ।
जलमयं भुवनं स सृजन्निव, प्रततवारिकदम्बकवर्षणैः ॥४१॥

स पूर्वोक्तप्रकारेण वर्णितः जलभृतः मेघस्य समयः वर्षर्तुः यद्वा जलभृत् तत्समयश्चेत्यर्थः । अन्यदा ग्रीष्मानन्तरम् तपऋतुं तपश्चासौ ऋतुश्च तं ग्रीष्मर्तुम् सकारस्य रुत्वे यत्वे लोपे चासन्धिः । विषयाद्देशाद्बहिः गमयन्, निष्कासयन्नित्यर्थः । नह्यन्यः स्वविषयेऽन्यस्थितिं सहत इति भावः । यद्वा तपः दुःखं तेन ऋतोर्विषयाद्बहिः निष्कासनमुचितमेवेत्यर्थः । वर्षर्तौ घर्मः शाम्यतीत्येवमुक्तिः प्रततवारिकदम्बकवर्षणैः प्रततानि यानि वारीणां जलानां कदम्बकानां समूहानां भाराणाम् वर्षणानि तैः कृत्वा भुवनं जगत् जलमयं जलप्लावितं सृजन् कुर्वन्निव उपययौ सम्प्रवृत्तः । अत्र ग्रीष्मर्तोः शमने निष्कासनत्वस्याध्यवसायादतिशयोक्तेः, सृजन्निवेत्युत्प्रेक्षायाश्च मिथोऽनपेक्षया स्थितत्वात्संसृष्टिः । यदुक्तम्—"मिथोऽनपेक्षयैतेषां स्थितिः संसृष्टिरुच्यते" इति ॥४१॥

જેને આકાશમાં ઉભરેલો જોઈ મયૂરો ગર્જનના ઉચ્ચા અવાજને અનુસરી., નૃત્ય ક્રિયાથી નાચીને હર્ષ પ્રકટ કરે છે. ભારે ગર્જના કરતો એવો આકાશમાં ઊંચે ચઢિ આવેલો જોઈ શ્વેત પક્ષિઓ હંસોના સમૂહ મયૂરોના અવાજથી હારેલાની જેમ માનસ સરોવર તરફ જતા રહ્યા તેવી વર્ષાઋતુને એક દિવસે ગ્રીષ્મ ઋતુ દેશવટો આપતો મહોળા પ્રમાણમાં પાણીના ધોધ વરસાવીને આખી પૃથ્વીને જલમય કરતો જાણે આવી પહોચ્યો. ॥૩૯-૪૦-૪૧॥ त्रिभिर्विशेषकम् ॥

विमलसंभ्रमहापुलिनोदिता–यतवटद्रुमसन्निधिभासितौ ।
सहचरी मिलतः किल तत्र तौ, कनकवीचिकया भुवलेखया ॥४२॥

विमलं यत् सिप्रायाः-सिप्राजलोज्झितं सैकतम् "पुलिनं तज्जलोज्झितं सैकतम्" इति हैमः । तत्रोदितस्य प्ररूढस्य आयतस्य दीर्घस्य, महत इत्यर्थः वटद्रुमस्य सन्निधिम् आश्रितौ प्राप्तौ सहचरौ सखायौ तौ अमरदत्तमित्रमुदौ श्रुतखेलया-श्रुता प्रसिद्धा खेला क्रीडा-'क्रीडा खेला च कूर्दनमि' त्यमरः। तथा कनकमोहिकया गुलिकाविशेषेण तत्र वसतौ, मिलतः सङ्गच्छेताम्, क्रिडेत्यैतिह्ये । मिलितौ तौ कनकमोहिकया क्रीडाञ्चक्रतुरित्यर्थः ॥४२॥

તે ઋતુમાં સ્વચ્છ સિપ્રા નદીના વિશાલ કાંઠે ઉગેલા ઊંચાવદ વૃક્ષની પાસે રહેલા તે બન્ને મિત્રો મોહિદંડી નામે પ્રસિદ્ધ રમત કરતા ભેગા થયા ॥૪૨॥

नृपसुते प्रणुदत्यपि मोहिकां, सुहृदि चाभ्युपगच्छति साऽविशत् ।
वटमहीरुहलम्बिशवानने, तदपि सोऽपि जहास च मित्रमुत् ॥४३॥

नृपसुते अमरदत्ते मोहिकां कनकमोहिकां प्रणुदति प्रक्षिपत्यपि, सुहृदि मित्रे मित्रमुदि अभ्युपगच्छति गृह्णति च, सा कनकमोहिका वटमहीरुहलम्बिशवानने । वटमहीरुहे लम्बिनः, लम्बमानस्य शवस्य मृतकस्यानने मुखे, अविशत् प्रविष्टा । तद्दृष्ट्वेतिशेषः । नृपसुतोऽपि सोऽपि जहास हसितवान् । क्रीडायां विच्छित्तिविशेषोपलब्धेरिति भावः ॥४३॥

રાજપુત્રે મોહિદંડીની રમત-રમતાં મોઇી ફેંકતે છતે ને મિત્રે તે પકડયા છતાં છટકીને તે મોહિ વડ વૃક્ષ ઉપર લટકતા શબના મોઢામાં પેસી ગઈ ત્યારે મિત્રમુદ હસવા લાગ્યો ॥૪૩॥

कुणप आह च मित्रमुदाह्वयं, परिहसन्तमिमं ननु मा हसीः ।
कतिपयेषु दिनेषु गतेष्वियं, तव मुखेऽपि ममेव पतिष्यति ॥४४॥

कुणपः शवः परिहसन्तमिमं मित्रमुदाह्वयं मित्रमुन्नामानमाह च, किमित्याह—नन्वित्यक्षमायां मा हसीः न हस, कुत इत्याह—कतिपयेषु दिनेषु गतेषु व्यतीतेषु तव मुखेऽपि, मम इव मम मुखे इव, यथा मम मुखे अपतत्तथेत्यर्थः । इयं कनकमोहिका पतिष्यति, अस्याऽन्यदापदि कुतो हासः स्वापदे कल्पते इति भावः ॥४४॥

ત્યારે તે શબે હસતા મિત્રમુદને કહ્યું કે હસો નહી, કેટલા દિવસ ગયે છતે મારી જેમ તમારા મુખમાં પણ આ પડશે. ॥૪૪॥

तदथ तस्य वचो विनिशम्य सो-ऽप्यमरदत्तमभाषत भीतिभृत् ।
कृतमनेन च खेलनकेन नौ, सदनमेव सखे ! लघु यावकः ॥४५॥

अथ शववचनानन्तरं, तस्य शवस्य तत्पूर्वोक्तं वचः विनिशम्य श्रुत्वा भीतिं बिभर्तीति स भीतिभृत् भीतः सोऽपि मित्रमुदपि अमरदत्तमभाषत किमित्याह—कृतमिति । नौ आवयोः अनेन खेलनकेन खेलनमेव खेलनकं तेन क्रीडयेत्यर्थः, कृतमलम्, न क्रीडनीयमित्यर्थः । तर्हि किं कर्तव्यमित्याह—सखे ! सदनं गृहं प्रत्येव लघु शीघ्रम्, "अथोऽत्र शीघ्रं त्वरितं लघु" इत्यमरः । यावकः योवा;

मोक्ष्यामि इत्यर्थः । मिलिष्यामीति यावत् । अत्र त्वया वियुज्य गृहं गतः सन् मिलिष्यामीत्यर्थः । बाहुलकात् भविष्यति णकः युक् पुंमिश्रण इति धातुः ॥४५॥

પછી તે શબની વાત સાંભળી ડરી ગયેલો તે મિત્રમુદ અમરદત્તને કીધું કે મિત્ર ! આ રમતથી સર્યું, હવે આપણે બન્ને ઘરે જઈએ. ॥૪૫॥

अकथि तेन शवाननमध्यतः, पतितया भवतोऽपि किमेतया ।
सहृदयास्त्यपराऽपि ममान्तिके, किमिति तत्र यथारुचि रम्यते ? ॥४६॥

तेन अमरदत्तेन अकथि, किमित्याह–शवेति । शवस्य वटवृक्षलम्बिशवस्य आननस्य मुखस्य मध्यतः मध्ये, सार्वविभक्तिकः तसिः । 'आननं लपनं मुखमि' त्यमरः । पतितया एतया कनकमोहिकया, भवतः अपि किम् ? न किमपि, त्वया खेदः कर्त्तव्यः, यद्वा तव किं विनष्टम् ? न किमपीत्यर्थः । ननु तदभावे कथं क्रीडनीयमिति चेत्तत्राह—सहृदयं ! समानं हृदयं यस्य स तदा मन्त्रणे, मित्र ! अपरा अन्या, मम अन्तिके पार्श्वेऽप्यस्ति, तत्तर्हि किमिति कुतो हेतोः यथारुचि च यथेच्छं न रम्यते क्रीड्यते । क्रीडासाधनसत्त्वाद् गृहगमनं न युज्यते इत्यर्थः ॥४६॥

ત્યારે તેણે કીધું કે એક મોહિ શબના મોઢામાં પડી ગઈ. તેથી તમારે શું ? હે મિત્ર ! મારી પાસે બીજી પણ મોહિકા છે. તો ઇચ્છા મુજબ કેમ ન રમાય ? ॥૪૬॥

इति सुकोमलयाऽपि गिरोदितः, स सुहृदा रमते स्म न मित्रमुत् ।
वहति चेतसि चारुविरागतां, किमपि न प्रतिभाति हि देहिनाम् ॥४७॥

इति–पूर्वोक्तप्रकारेण सुकोमलया हृदयावर्जकया मधुराक्षरया अपि गिरा–वाण्या सुहृदा मित्रेणामरदत्तेन, उदितः कथितः स मित्रमुत् न रमते स्म नारमत, अरमणे अर्थान्तरं न्यस्यति–चेतसि चारुविरागतां दृढवैराग्यम् वहति प्राप्ते सति, देहिनां किमपि क्रीडादि न प्रतिभाति रोचते, रुचौ हि अनुरागः कारणम्, यद्विषये विरागः, कथं तद्रोचतां देहिने इति भावः ॥४७॥

આમ મધુર વાણીથી કહેવાયેલો મિત્રમુદ મિત્ર સાથે રમતો ન હતો તે મનમાં અત્યન્ત વિરક્તિ પામિ ગયો હતો ( ભયભીત ) પ્રાણીને કંઈ પણ ગમતું નથી. ॥૪૭॥

अथ–अनन्तरम्—

अथ विहाय जवादपि तावुभौ, निजनिजं सदनं समुपेयतुः ।
परिजने रमते मतिरङ्गिनां, न विजनेऽपि वने हि कथञ्चन ॥४८॥

उभौ अमरदत्तमित्रमुदावपि तां क्रीडाम् विहाय त्यक्त्वा जवात् शीघ्रं वेगाद्वा, बालानां हि एष स्वभावो यद्गृहं प्रति जवेन गच्छन्ति, इति भावः । निजनिजं सदनं समुपेयतुः प्रापतुः, ननु किमिति गृहमेव गतवन्तौ नान्यत्रेत्याशङ्क्य गृहगमनं समर्थयति—हि यतः, अङ्गिनां देहिनाम्, मतिः बुद्धिः परिजने स्वसम्बन्धिजने पारिवारिकजने रमते रुचि धत्ते, कथञ्चनापि कथमपि विजने जनागमरहिते वने न रमत इत्यस्यानुवृत्तिः, अतः गृहमेव गतवन्ताविति भावः ॥४८॥

પછી શીઘ્રતાથી તે મોહિને છોડી તે બન્ને પોતપોતાના ઘરે ગયા. કેમકે પ્રાણીઓની બુદ્ધિ પરિવારમાં જ ઠીક રહે છે. કિન્તુ કોઈ પણ વિજનમાં નહિ. ॥૪૮॥

अशनितोर्ध्वममुं मिलितं हितं, नृपकुमारवरो निजगाद तम् ।
त्वमधुनाऽपि वयस्य ! किमुन्मना, इव मयाऽपि परं समवेक्ष्यसे ? ॥४९॥

अशनं भोजनं तदस्त्यस्येत्यशनी, तस्य भावोऽशनिता भोजनक्रिया, प्रकृतिजन्यबोधे प्रकारीभूतो भावप्रत्ययार्थ, इति नियमात् । तदूर्ध्वम् उपरि भोजनानन्तरमित्यर्थः । मिलितम् हितं मित्रं तं वनात्क्रीडां विहायागतम् अमुमग्रे स्थितम् मित्रमुदम् नृपकुमारवरः अमरदत्तः निजगाद, किमित्याह— वयस्य! सखे ! त्वमधुना भोजनानन्तरं गृहेऽपि मया हर्षकारणेन मित्रेणापि मया किम् कुतो हेतोः परमत्यन्तम् उन्मना उद्विग्न इव समवेक्ष्यसे, उद्वेगकारणं मह्यं वद ! नहि मित्रात्किमपि गोपनीयं मित्रस्य, नवामित्रेण मित्रसमीपेऽकारणमौदासीन्येन भवितव्यमिति भावः ॥४९॥

ભોજન વેલા પછી ભેગા થયેલા તે મિત્રને રાજપુત્રે કીધું કે હે મિત્ર ! તમે હમણાં પણ શંકા ઉચાટ અનુભવો છો ? હું આ ચોખ્ખું જોઈ શકું છું. ॥૪૯॥

अवितथे कथिते खलु तेन चा—भ्यधित राजसुतो मधुराक्षरम् ।
वदति नैव शवः पुनरेतकद् वनचरस्य सुरस्य विजृम्भितम् ॥५०॥

तेन मित्रमुदा अवितथे सत्ये कथिते सति, खल्विति वाक्यालङ्कारे । राजसुतोऽमरदत्तः मधुराक्षरम् यथास्यात्तथा, एतेन हृद्यता विश्वसनीयता चोक्ता, मधुराक्षरं हि झटिति ग्राह्यं भवतीति भावः । अभ्यधितावादीत्, किमित्याह—वदतीति । शवः, मृतकः, नैव वदति, प्राणवायुर्हि उक्तौ कारणम्, शवस्य च तदभावादिति भावः । ननु तर्हि यच्छ्रुतं तत्कुत आगतमिति चेत्तत्राह—एतदेवैतकत् त्वया श्रुतं वचनं पुनस्त्वर्थे वनचरस्य वनवासिनः, सुरस्य देवस्य विजृम्भितम् व्यापारः, विलासो वा, नतु शवस्येति भावः ॥५०॥

તે મિત્ર યથાર્થ વાત કીધે છતે રાજપુત્રે મધુરવાણીથી કીધું કે શબ કદી બોલતું નથી આતો વનચર દેવનું ફરમાન છે. ॥૫૦॥

अवितथं वितथं यदि तेन वा, प्रकथितं खलु वेद तदेव कः ।
मतिबलं प्रवितत्य ततः सखे—ऽयमपि विघ्नकणः परिभूयते ॥५१॥

तेन—शवेन सुरेण वा यदि प्रकथितम् तत् अवितथं सत्यं वितथमसत्यं वा, तत्, सत्यासत्यत्वे, एव, कः खलुः वेद ! न कोऽपि जानाति, भविष्यतोऽल्पज्ञेन ज्ञातुमशक्यत्वादिति भावः । ततः सत्यत्वेऽपि सखे ! मतिबलं बुद्धिकौशलम्, प्रवितत्य विस्तार्य, अयमपि विघ्नकणः अन्तरायलेशः परिभूयते जीयते, अस्माभिरिति शेषः । बुद्धिबलेन तव भयं भेत्स्यामीति मा चिन्तितो भूरित्यर्थः ॥५१॥

તેણે સાચું કે ખોટું કીધું છે કોણ જાણે છે ? હે મિત્ર બુદ્ધિબલને થોડું વધારી આવ્યુકડા વિઘ્નને દબાવી શકાય. ॥૫૧॥

अतुलमाप फलं मतिसागरः, सचिव एव यथा विहितोद्यमः ।
वद स कोऽयमिति प्रतिरूपितः, स सुहृदा वदति स्म वदावदः ॥५२॥

यथैव-मतिसागरः सचिवः मन्त्री विहितोद्यमः कृतप्रयत्नः सन् अतुलमनुपमम् फलमाप, तथा भयं निवारयिष्यामीति पूर्वेण सम्बन्धः । स त्वया दृष्टान्तितः अयं मतिसागरः कः कीदृशचरितः वद तच्चरित्रं कथय इतीत्थं सुहृदा मित्रेण मित्रमुदा प्रतिरूपितः जिज्ञासितः पृष्टो वा स वदावदः वक्ता, वदेरचि निपातनम् । वदति स्म कथयामास ॥५२॥

જેમ મન્ત્રી મતિસાગર પ્રયત્ન કરીને અતુલ ફળ પામ્યો હતો. મિત્રથી સમજાવાયેલો તેણે પૂછ્યું કે અમિતસાગર કોણ છે તે કહો ત્યારે તે કહેવા લાગ્યો. ॥૫૨॥

अथमतिसागरचरिताङ्गभूतं नगरादि वर्णयन्नाह—

भरत एव पुरी किल मालिनी, कलकलिङ्गमहाविषयेऽस्ति या ।
निजसमृद्धिवितानसमुच्चयै-रजयदेव पुरीममरावतीम् ॥५३॥

भरत इति—भरते क्षेत्रे एव नत्वन्यत्र किलेत्यैतिह्ये, कले प्रसिद्धे कलिङ्गे तदाख्ये महाविषये महादेशे मालिनी तन्नाम्नी पुरी अस्ति, या मालिनी पुरी चम्पेत्यपरनाम्नी चरित्रान्तरे तथोक्तेः निजसमृद्धीनां प्रचुरधनधान्यादीनां वितानानां राशीनां समुच्चयैः समूहैः कृत्वा अमरावतीमिन्द्रपुरीम् पुरीम् नगरीमजयदेव इन्द्रपुर्यपेक्षयाऽप्यधिकसमृद्धिमती सेत्यर्थः ॥५३॥

ભરતક્ષેત્રમાં ઉત્તમ એવા કલિંગ દેશમાં માલિની ચંપા નામે નગરી હતી જે પોતાની ઉચ્ચ સમૃદ્ધિ સમૂહોથી દેવોની નગરી અમરાવતીને પણ જાણે જીતતી હતી તેના કરતાં પણ ચઢિયાતી હતી. ॥૫૩॥

नरपतिर्जितशत्रुरजायत, प्रथितविक्रम एव स यम् ।
स्वर्दायताभिरजस्रमजीगपन्, दिविषदो दिवि धर्मधुराधरम् ॥५४॥

तत्र मालिनीपुर्याम् स तादृश एव प्रथितविक्रमः ख्यातपराक्रमः जितशत्रुः तन्नामा नरपतिः अजायत, यम् धर्मस्य धुरामग्रगामित्वं धरतीति स तादृशस्तम् धर्मस्य धुरायाः भारस्य धरम् धारकम् धर्मात्मानमित्यर्थः । दिवि स्वर्गे, दिविषदः देवाः स्वदयिताभिः देवीभिः अजस्रम् सन्ततम्, अजीगपन्-गापयाञ्चक्रुः, न केवलं पृथिव्यां स्वर्गेऽपि ख्यातप्रभावः स नरपतिरिति भावः ॥५४॥

ત્યાં પ્રસિદ્ધ પરાક્રમી જિતશત્રુ નામે રાજા થયો ધર્મધુરન્ધર એવા જેને દેવો સ્વર્ગમાં હંમેશાં પોતાની પત્નીઓ પાસે ગવરાવતા હતા. ॥૫૪॥

अजनि तत्सचिवो मतिसागरः, स्वमतिवैभवरञ्जितनागरः ।
सुरगुरुप्रतिरूपतयैव यन्-मतिमधत्त, विधिः श्रितकौतुकः ॥५५॥

तत्सचिवः तस्य जितशत्रोर्नरपतेः सचिवः स्वमतिवैभवरञ्जितनागरः स्वमतिवैभवैः निजबुद्धिकौशलैः रञ्जितः तोषितः नागरः, नगरलोकः येन स तादृशः मतिसागरः तन्नामा अजनि अभूत,

सन्मतिं यस्य मतिसागरस्य मतिम्, विधिः ब्रह्मा श्रितकौतुकः श्रितम् कौतुकम् सदृशनिर्माणकर्तृ कौतूहलं येन स तादृशः सन् सुरगुरुप्रतिरूपतयैव सुरगुरोः बृहस्पतेः प्रतिरूपतया अपररूपतया सादृश्येनेत्यर्थः एव अवत्त कृतवान्। ब्रह्मसर्गे सदृशद्वयनिर्माणादर्शनात् कौतुकादेवास्य निर्माणमितिभावः। ( उपमा ) ॥५५॥

તેનો પોતાના બુદ્ધિ વૈભવથી નગરજનને ખુશ કરનાર એવો મતિસાગર નામે મન્ત્રી હતો, કૌતુકના લીધે જાણે વિધાતાએ સુરગુરુની બીજી પ્રતિમા તરીકે જેની બુદ્ધિનું નિર્માણ કર્યું હતું. ॥૫૫॥

प्रियतमाऽस्य बभूव गुणावली, विलसदुज्ज्वलभूरिगुणाश्रयः ।
तनुभवोऽपि सुबुद्धिरभूत्तयो–र्विनयिनां नयिनां च धुरि स्थितः ॥५६॥

अस्य मतिसागरस्य गुणावली तदाख्या प्रियतमा भार्या बभूव, तयोः मतिसागरगुणावल्यो-र्द्वयोः विलसताम् उज्ज्वलानां निर्मलानां भूरीणां बहूनां गुणानामाश्रयः, विनयिनां विनयवतां नयिनां नीतिज्ञानां च धुरि अग्रे स्थितः, अग्रे गणनीय इत्यर्थः, तनुभवः पुत्रोऽपि सुबुद्धिः, अपिना पुत्रस्य पित्रनुहरणं सूचितम् । सुबुद्धिनामाऽभूत् ॥५६॥

તે મન્ત્રીની ગુણાવલી નામે પત્ની હતી જે પવિત્ર એવા ઘણા ગુણોથી શોભતી હતી. સુબુદ્ધિ નામનો તેનો પુત્ર પણ વિનયવંતો ને નીતિ જ્ઞાનામાં અગ્રસર હતો. ॥૫૬॥

समभवन्नपरेऽपि तयोः सुता, गुणगणग्रहणे विहितादराः ।
श्रुतमहोदधिपारमवापिता, जनकनाविकसन्मतिबेडया ॥५७॥

तयोः गुणावलीगुणसागरयोः अपरेऽन्येऽपि, न केवलं सुबुद्धिरेवेति भावः' गुणगणग्रहणे विहितादराः सोत्साहाः सुताः पुत्राः समभवन्, एतेन बह्वपत्यस्य मूर्खाऽपत्यता नावश्यकीति सूचितम् । ते च जनकः पिता मतिसागरः नाविकः कर्णधार इव—"कर्णधारस्तु नाविकः" इत्यमरः । तस्य सन्मतिरेव बेडा "तरी तरण्यौ बेडा" इति हैमः । तया कृत्वा । श्रुतानि शास्त्राणि महोदधिरिव तस्य पारं परतटम् अवापिताः प्रापिताः, पित्रा शास्त्राण्याध्यापिता इत्यर्थः ॥५७॥

તે બન્નેના ગુણ સમૂહોનું ગ્રહણ કરવામાં આદરવાળા એવા બીજા પુત્રો પણ હતા જેઓ પિતારૂપી નાવિકથી સમ્યગ્ જ્ઞાનરૂપી વહાણ દ્વારા શ્રુતસમુદ્રના પાર પમાડ્યા હતા. ॥૫૭॥

वसुमतीदयितेन विभूषिते, सदसि कोऽपि समागमदन्यदा ।
गुणनिकेतनिमित्तविदां वरः, कनकदण्डकवेत्रिनिवेदितः ॥५८॥

अन्यदा वसुमतीदयितेन वसुमती पृथिवी दयिता पाल्यत्वेन भार्येव प्रिया यस्य स तेन वसुमत्याः पृथिव्याः दयितेन पतिना "प्रेयस्याद्याः पुंसि पत्यौ" इति हैमः । राज्ञा जितशत्रुणा विभूषिते सदसि राजसभायाम् कनकदण्डकेन हेमदण्डधारकेण वेत्रिणा द्वारपालेन निवेदितः ज्ञापितः, कोऽपि अज्ञातनामा, गुणनिकेतः, गुणाश्रयश्चासौ निमित्तविदां शकुनज्ञानां वरश्च स, समागमदागतवान् ॥५८॥

એક દિવસે રાજા વડે સભા વિભૂષિત થયે છતે સુવર્ણ દંડવાળા દ્વારપાલ વડે જણાવાયેલો ગુણોની ખાણ એવો કોઈ શ્રેષ્ટ જોશી આવ્યો. ॥૫૮॥

जय नरेश्वर ! जीव चिराय चे—त्यभिहिताशिषमासितमासने ।
तमवदद् नृपतिर्वद किं किम—स्त्यवगतं भवताऽपि निमित्तकम् ? ॥५९॥

नरेश्वर ! जय चिराय जीव च इतीत्थम् अभिहिताशिषम् उच्चरिताशीर्वचनम् आसने आसितम् उपविष्टम् तम् निमित्तज्ञम्, नृपतिरवदद्पृच्छत्, किमित्याह—किं किं निमित्तकम् निमित्तं तच्छास्त्रं वा भवता त्वयाऽपि अवगतं ज्ञातमस्ति, इति वद कथय ॥५९॥

હે રાજા જય પામો લાંબુ જીવો એમ આશિષ આપીને આસન ઉપર બેઠેલા તે જોશીને રાજાએ પૂછ્યું શું શું નિમિત્ત જાણો છો, તે બતાવો. ॥૫૯॥

वसुमिताङ्गनिमित्तकलाविदि—त्यभिहिते गणकेन पुनर्नृपः ।
स तमवग् वद भावि सदःसदां, किमपि भूतविदो हि परःशताः ॥६०॥

वसुरष्टौ तन्मितानां तत्सङ्ख्यानामङ्गानामष्टाङ्गानां निमित्तस्य लक्षणस्य कलां शास्त्रं वेत्तीति स तादृशः अहमिति शेषः, इतीत्थं गणकेन दैवज्ञेन–"ज्योतिषिको गणक दैवज्ञावपि" इत्यमरः । अभिहिते कथिते सति, स जितशत्रुर्नृपः, पुनः, तं निमित्तज्ञमवगपृच्छत्, किमित्याह—सदःसदां सभासदानां किमपि यत्किञ्चित् भावि भविष्यत्, वद, कथय, ननु किमिति भूतं न पृच्छति इत्याशङ्क्याह—हि यतः भूतविदः अतीतज्ञाः परःशताः शतात्परे अधिकाः, सन्तीति तत्तेभ्योऽपि ज्ञास्यते ज्ञातं वा । एतेन भविष्यद्वस्तुवक्तुर्विरलत्वं सूचितम् तस्मात्तदेव पृच्छामीत्याशयः ॥६०॥

ત્યારે જોશી અષ્ટાંગ નિમિત્ત વિદ્યા હું જાણું છું, એમ કહે છતે ફરી રાજાએ તેને કીધું કે સભાસદોને કોઈ ભાવી વાત કહો કેમકે ભૂતના જાણકાર તો સેંકડો છે. ॥૬૦॥

स च विचार्य जगौ जगतीपतिं, शुभमतेर्मतिसागरमन्त्रिणः ।
अपि कुटुम्बजुषो भविता मृति—र्हतविपक्षक ! पञ्चदिनान्तरे ॥६१ ॥

स निमित्तज्ञश्च विचार्य, जगतीपतिं राजानं जगौ, किमित्याह—हतो विपक्षो येन स तत्सम्बुद्धौ हतविपक्षक ! जितशत्रो ! शुभमतेः प्रशस्तबुद्धेः, मतिसागरमन्त्रिणः कुटुम्बजुषः सपरिवारस्यापि, न तु केवलस्य तस्यैवेत्यपेरर्थः । मृतिः मरणं पञ्चदिनान्तरे पञ्चदशदिवसाभ्यन्तरे भविता ॥६१॥

ત્યારે તે વિચારીને રાજાને કીધું કે હે જિતશત્રુ રાજા પખવાડીયાની અંદર કુટુંબીને શુભ મતિવાળા એવા મતિસાગર મન્ત્રીનું મૃત્યુ થશે. ॥૬૧॥

श्रुतिसृतिं विनिवेश्य स तद्गिरा, हत इव व्यसुवद् नृपतिः सभाम् ।
मम पुनीहि गृहं स्वपदाम्बुजै—रिति निरूप्य समानयदाकपम् ॥६२॥

स नृपतिः श्रुतिसृतिं कर्णमार्गम् "अयनं वर्त्ममार्गाध्वपन्थानः पदवीसृतिरि" त्यमरः । तन्नि-मित्तज्ञस्य वचः विनिवेश्य कृत्वा श्रुत्वेत्यर्थः । हतः प्राप्ताघात इव, सभां व्यसृजत्, तथा मन्त्री मतिसागरः स्वपदाम्बुजैः मम गृहं पुनीहि, इतीत्थं निरूप्य, अभ्यर्थ्य, आलयम् स्वगृहं समानयत्, निमित्तज्ञः तमिति शेषः । नह्यतिथेयाः, आतिथ्यं विपद्यपि त्यजन्तीतिभावः ॥६२॥

કાનના અંકુશ સમાન તે વાત સાંભળી આઘાત પામેલા જેવા રાજાએ સભાનું વિસર્જન કર્યું. ને ચરણકમળથી મારા ઘરને પવિત્ર કરો એમ કહી જોશીને ઘરે લેઈ ગયો. ॥૬૨॥

स्म परिपृच्छति मन्त्रिवरः स तं, गणकमुल्वणभक्तिपुरःसरम् ।
यदुदितं विदितं नृपतेः पुरः, सरलतां प्रतिपद्य तदुच्चर ॥६३॥ युग्मम् ॥

स मन्त्रिवरः तं गणकम्, उल्वणा उत्कंठा या भक्तिः तत्पुरःस्सरं तत्पूर्वकम्, परिपृच्छति स्म, किमित्याह—नृपतेः पुरोऽग्रे, यदुदितं कथितं, त्वयेति शेषः, तद् विदितं ज्ञातं, मयेति शेषः । तत्तदेव, सरलतां प्रतिपद्य स्वीकृत्य, येन क्रमपुरःसरं बोधः स्यात्तथा, उच्चर कथय ॥६३॥

તે મન્ત્રી શ્રેષ્ઠ તે જોશીને ઉત્કટ ભક્તિપૂર્વક પૂછયું કે રાજાની આગળ આપે જે કીધું તે જાણું હવે કંઈ સરળ થઈ ને બોધ્યો. ॥૬૩॥

अकथि तेन सुबुद्ध्यभिधाश्रुता-त्तव सुतात्प्रथमाद् भविता मृतिः ।
इति निशम्य विनिर्मितसत्कृतिं, स विससर्ज निमित्तविदं रयात् ॥६४॥

तेन निमित्तज्ञेन अकथि कथितम्, किमित्याह—सुबुद्ध्याभिधया सुबुद्धिनाम्ना श्रुतात्प्रसिद्धात्तव-प्रथमाज्जेष्ठात्सुतात् मृतिर्भविता भविष्यति-जेष्ठपुत्रात्तव मरणान्तकष्टं भविष्यतीत्यर्थः इतीत्थं निशम्य श्रुत्वा रयात् शीघ्रतया, विनिर्मिता कृता सत्कृतिः सत्कारो यस्य तं तादृशं निमित्तविदं विससर्ज ॥६४॥

ત્યારે તે જોશીએ કીધું કે તમારા સુબુદ્ધિ નામના જ્યેષ્ઠ પુત્રથી તમારું મૃત્યુ થશે, એમ સાંભળી તે મંત્રીએ સારો સત્કાર કરી જલ્દીથી નિમિત્તજ્ઞને રજા આપી. ॥૬૪॥

अशनपानकमूत्रपुरीषक-स्थलततीर्विरचय्य निवेद्य च ।
तमपि पुत्रमहो ! गुरुपेटिका-न्तरमुमक्षिपदक्षयकौशलः ॥६५॥

अक्षयम् अमेयं कौशलं चातुर्यं यस्य स तादृशः मतिसागरः, अशनस्य भोजनस्य पानकस्य जलादिपानस्य मूत्रपुरीषकयोश्च सम्पादनार्थं स्थलततीः प्रकोष्ठपरम्पराम् विरचय्य कारयित्वा, निवेद्य, विबोध्य च तं सुबुद्धिनामानं पुत्रं गुर्वी महती या पेटिका तस्या अन्तरमन्तः—अन्तरमध्ये अमुम् यत् श्वेतं कृष्णं तातस्समादिशति तत्करणशीलं विनयनम्रं, उपक्षिपत् स्थापितवान् । अहो ! इत्याश्चर्यं तद्बुद्धिकौशलस्य, भाविनो वा निरोधोद्यमस्य विलक्षणत्वात् ॥६५॥

અરે ! અખૂટ કૌશલવાળો તે મન્ત્રી ખાવા પીવાની પાયખાના ને પેશાબની બધી જગ્યા બનાવી ને બધું સમજાવીને પેટીની અંદર તે પુત્રને મૂકી દીધો. ॥૬૫॥

न विपदा पतति प्रतिवासरं, स्फुरति सम्पदपायविवर्जिता ।
नयति लोकयुगं वशतां यया, भवति पुण्यवतः खलु सा मतिः ॥६६॥

पुण्यवतः—स अपायपरिहारार्थैतादृशमतिस्फुरणे उपपत्तिमाह नेति–पुण्यवतः सा तादृशी मतिः भवति खलु यया मत्या कृत्वा, प्रतिवासरं कस्मिन्नपि वासरे विपत् न आपतति, अपायेन विघ्नेन विवर्जिता सम्पत् स्फुरति वर्धते, लोकयुगम् इहामुत्र च, वशतां साध्यतां नयति प्राप्नोति । पुण्यप्रभावादेव मत्यामेतद्वैलक्षण्यम् येन समन्ताच्छुभमुत्पद्यते इति भावः ॥६६॥

પુણ્યશાલીઓની તેવી બુદ્ધિ હોય છે કે જેના લીધે વિપદા આવી શકતી નથી. ને દરરોજ હાનિથી રહિત એવી સંપદા ચઢતી રહે છે ને ઇહલોક ને પરલોક બન્ને કાબૂમાં આવી જાય છે. ॥૬૬॥

स्वयमिमां विनियन्त्र्य स तालकै–र्नृपतिदृष्टिसमक्षममोचयत् ।
भवनसारमिदं निखिलं ममे–ति विनिरूप्य नृपेण सुमुद्रिताम् ॥६७॥

का सा पुण्यप्रयोजिता मतिर्मतिसागरस्येत्याह—स मतिसागरः इमां–पुरुषप्रमाणां जलमोक्षादि-युतां मञ्जूषां तालकैः स्वयंविनियन्त्र्य तालकावृकं दत्त्वेत्यर्थः । इदं पेटिकास्थितम् मम निखिलं भवन-सारम् गृहश्रेष्ठधनमिति विनिरूप्य इत्थं कथयित्वा नृपेण सुमुद्रिताम्, मुद्राङ्किताम्, नृपतिसमक्षम् नृपतिपार्श्व एव, अमोचयत् स्थापितवान् । यथा न कोऽपि इमामुद्घाटयेत्, सुरक्षिता चैषा भवेदिति ॥६७॥

તે મંત્રીએ પોતે તાલુંવાસી રાજાની નજર સામે જ આ મારા ઘરની શ્રેષ્ઠ મૂડી છે એમ કહી રાજા વડે જોઈ મુદ્રાંકિત કરાયેલી તે પેટીને મૂકાવી રાખી. ॥૬૭॥

प्रकृतमन्यदपि प्रियमात्मनः, प्रयत एव विधाय स धीसखः ।
अगमदालयमध्यगचैत्यकं, गृहमरक्षयदश्वपदातिभिः ॥६८॥

आत्मनः प्रियं स्ववाञ्छितम्–अन्यदपि प्रकृतं प्रकरणात्प्राप्तम् विधाय कृत्वा, स धीसखः मति-सागरमन्त्री प्रयतः सावधान एव, आलयमध्यगचैत्यकम् गृहमध्यस्थजिनप्रासादमगमत्, गृहञ्च अश्व-पदातिभिः अश्ववाहसैनिकैश्च अरक्षयत् यथाऽन्योऽत्र न प्रविशेत्, उपद्रवेद्वा ॥६८॥

અને સાવધાનીથી પોતાનો મિત્ર એવું બીજું પણ અવસરોચિત કરીને તે મન્ત્રી ગૃહમધ્યે રહેલા ચૈત્યમાં જ તો રહ્યો ને ઘોડેસવારોથી ઘરનું રક્ષણ ચોકી પહેરો કરાવ્યું. ॥૬૮॥

अहनि पञ्चदशे समुपागते, स्पृशति यौवनमित्यभवन्महान् ।
कलकलो गगनाङ्गणमुत्वरो–ऽमवरोधचरास्यसमुद्भवः ॥६९॥

अयमकालसुतो [illegible] [illegible] [illegible] ।
[illegible] [illegible] [illegible] [illegible] [illegible] [illegible] ॥७०॥

पञ्चदशे अहनि—दिने समुपागते प्राप्ते सति-यौवनं लक्षणया मध्यकालं स्पृशति प्राप्नुवति-नृपपुत्रिकायाः प्रवररत्नवतीं उत्तमरत्नभूषितां कबरीं केशपाशविशेषम्-'केशवेशे कबरी' इतिहैमः। क्षुरिकया क्षुराख्येणास्त्रविशेषेण परिभूय छित्त्वा, अयं दृश्यमानः एव,महत्तमः ज्येष्ठतरः, अमात्यसुतः, व्रजति पलाय्य गच्छति, तत्तस्माद् हेतोः, युवत्याः केशकर्त्तनं महानपराधः तस्य सर्वाङ्गसौन्दर्यापहारकत्वात्, तत्रापि च राजपुत्र्याः, नहि वैधव्यं विना युवत्याः केशकर्त्तनं दृष्टम्, तत्रापि च मणिलोभादेव केशकर्त्तनमिति चौर्यमपि इति प्राणदण्डयोग्योऽपराधोऽयमिति भावः। भटाः आरक्षपुरुषाः ? धावत धावत, सम्भ्रमे द्विरुक्तिः। इति पूर्वोक्तप्रकारः, अवरोधचराणामन्तःपुरचारिणाम् दासीप्रभृतीनामास्येभ्यः मुखेभ्यः समुद्भवः यस्य स तादृशः, गगनाङ्गणसृत्वरः आकाशमभिव्याप्तः, एतेन कलकलस्य तारस्वरप्रयोज्यत्वमुक्तम्, महान् दूरप्रसारी कलकलः कोलाहलः अभवत् ॥६९-७०॥

પન્દરમો દિવસ આવ્યે છતે ને અર્ધા દિવસ થયે છેતે શીઘ્ર જે અતઃપુરમાં રહેનારાઓના મુખે થતો આકાશમાં ફેલાતો મહાન કોલાહલ થવા લાગ્યો. ॥૬૯॥

આ મન્ત્રીનો મોટો પુત્ર રાજપુત્રીમાં શ્રેષ્ઠ એવી રંભાવતીનો અંબોડો ચપ્પુથી કાપી તે જલ્દીથી ભાગ્યો જાય છે માટે યોદ્ધાઓ દોડો દોડો. ॥૭૦॥

सदसि तद्विनिशम्य रुषाऽरुणः, क्षितिपतिर्ध्वजिनीपतिमादिशत् ।
सचिवनिग्रहणाय महाबलं, बलसमन्वितमाजिभयानकम् ॥७१॥

सदसि सभायां स्थित इति शेषः, तत्कलकलम्, विनिशम्य, रुषा क्रोधेन अरुणः रक्तः विवर्ण इत्यर्थः क्षितिपतिः, आजौ युद्धे भयानकम् परपक्षभयजनकम्, महाबलम् ध्वजिनीपतिं सेनान्यम्, बलेन सैन्येन समन्वितं सचिवनिग्रहणाय, मन्त्रिदण्डनाय समादिशदाज्ञापितवान्। अवन्ध्यकोपा हि राजान इति भावः ॥७१॥

તે સાંભળી સભામાં ક્રોધથી લાલ થયેલા રાજાએ મન્ત્રીના નિગ્રહ માટે યુદ્ધમાં ભયંકર સૈન્યયુક્ત મહાન બળવાન સેનાપતિને હુકમ આપ્યો. ॥૭૧॥

सपृतनं पृतनापतिमागतं, समवगम्य बभाण स मन्त्र्यपि ।
अनुचरैर्भवतः परिवेष्टितो, नृपतिविज्ञपनं करवै सकृत् ॥७२॥

पृतनापतिं सेनापतिम्, सपृतनं ससैन्यम्, आगतम्, समवगम्य ज्ञात्वा स मन्त्री मतिसागरोऽपि बभाण, निवेदितवान्, भवतः अनुचरैः परिवेष्टितः अतः पलायनादिशङ्का त्वया न कर्त्तव्येतिभावः सकृत् एकं वारम्, न तु वारम्वारम्, तावतैव कार्यसिद्धेरितिभावः। नृपतेः विज्ञपनम्, करवै त्वदनुग्रहेणेति शेषः। पञ्चायविच्छेदस्तथाऽऽचरेरिति ॥७२॥

તે મન્ત્રી પણ સેના સહિત સેનાપતિને આવેલો જોઈ વિચારીને બોલ્યો કે તમારા સેવકોથી ઘેરાયેલા એવા મને એક વાર રાજાને વિનંતિ કરવા દો. ॥૭૨॥

अनुमतः स च तेन समेत्य तं, वसुमतीशमनुमजिज्ञपत् ।
धनकनकमयाहितपेटकोद्घाटनकर्मणि मर्मणि कर्मठम् ॥७३॥

अथ तदनन्तरम्—तेन सेनापतिना अनुमतः आज्ञप्तः स मन्त्रिमतिसागरः, समेत्य आगत्य तं निग्रहाज्ञापकं, वसुमत्यां पृथिव्यां शतमन्युरिन्द्र इव स्थितस्तम् राजानम्, गणकवाक्यम्, पूर्वकथितं निमित्तज्ञवचनम्, अजिज्ञपत् निवेदितवान्, स्मरणार्थमिति भावः, अथानन्तरम्, शर्मणि कल्याणजनके आहितस्य पूर्वं स्थापितस्य पेटकस्य उद्घटनकर्मणि निमित्तार्थे सप्तमी-"उद्घटनक्रियानिमित्तमित्यर्थः कर्मठम् कुशलं जनञ्च अजिज्ञपदिति शेषः, यद्वा शर्मणि कर्मठम् कल्याणकार्यनिपुणं तं वसुमतीशतमन्युम्, गणकवाक्यम्, अथ तथा, आहितपेटकस्योद्घाटनरूपं यत्कर्म तन्निमित्तञ्च व्यजिज्ञपत् ॥७३॥

તે સેનાપતિની અનુમતિ પામી, આવી તે મન્ત્રીએ રાજાને જોશીનું વચન ને કલ્યાણ કરવા સમર્થ તે મૂકી રાખેલી પેટી ઉખાડવા માટે વિનંતિ કરી. ॥૭૩॥

स नृपतिः कुपितोऽप्युपरोधतोऽस्य—सचिवस्य चकार वचस्तथा ।
सुतमवेक्षत तत्र च मन्त्रिणो, निदधतं कबरीक्षुरिके करे ॥७४॥

स नृपतिः कुपितः—अपि, अस्य सचिवस्य, उपरोधतोऽनुरोधात्, तथा तादृशं मन्त्र्युक्तं वचः चकार पेटकमुद्घाटयामासेत्यर्थः । तत्र पेटके च, कबरी क्षुरिके करे हस्ते निदधतं धृतं मन्त्रिणः सुतमवैक्षत दृष्टवान् ॥७४॥

કુપિત થયેલો પણ રાજા મન્ત્રીની વિનંતિથી તેનું વચન માન્યું. તેમ કરાયે છતે તે પેટીમાં બન્ને હાથમાં ચપ્પુ ને અંબોડો ધારણ કરેલા તે મન્ત્રીના પુત્રને જોયો. ॥૭૪॥

तदवलोकवशादथ विस्मिते—ऽवनिपतौ सचिवोऽवददीदृशम् ।
वनचरस्य सुरस्य च कस्यचिद्, मयि विचेष्टितमन्यभवद्विषः ॥७५॥

अथ पश्चात्—तस्य तदवस्थस्य मन्त्रिसुतस्य अवलोकवशात् अवलोकनहेतोः अवनिपतौ राज्ञि विस्मिते विस्मयं गते सति सचिवः मतिसागरः, अवदत्, किमित्याह—अन्यभवद्विषः अन्यजन्मशत्रोः, इह जन्मनि तु न सम्भाव्यत इति भावः । वनचरस्य कस्यचित् वाक्यालङ्कारे, सुरस्य मयि मद्विषये, ईदृशं भवताऽनुभूयमानं विचेष्टितम् आचरणं, कथमन्यथैतदद्भुतं भवेत् । मनुष्यशक्तिसम्भवाभावादेवादृशविचेष्टितस्येति भावः ॥७५॥

પછી તે જોવાને લીધે રાજા વિસ્મય પામ્યે છતે મન્ત્રી બોલ્યો કે બીજા ભવનો મારો શત્રુ એવા કોઈ વનચર દેવનો મારે વિષે આ બધો કાર્ય છે. ॥૭૫॥

अवनिवासवमन्त्रिवरौ च तौ, तदवलोक्य विरक्तहृदौ पदम् ।
स्वसुतयोर्विनिवेश्य निजं निजं, व्रतमवाप्य दिवं समुपेयतुः ॥७६॥

तौ अवनिवासवमन्त्रिवरौ राजा सचिवश्च, चः पूर्वोक्तानुभवविशिष्टयोस्तयोः समुच्चायकः । तत् अद्भुतमवस्थम्, अवलोक्य, विरक्तहृदौ वैराग्यवासितौ सन्तौ स्वसुतयोः निजं निजं पदं निवेश्य

स्थापयित्वा, व्रतमवाप्य स्वीकृत्य दिवं स्वर्गं समुपेयतुः जग्मतुः । व्रतस्वीकारस्य हि स्वर्गापवर्गौ फलमिति भावः ॥७६॥

તે રાજા અને મન્ત્રી બન્ને તે જોઈ વૈરાગ્ય ભાવનાવાળા થઈ પોત પોતાનું પદ પોત પોતાના પુત્રને આપી વ્રતનું ગ્રહણ કરી સ્વર્ગે ગયા. ॥૭૬॥

तव सखेऽप्यवितास्मि विनिश्चितं, तनुकविघ्नमिमं लघु मा मुहः ।
इति सधैर्यवयस्यवचोऽमृतं, स परिपीय जगावथ मित्रमुत् ॥७७॥

सखे-तवेति तनुकविघ्नमित्यनेन सहसम्बन्धे षष्ठी, विनिश्चितं ध्रुवं अवितास्मि रक्षितास्मि, मतिसागरमन्त्रिवदहमिति शेषः । कमित्याह—इमं सम्भाव्यमानं तनुकमत्यल्पं विघ्नम् लघु त्वरया मा मुहः मा परिशोचीः । आतुरभावे हि परिशोचनमितिभावः । इत्युक्तप्रकारेण, सधैर्यस्य धैर्यवतः मित्रस्यामरदत्तस्य वचः अमृतमिव तत् परिपीय सादरं श्रुत्वा, अथ पश्चात् स मित्रमुत् जगौ ॥७७॥

विषयसेवनवद्विषयस्थिति-स्तदियमाशु सखे ! परिमुच्यते ।
न खलु यत्र मनो दधते धृतिं, भवतु तत्र कथं विदुषां स्थितिः ? ॥७८॥

मित्रमुदुक्तिमेवाह—सखे ! विषयस्य शब्दादेः सेवनवत्, भोगवत्, विषये अस्मिन् देशे स्थितिः एव स्थानम् यथा विषयसेवनं न सुखाय किन्त्वन्ततो दुःखायैव कल्पते तथा तद्देशस्थितिरपि दुःखायैवेतिभावः । तत्तस्मात् कारणात् इयमेतद्देशे स्थितिः आशु परिमुच्यते, विलम्बे अनर्थान्तरस्यापि सम्भवादिति भावः । खलु निश्चयेन, यत्र मनः धृतिः स्वास्थ्यम् न नैव दधते धत्ते, दध् धातुर्भ्वादिः, नतु धाधातुरिह ग्राह्यः, तस्यैकवचने दधते इति रूपाभावात् । तत्र विदुषां स्थितिः कथं भवतु, तत्र विद्वद्भिर्न स्थातव्यम्, विद्वत्त्वहानेरिति भावः ॥७८॥

હે મિત્ર ! તમારા આ નાના ને નબળા વિઘ્નને અવશ્ય નિવારીશ મુંઝાઓ નહિ આમ ધીર એવા મિત્રના વચનામૃતનું આદર સહિત પાન કરી તે મિત્રમુદ બોલ્યો—હે મિત્ર ! વિષયનું સેવન જેમ ક્ષણિક છે તેમ વિષયોની સ્થિતિ પણ છે માટે શીઘ્ર આ વિષયનો ત્યાગ જ કરાય, જ્યાં મનનું ધૈર્ય ન ટકે ત્યાં વિદ્વાનોની આસ્થા કેમ હોય ? ન હોય. ॥૭૭-૭૮॥

इति विचिन्त्य चिरं हृदि तावपि, प्रचुरचारुविचारविचक्षणौ ।
किल परस्परमन्दिरसुप्तो-पधिमुखेन निरीयतुरालयात् ॥७९॥

अथ देशाटनविचारानन्तरम्—वैराग्यानन्तरम् तयोश्चरितमाह इतीति—इति पूर्वोक्तप्रकारेण हृदि चिरम् विचिन्त्य, नतु त्वरया, अन्यथा विचारदोषसम्भवात् इति भावः । एतेन च तयोर्बुद्धिवैराग्यमुक्तम् । मतिमानेव हि चिरं विचारयति, मन्दस्तु सहसा प्रवर्तते इति । प्रचुरमत्यन्तं चारौ फलसिद्धिजनके विचारे विचक्षणौ कुशलौ तावपि परस्परम्, मन्दिरे या सुप्तता शयनक्रिया तद्रूपोपधिः तस्या उपधिः छलं तन्मुखेन तद्द्वारेण,एकः गृहान्नियन्मित्रगृहं शयनाय गच्छामीति क्व गच्छसीति पर्यनुयुञ्जानं पित्रमात्रादिकं छलयित्वा, एवमन्योऽपि इत्यर्थः । आलयाद् गृहात् निरीयतुः निर्गतौ, किलेत्यैतिह्ये । छलाकरणे हि मात्रादेरवरोधसम्भवाद्विचारितेऽन्तरायापत्तेरपि सम्भवादिति भावः ॥७९॥

આમ મનમાં ખૂબ વિચાર કરી ઘણાને ઉત્તમ વિચારમાં પડુ એવા તે બન્ને એક બીજાના ઘરમાં સૂઈ જવાને બહાને ઘરથી નીકળી ગયા. ॥૭૯॥

विदधतावनिशं गमनं च तौ, विषयजातविलोकनविस्मितौ ।
कुसुमपत्तनबाह्यवनान्तिके, विबुधसद्म विलोकयतः स्म तत् ॥८०॥

अथ तयोर्गृहान्निर्गमानन्तरमभावितचरितमाह—तौ अमरदत्तमित्रमुदौ, अनिशम् सन्ततम्—"सन्तताविरतानिशमि" इत्यमरः । गमनं विदधतौ विराममकृत्वैव गच्छन्तौ, एतेन स्थिरलक्ष्याभावाद्यदृच्छागमनं सूचितम् । चः पूर्वोक्तनिर्गमनसमुच्चायकः । विषयजातस्य देशसमूहस्य विलोकनेन विस्मितौ विस्मयमापन्नौ सन्तौ नानावैचित्र्यावलोकनादिति भावः । कुसुमेति कुसुमपुरे कुसुमेत्याख्यस्य पत्तनस्य नगरस्य पाटलिपुत्रापरनामकस्य–'पाटलिपुत्रं कुसुमपुरं' इति हैमः । बाह्यं यद्वनमुद्यानं तदन्तिके तत्पार्श्वे ताद्वर्ण्यमाणं विबुधसद्म देवालयम्—"अमरा निर्जरा देवास्त्रिदशा विबुधाः सुराः" इत्यमरः । विलोकयतः स्म अवलोकयामासतुः ॥८०॥

દેશો દેખવાથી વિસ્મયને પામેલા તે બન્ને ( મંદિર ) દિવસને રાત ગમન કરતા કરતા કુસુમપુરના બહારના ઉદ્યાન પાસે એક ચૈત્ય જોયું. ॥૮૦॥

पृथुशिलाशकलैरधिकौशलं, सुघटितेऽपि जनैर्भृशमीक्षितः ।
न खलु मन्धिरलक्षितलक्षणै–रिव कदाचन यत्र विबुध्यते ॥८१॥

अथ देवालयं वर्णयति यत्र देवालये अधिकौशलम् कौशलमधिकृत्य,कौशलेनेत्यर्थः । पृथवो विशालाः याः शिलाः तासां शकलैः बृहच्छिलाखण्डैः कृत्वा सुघटिते, निर्मिते, अपि अलक्षितमज्ञातं लक्षणं निर्माणप्रकारो येषाम् तैः अतज्ज्ञैरिव, जनैः तज्ज्ञैः—अथ च अलक्षितान्यनधीतानि लक्षणानि व्याकरणशास्त्राणि यैस्तैर्यथासन्धिस्स्वरसंयोगो न ज्ञायते तथेत्यध्यर्थो ज्ञेयः भृशम् सावधानम्, ईक्षितः सन्धिः शिलाखण्डसंयोगे प्रवेशः कदाचन न नैव विबुध्यते ज्ञायते । तेनाद्भुतनिर्माणकौशलं तत्रेति सूचितम् । तद्विबुधसद्म विलोकयतः स्मेति पूर्वेणान्वयः ॥८१॥

વિશાળ શિલાખંડોથી અત્યન્ત કૌશલપૂર્વક બનાવેલો હતો, લોકો ખૂબ ખૂબ જોઈને પણ તે મન્દિરનો સાંધો અલક્ષિત લક્ષણની જેમ જાણી શકાતો ન હતો. ॥૮૧॥

विमलशीतलपुष्करदीर्घिका–सवननिर्मितिपावितवर्ष्मकौ ।
तत इमौ त्रिदशायतनं गतौ, विविधचित्रसमाहितलोचनम् ॥८२॥

ततः देवालयदर्शनानन्तरम्—विमलं शीतलं च य पुष्करं जलम् 'उदकं पाथः पुष्करमित्यमरः,' दीर्घिका वापी, "वापी तु दीर्घिका" इत्यमरः । तत्र सवनस्य स्नानस्य निर्मित्या विधानेन मज्जनाद्धेतोः पावितं पवित्रीकृतं वर्ष्म शरीरं ययोस्तौ तादृशौ देवमन्दिरद्वारस्थदीर्घिकास्नानेन स्वच्छशरीरौ सन्तौ इमौ अमरदत्तमित्रानन्दौ, त्रिदशायतनं देवालयम्, विविधेषु नानाजातीयेषु चित्रेषु आलेख्येषु समाहितं संलग्नम् रचनासौन्दर्याल्लोचनं यथास्यात्तथा गतौ [illegible] प्राप्तवन्तौ ॥८२॥

વિમલને શીતળ વાવમા સ્નાન કરવાથી પવિત્ર શરીરવાળા તે બન્ને વિવિધ ચિત્રોથી તૃપ્ત નેત્રવાળા છતાં તે દેવમન્દિરમાં ગયા. ॥૮૨॥

उपलक्लृप्तमनोहरपुत्रिकां, नृपसुतः समवैक्षत तत्र च ।
नयनयुग्ममन्यत सोऽर्थवत्, किममृतं प्रियलाभमृतेऽपरम् ? ॥८३॥

तत्र देवालये स नृपसुतः अमरदत्तः उपलेन प्रस्तरेण क्लृप्तां निर्मिताम् मनोहरां पुत्रिकां पुत्तलिकां समवैक्षत, नयनयुग्मम् अर्थवत्सफलम् अमन्यत च । एतेन पुत्तलिकायाः लोकविलक्षणरचनाचातुर्यं सूचितम् । पुत्तलिकादर्शनेन नयनयुगस्य साफल्ये हेतुमाह प्रियस्य हृद्यस्य–प्रियलाभ एवामृतम्–नान्यत्किमपीत्यर्थोलाभमृते विहाय अपरं किमममृतम् ? अमृतवत्तृप्तिजनकम् ? न किमपीत्यर्थः । अत्र नयनयुगसाफल्यस्य विशेषस्य वैधर्म्येण प्रियलाभान्यामृतत्वनिषेधरूपसामान्येन समर्थनादर्थान्तरन्यासोऽलङ्कारः ॥८३॥

ત્યાં રાજપુત્રે પત્થરથી બનાવેલી પુતલી જોઈ પોતાના બે નેત્રોને સફળ માન્યા અમૃત પ્રિયલાભ શિવાય બીજું શું છે ? ॥૮૩॥

दशशतीं स समैहत चक्षुषां, दशशतेक्षणवत् कमलेक्षणः ।
विषयमूर्तिमिमामवलोकय–न्नपघनस्थितिरूपमनोरमाम् ॥८४॥

स कमलेक्षणः—कमले इवेक्षणे यस्य स तथा चक्षुरक्षीक्षणम् इति हैमः । अपघनानामवयवानां स्थितिरपूर्वरचना तस्या रूपं सौन्दर्यं तेन मनोरमाम् चित्ताह्लादजनिकाम्–"अङ्गं प्रतीकोऽवयवोऽपघन" इति "रूपम् स्वभावे सौन्दर्ये" इति चामरः । "निवेशो रचनास्थिते"इति हैमः । इमां प्रस्तुताम् विषयमूर्तिं पुत्तलिकामवलोकयन् दशशतानि सहस्राणि ईक्षणानि नेत्राणि यस्य स तादृश इन्द्रः तद्वत् चक्षुषां दशशतीं दशानां शतानां समाहारः दशशती ताम् समैहत समीहितवान् । द्वाभ्यां नेत्राभ्यां दर्शने तृप्यभावात् सहस्रैर्लोचनैरित्यर्थः । दर्शने तु कथञ्चित्तृप्तिः सम्भाव्यते, दर्शनप्राचुर्यादिति भावः ॥८४॥

કમલ જેવા નેત્રવાળો તે અંગોની રચનાને સૌંદર્યથી મનોહર આ પુતલીની મૂર્તિને પોતાને ઈન્દ્રની જેમ હજાર નેત્રની ઇચ્છા કરતો હતો. ॥૮૪॥

कठिनमस्य न तद् हृदयं कृतं, विदधता विधिना कथमन्यथा ।
सुमशरः कुसुमैरपि सायकै–रतितमां परिपीडयितुं क्षमः ? ॥८५॥

अस्य अमरदत्तस्य—हृदयं विदधता रचयता विधिना ब्रह्मणा कठिनम् दृढम्, पीडासहम्, तद्धृदयं न कृतम् । ननु कुतो हेतोरेतदुच्यते । इतिचेत्तत्राह—अन्यथा हृदयस्य दृढत्वे, कथम् केन प्रकारेण सुमशरः पुष्पबाणः कामः कुसुमैः पुष्पनिर्मितैरतिकोमलैराघातायोग्यैरपि सायकैः बाणैः परिपीडयितुं व्यथयितुं क्षमः, अभूदिति शेषः । यदि हि तद् हृदयं कठिनं स्यात्त कुसुमैः शरैः पीडयितुं शक्यम् स्यात् पीडितं तु तेन मन्यते यत् तद् हृदयं न कठिनमिति हेतोः साध्यस्य साधनादनुमानालङ्कारः, तल्लक्षणं यथा—'अनुमानं तु विच्छित्त्या हेतोः साध्यस्य साधनमि'ति ॥८५॥

વિધાતાએ તે રાજપુત્રને બનાવતી વખતે તેનું હૃદય કઠણ બનાવ્યું નહિ, નહિતર કામદેવ તેના પુષ્પના બાણોથી પણ કેમ અત્યંત પીડા આપી શકતે. ॥૮૫॥

मनसिजेन युवा स पराहतः, किमपि नैव विवेद विचेतनः ।
अपरथा कथमेष दृशत्स्त्रियां, रतिलयं विदधीत विधीरतः ? ॥८६॥

मनसिजेन-कामेन ! 'शम्बरारिर्मनसिजः' कुसुमेषुरनन्यज' इत्यमरः, पराहतः सन्तप्तः, कामपीडित इत्यर्थः । स युवा, विचेतनः चेतनाचेतनविवेकशून्योऽभूदित्यर्थः, अत एव किमपि न विवेद विचारितवान् । यो हि विवेकशून्यः स कथं विचारयेदिति भावः। ननु कथमेतज्ज्ञायते इति चेत्तत्राह—अपरथा अन्यथा, तस्य सचेतनत्वे इत्यर्थः । एष युवा अमरदत्तः विधीरतः धैर्यवैधुर्यात् भावप्रधानो-निर्देशः । दृषदा प्रस्तरेण निर्मिता स्त्री पुत्तलिका तस्याम् , रतिलयम् रत्यात्मकमनोभावम् कथं विदधीत कुर्यात् । यो हि सचेतनः स नाचेतने रतिमिच्छतीत्ययं विचेतन इति ॥८६॥

કામદેવથી આઘાત પમાડાયે છતે ને હોંશ ગુમાવી બેઠેલા તે યુવાન રાજપુત્ર કંઈ સમજતો ન હતો અન્યથા વિધિની પ્રેરણાથી તે શી રીતે પત્થરની સ્ત્રીને વિષે, અનુરાગવાળો થાત. ॥૮૬॥

सुरवधूर्ऋषिशापपराहतो-पलमयत्वमशिश्रियदेषिका ।
न दृषदीदृशरूपविवर्तना, क्वचन सम्भवतीति विचिन्तयन् ॥८७॥
अभिदधे सुहृदा सकुमारकः, प्रबलमित्र ! पुरान्तरमीयते ।
स निजगाद सखे ! क्षणमास्यतां, किमपि यावदिदं वपुरीक्ष्यते ॥८८॥

युग्मम् ।

एषिका पुरो दृश्यमाना पुत्तलिका सुरवधूः कापि देवी, ननु सुरवधूः कथं प्रस्तरमयी स्यादिति चेत्तत्राह—ऋषिशापेन पराहता उपलमयत्वम् अशिश्रियत्, आश्रितवती, ऋषिशापेन पाषाणमयी जातेत्यर्थः । ननु कुत एतत्तव कल्पनेति चेत्तत्र हेतुमाह—दृषदि प्रस्तरे, ईदृशस्य लोकमनोहरस्वरूपस्य-सौन्दर्यस्य कृतेर्वा विवर्तना घटना क्वचन कुत्रापि न सम्भवति इतीत्थं विचिन्तयन् सकुमारकः अमर-दत्तः सुहृदा मित्रेण मित्रमुदा अभिदधे सम्बोधितः, किमित्याह—प्रबलमित्र ! मित्रवर । पुरान्तरम् पुरस्यान्तः ईयते गम्यते भोजनादिसम्पादनायेति शेषः । स अमरदत्तः निजगाद, उत्तरितवान्, उत्तरमेवाह—सखे ! मित्र ! क्षणम्, किञ्चित्कालमास्यताम्, अत्रैव स्थीयताम् ननु, अत्र किं कार्य तवेत्याशङ्क्याह, यावद् यदवधि इदमद्भुतदर्शनीयम् वपुः स्वरूपम् ईक्ष्यते । एतदीक्षणं विहाय नान्यत्र गन्तुमीहे इत्यर्थः ॥८७।८८॥

તે આ કોઈ દેવની સ્ત્રી ઋષિના શાપથી પત્થર થઈ ગઈ છે. પત્થરનું આવું રૂપ નિર્માણ ક્યાંય પણ હોઈ શકે નહિ એમ વિચારતો હતો ત્યારે તેણે મિત્રે કીધું કે મિત્ર ! ખાવા ચલો નગરીની અંદર જઈએ, ત્યારે તે બોલ્યો કે હે મિત્ર ! ક્ષણ વાર અહિં રહિએ એટલામાં આ શરીર કાંઈક જોઈ લઈએ. ॥૮૭-૮૮॥

अमरदत्तवचो विनिशम्य सो–ऽभ्यधित मित्रमुदागमितक्षणः ।
पुनरपीदमथायमवोचत, ह्रियमपास्य नृपस्य तनूभवः ॥८९॥

अमरदत्तवचः विनिशम्य, आगमितक्षणः ह्यत्यायितकियत्क्षणः प्रतीक्षितकियत्क्षणः, स मित्रमुत् पुनरपि अभ्यधित पुरान्तरमीयते इत्यवोचत । अथानन्तरम्, अयं नृपस्य तनूभवः पुत्रोऽमरदत्तः ह्रियं लज्जामपास्य दूरीकृत्वा. कामातुराणां न भयं न लज्जेति भावः । इदं अवोचत प्रत्युत्तरितवान् ॥८९॥

અમરદત્તની વાત સાંભળી કેટલાક ક્ષણ પ્રતીક્ષા કરી મિત્રમુદ ચાલો એમ બોલ્યો, ત્યારે ફરીથી તે રાજપુત્ર શરમ છોડી બોલ્યો. ॥૮૯॥

अहमिमामपहातुमनीश्वरः, सुचरितामिव पूर्वभवप्रियाम् ।
यदि बलादपि मां नयसे सखे!, न तदसून्मम तर्हि किमन्तिताम् ? ॥९०॥

अथामरदत्तोत्तरवाक्यमेवाह—अहममरदत्तः, सुचरितां सुशीलां पूर्वभवप्रियाम् पूर्वजन्मभार्यामिव, इमां दर्शनपथगताम्, इयं मम पूर्वजन्मभार्यातुल्या कथमन्यथा मम मनोऽस्यामनुरक्तमिति भावः । अत एव, अपहातुं त्यक्तुम् अनीश्वरोऽसमर्थः । सखे ! यदि मां बलात् बलपूर्वकम्, तदनिच्छतस्तद्विधापनं बलप्रयोग एवेति भावः । नयसे पुरान्तरमितः प्रापयसे, तत् तदा ममासून् प्राणान्, अन्तिताम् अन्तः चरमावस्था अस्त्येषामित्यन्तिनस्तेषां भावस्तत्ता ताम् अन्तमित्यर्थः । तर्हि किं न, नयसे इत्यनुषज्यते । इतो गमनापेक्षया वरं मम प्राणत्यागः, यदीतो मां बलान्नयसे, तर्हि अहं प्राणान् त्यक्ष्यामि, एनां विना ममावस्थानासम्भवादिति भावः ॥९०॥

હે મિત્ર ! ઉત્તમ ચરિત્રવાળી પૂર્વભવની પ્રિયા જેવી આ મૂર્તિને છોડવાને હું સમર્થ નથી. જો મને બળપૂર્વક લઈ જશો તો મારા પ્રાણોને નહિ લઈ જઈ શકો. તો આના સમીપપણું કેમ ( છોડાવો છો. ) ॥૯૦॥

इति स तद्वचनाच्छ्रुतिसङ्गताद्, व्यधित मङ्क्षु सुहृद् परिदेवनम् ।
तमनु रोदिति स स्म नृपाङ्गजो, ध्वनिमयं भुवनं समभूत्तदा ॥९१॥

स सुहृत् मित्रमुत्, श्रुतिसङ्गतात्कर्णप्राप्तात्, इति पूर्वोक्तात्, तस्य अमरदत्तस्य वचनात् हेतोः, तद्वचनं श्रुत्वा मम मित्रमवशो जात इति दुःखादित्यर्थः । मङ्क्षु द्रुतम्, "द्राङ्मङ्क्षु सपदि द्रुतमि" त्यमरः । परिदेवनम् विलापम् "विलापः परिदेवनमि" त्यमरः । व्यधिताकार्षीत् । तं मित्रमुदमनुपश्चात्, स नृपाङ्गजोऽमरदत्तः, रोदिति स्म । मित्रं विलपन्तं दृष्ट्वा सोऽप्यधैर्याद्विललापेत्यर्थः । तदोभयोर्विलापकाले भवनं देवायतनं भुवनमिति पाठेत्वस्य जगदित्यर्थः । 'भुवनं जगती जगत्' इतिहैमः । ध्वनिमयम् उभयो रोदनध्वनिपूर्णं समभूत् ॥९१॥

આમ તેનો વચન સાંભળી તે મિત્ર તરતજ વિલાપ કરવા લાગ્યો ને તેની પાછળ તે રાજપુત્ર પણ રડવા માંડ્યો. તે વખતે આખો સંસાર અવાજથી ભરી ગયો. ॥૯૧॥

गुणवदिभ्यमणिर्मणिसारकः, सकरुणः स च तत्र समागतः ।
स्म परिपृच्छति शोकनिबन्धनं, तमथ सागरिराह यथातथम् ॥९२॥

गुणवतामिभ्यानां मणिरिव, यद्वा गुणवांश्चासाविभ्येषु मणिरिव श्रेष्ठः मणिसारकः तन्नामा इभ्यः तत्र देवालये समागतः, स मणिसारकश्च सकरुणः द्वावपि रुदन्तौ पृष्ट्वा आसदयः, शोकस्य निबन्धनं कारणं परिपृच्छति स्म । अथ तत्प्रश्नानन्तरम् सागरिः सागरस्यापत्यं पुमान् सागरिः मित्रयुत् तम् मणिसारकम् यथातथं यथावृत्तम् आह कथितवान् ॥९२॥

त्यां गुणीने दयाळु मणिसार नामे श्रेष्ठिशिरोमणि आव्यो, ने तेणे शोकनुं कारण पूछ्युं, त्यारे मतिसारना पुत्रे साचे साची वात कही दीधी. ॥९२॥

स च विचिन्तयति स्म ततो जनः, कथमहो मदनेन विडम्बितः ? ।
इदमचेतनमेव सचेतनं, न भवतीति विवेक्तुमलं न यः ॥९३॥

ततः तद्वृत्तान्तश्रवणानन्तरञ्च स मणिसारकः, विचिन्तयति स्म, किमित्याह—अहो आश्चर्यमेतवत्, जनः मदनेन कामेन कथं केन प्रकारेण विडम्बितः परवशः कृतः, यः जनः इदमचेतनमेव, सचेतनं न भवति, कदापीति शेषः । इतीत्यपि विवेक्तुं विचारयितुं भेदेन ग्रहीतुमित्यर्थः । अलं समर्थो न, 'कामासक्ताः प्रकृतिकृपणाश्चेतनाचेतनेषु'-विवेक्तुं न शक्तेति भावः ॥९३॥

त्यारे ते शेठ विचारवा लाग्यो के अरे आ केवो काम-परवश थई गयो छे ? के जेथी अचेतन पूतळी सचेतन थई शके नहि आटलो विवेक पण करी शकतो नथी. ॥९३॥

अथ स मित्रयुदिभ्यमुवाच तं, रचयिताऽस्य मया परिपृच्छयते ।
प्रतिकृतिः किमियं खलु पुत्रिका, किमपि शिल्पधियाऽथ विकल्पितम् ॥९४॥

अथ स मित्रयुत्—तमिभ्यं मणिसारमुवाच, किमित्याह—अस्य देवालयस्य रचयिता निर्माता मया परिपृच्छयते, किमित्याह—इयं दृश्यमाना पुत्रिका कस्या अपि प्रतिकृतिः प्रतिबिम्बं खल्वित्यलीके, किम् ? अथ अथवा, शिल्पधिया, शिल्पचातुर्येण, किमपि स्वबुध्यैव नतु कस्या अपि प्रतिकृतिरूपेण विकल्पितम् निर्मितम् ? इति परिपृच्छयते इत्यर्थः ॥९४॥

पछी ते शेठने मित्रयुदे कीधुं के आ पुतळीना बनावानारने अमे पूछ्युं के आ पुतळी कोई नी प्रतिकृति छे अथवा, पोताना शिल्पकौशलथी बनावी छे ? ॥९४॥

तदवधार्य स इभ्य उदाहरद्, व्यरचयं त्रिदशालयमेतकम् ।
जलधिकूलगपूगमहाऽभिधाश्रुतपुरस्थितशूरकतक्षतः ॥९५॥

तत् मित्रयुदुक्तिं समवधार्य श्रुत्वा, स इभ्यः मणिसारः उदाहरत् कथितवान् , किमित्याह—एतकमेतत्, त्रिदशालयं देवालयम्, जलधेः कूलेषु तटवर्तिषु पूगमहेत्यभिधया सोपारकपत्तनेत्यपरनाम्ना श्रुतं यत्पुरम् तत्र स्थितात् वास्तव्यात् , शूरकतक्षतः शूरकनामकशिल्पिद्वारा व्यरचयम् निरमापयम् ।९५।

ते निश्चय करी ते शेठ बोल्यो के में आ देवालय समुद्र कांठे पुग एवा महानामे प्रसिद्ध नगरमां रहेला शूर नामे शिल्पी पासे बनावराव्युं छे. ॥९५॥

अहमियर्मि पुरा ननु तत्र च, प्रकथिते सुहृदाऽथ सुहृज्जगौ ।
न भविताऽस्मि भवन्तमृते स तद्, व्यतत मासयुगावधिमाधिभृत् ॥९६॥

नन्विति प्रश्ने—वो वाक्यालङ्कारे । अहं मित्रमुत् तत्र शिल्पिपुरे पुरा इयर्मि गमिष्यामि, 'पुरा यावतोर्वर्तमाना' ५-३-७ पश्चाज्ज्ञातवृत्तान्तः किमप्युपायं करिष्यामीति भावः । अथ इत्थं सुहृदा मित्रमुदा प्रकथिते सति सुहृद् अमरदत्तः, जगौ, किमित्याह—भवन्तमृते विना न भविताऽस्मि अहं न स्थास्यामि, यद्वा भवितास्मीत्येकं पदम् न जीविष्यामीत्यर्थः । तत्तस्मात्, तदनन्तरं, सः मित्रमुत् आधिभृत् मनोव्यथापूर्णः सन् मित्रदुःखादिति भावः । "पुंस्याधिर्मानसी व्यथे"त्यमरः । मासयुगस्य मासद्वयस्य अवधिमागमनकालमर्यादाम् व्यतत कृतवान् मासद्वयाभ्यन्तर एवाहमागमिष्यामीत्येवं प्रतिज्ञातवानित्यर्थः ॥९६॥

તો હું પહેલાં ત્યાં જાઉં છું એમ મિત્રે કીધે છતે, તે મિત્ર રાજપુત્ર બોલ્યો કે તમારા વિના હું રહી શકું નહિ, ત્યારે પીડા અનુભવતો તે મિત્રમુદ બે મહિનાની અવધિ કરી. ॥૯૬॥

तमुपरुध्य महेभ्यशिरोमणिं, निजसुहृत्परिरक्षणकर्मणि ।
जलधितीरमतीत्य स तत्पुरं, प्रथितमासददुत्तमलक्षणैः ॥९७॥

महेभ्यशिरोमणिं—तं मणिसारं निजसुहृदोऽमरदत्तस्य परिरक्षणकर्मणि परिचर्यायाम्, उपरुध्य सप्रार्थनं संयोज्य, स मित्रमुत् जलधितीरमतीत्य उल्लङ्घ्य, उत्तमलक्षणैः प्रशस्तैः चिह्नैः प्रथितं ज्ञातं तत्पुरं ख्यातं युगाख्यं सोपारकेत्यपराख्यं महापुरमासदत् ॥९७॥

પછી તે શ્રેષ્ઠી શિરોમણિને પોતાના મિત્રની રક્ષા માટે પ્રાર્થના કરી તે સમુદ્રકાંઠાને વટાવી ઉત્તમ લક્ષણોથી ઓળખાઈ ગયેલા તે નગરમાં પહોંચ્યો. ॥૯૭॥

विहितवेशविशेषविभूषणः, स उपदापदपाणिसरोरुहः ।
तदथ तक्षगृहं रुचिरं गतः, सुपरिपृष्टसमागमकारणः ॥९८॥

रचितसत्कृतिरीप्सितशिल्पिना, वदितुमारभतायमनन्तरम् ।
विबुधसद्म विधापयितुं मति-र्मतिसमुद्र ! समुत्सहते मम ॥९९॥

विहितः रचितः वेषः संस्कृताकारः ( वेषविशेषः नूतनवेषश्च विभूषणं च वेषविशेषविभूषणे विहिते वेषविशेषविभूषणे ) येन स चासौ विशेषः विशिष्टं विभूषणं यस्य स तादृशः, संस्कृतस्वरूपः भूषणभूषितश्चेत्यर्थः । तथा, उपदा उपहारः तत्पदं पात्रम् उपहारभृतम् पाणिः सरोरुहमिव यस्य स तादृशः हस्ते नीतोपहारः, चिन्तितकार्यसिद्धये एतेषामुपयोगं विचार्येतिभावः । रुचिरं मनोहरम्, तत्तक्षगृहं शिल्पिनः शूरकस्य गृहं गतः । ईप्सितेन स्वाभीष्टेन शिल्पिना शूरकतक्ष्णा रचितसत्कृतिः कृतातिथ्यः, सुपरिपृष्टसमागमकारणः, सुः सम्यक् परिपृष्टं पृच्छाविषयीकृतं समागमस्यागमनस्य कारणं यस्य स तथाभूतः सोऽयं किमर्थं भवानागत इत्येवं पृष्टः सन् सोऽयम् मित्रमुत्, अनन्तरम्, प्रमा-

नन्तरम्, वदितुमारभत। किमित्याह—मतीनां जलानां समुद्र इव समुद्रः तत्सम्बोधने, महाबुद्धे ! मम मतिः विबुधसद्म देवालयं विधापयितुं निर्मापयितुम् समुत्सहते उत्साहं करोति इच्छतीत्यर्थः ॥९८॥९९॥

તે પોતાનો ઉત્તમ વેશ બનાવી આભૂષણને ધારણ કરી હાથમાં ઉપહાર લઈ પછી તે શિલ્પીના મનોહર ઘરમાં ગયો ને શિલ્પીએ આવવાનું કારણ પૂછ્યું. ॥૯૮॥

તે શિલ્પીએ સત્કાર કર્યો છતાં પછી તે બોલવા લાગ્યો કે હે બુદ્ધિમાન્ દેવાલય બનાવરાવવાનો મારો ઉત્સાહ થાય છે. ॥૯૯॥

स्थपतिषु प्रथमः प्रथितस्ततः, प्रतिकृतिं विनिवेदय मत्पुरः ।
प्रतिकृतिः कृतिनां श्रुतिमागता, यदधिकां वितनोति विभावनाम् ॥१००॥

ततः मम विबुधसद्म निर्मापनोत्साहाद्धेतोः, स्थपतिषु शिल्पिषु प्रथमः अग्रेसरः प्रथितः ख्यातः त्वमिति शेषः । मत्पुरः ममाग्रे प्रतिकृतिम् स्वकृतिप्रतिनिधिं विनिवेदय कथय दर्शय वा। ननु प्रतिकृत्या तव किं कर्त्तव्यमिति चेत्तत्राह—यद्यस्माद्धेतोः प्रतिकृतिः, कृतिनां विदुषां श्रुतिमागता श्रुता दृष्टा वा सती, अधिकां सातिशयाम् विभावनामुत्साहं वितनोति करोति। करिष्यमाणप्रतिकृतिं दृष्ट्वा तस्याश्च रुचिरत्वादुत्साहोद्रेको जायते इति भावः ॥१००॥

શિલ્પીઓમાં આપ શ્રેષ્ઠ તરીકેની ખ્યાતિ પામેલા છો. માટે પહેલા મારી આગળ પ્રતિકૃતિ-નકશો બતાવો કેમકે પ્રતિકૃતિ સાંભળ્યા પછી બુદ્ધિમાનોની ભાવનાને ઘણું વધારે છે. ॥૧૦૦॥

अथकथत् स च सूत्रभृदीदृशं, सुमपुरोपवने रचितं मया ।
विरचितं मणिसारकसाधुना, यदपि तद्भवता किमवेक्षितम् ? ॥१०१॥

स सूत्रभृत् सूत्रधारः अचकथत्, अवादीच, किमित्याह—सुमपुरस्य कुसुमपुरस्य पाटलिपुत्रापरनामकस्य उपवने उद्याने मया शिल्पिना, ईदृशम्, भवदीहितानुरूपम् रचितम्, यद् देवालयम् मणिसारकसाधुना मणिसारनामवणिजा विरचितम् निर्मापितम्, अपिश्चार्थे। भवता तद् विबुधसद्म अवेक्षितं दृष्टं किम् ? यदि न दृष्टं तर्हि पश्यतु, तदेव मम कृतेः प्रतिकृतिः तवेहितस्य चेत्यर्थः ॥१०१॥

ત્યારે તે સૂત્રધારે કીધું કે કુસુમપુરના ઉપવનમાં જે મેં રચેલું છે ને મણીસાર શેઠે બનાવરાવ્યું છે તે શું આપે જોયું છે ? ॥૧૦૧॥

सदवलोकितमित्यभिधाय तं, पुनरपृच्छदसावपि पुत्रिका ।
प्रतिकृतेन कृता खलु तत्र या, किमपि शिल्पमहो यदि वा तव ? ॥१०२॥

असौ मित्रसुत, सदवलोकितम्, साध्ववलोकितमितीत्थमभिधाय, तं शिल्पिनम् पुनरपि अपृच्छत्—किमित्याह—तत्र विबुधसद्मनि या पुत्रिका प्रतिकृतेन कृता मत्पुत्र्या यादृशरूपं तादृशरूपस्य प्रतिकृतिस्सा पुत्रिका प्रतिकृतेन तदनुरूपेणान्यत्र कृतेन कृता, अनुकृता, कश्चिदपि प्रश्ने यदि वा तव किमपि शिल्पं स्वकल्पितं शिल्पचातुर्यम् ? अहो, आश्चर्यकृत् ! अहो चित्रं तदित्यर्थः ॥१०२॥

સારી રીતે જોયું છે, એમ કહી મિત્રમુદે તેને ફરીથી પૂછ્યું ત્યાં જે પુતલી છે તે કોઈની પ્રતિકૃતિ છે કે અદ્ભુત તમારી શિલ્પ કળા છે. ॥૧૦૨॥

स गिरमादित पुष्पकरण्डिनी–पतिमहापृतनाङ्गभवा मया ।
निपुणमारचिता मणिमञ्जरी, न खलु शिल्पविकल्पितमत्र मे ॥१०३॥

स शिल्पी, गिरं वाणीमादित स्वीकृतवान्, जगादेत्यर्थः । किमित्याह—पुष्पकरण्डिन्याः तदाख्यनगर्याः उज्जयिन्या इत्यर्थः । पत्युः महती पृतना सेना यस्य तस्य महासेनाख्यनृपस्येत्यर्थः । "पृतना सेना" इति हैमः । अङ्गभवा पुत्री, मणिमञ्जरी तदाख्या, मया निपुणं स्वकौशलेनात्यनुरूपं यथास्यात्तथा आरचिता निर्मिता सा पुत्रिका मणिमञ्जरी प्रतिबिम्बमित्यर्थः । अत्र पुत्रिकायाम्, मे मम शिल्पेन विज्ञानेन विकल्पितं मनः कल्पनया कल्पितमन्यरूपम्, न खलु वाक्यालङ्कारे, 'शिल्पकला-विज्ञान' इति हैमः ॥१०३॥

ત્યારે તે સૂત્રધારે કીધું કે મારૂં કંઈ શિલ્પચાતુર્ય નથી, પણ પુષ્પકરંડિની ઉજ્જયનીના રાજા મહાસેનની પુત્રી મણિમંજરી જ નિપુણતાથી ત્યાં કુંડારેલી છે. ॥૧૦૩॥

वचनमभ्युपगम्य स शिल्पिनः, स्वपरिकल्पितमुत्तरमब्रवीत् ।
अहमुपैमि पुरा गणकोत्तमं, गुणकरं परिपृच्छय मुहूर्तकम् ॥१०४॥

स मित्रमुत् शिल्पिनः कारोः, वचनम् अभ्युपगम्य स्वीकृत्य श्रुत्वा वा, स्वपरिकल्पितम्, नतु सदर्थम्, तादृशवस्तुस्थितेरभावादितिभावः । उत्तरमब्रवीत् । किमित्याह—अहं गणकोत्तमम् ज्योतिर्विद्वरम्, गुणकरं तदाख्यम्, यद्वा गुणकरं शुभयोगयुक्तम्, अत एव शुभपरिणामप्रदम् मुहूर्तकम् लग्नं परिपृच्छय पुरा उपैम्यागमिष्यामि । अत्र पूर्ववत्पुरायोगे भविष्यति वर्त्तमाना प्रासादं निर्मित्सं तवाह्वानायेति शेषः । नहि कुमुहूर्त्ते एतादृशशुभकार्यमारभ्यत इति भावः ॥१०४॥

ત્યારે તે શિલ્પીના વચન સ્વીકાર કરી, પોતાનો કલ્પિત ઉત્તર આપ્યો કે પહેલાં હું સારા જોશી પાસે જઈ શુભ મુહૂર્ત પૂછી આવું છું. ॥૧૦૪॥

इति निवेद्य स उज्जयिनीपुरी–परिसरेऽपि गतो रजनीमुखे ।
अवसदायतगोपुरमध्यतः, प्रततगोपुरवासिनिकेतने ॥१०५॥

स मित्रमुत्—इति पूर्वोक्तप्रकारं निवेद्य कथयित्वा, उज्जयिनीपुर्याः परिसरे नगरसमीपदेशे अपिरप्यर्थे, रजनीमुखे प्रदोषकाले, सन्ध्यासमये इत्यर्थः । 'प्रदोषो रजनीमुखमि'त्यमरः । गतः प्राप्त इत्यर्थः । आयतस्य अतिदीर्घस्य गोपुरस्य पुरद्वारस्य मध्यतः मध्ये, "गोपुरं तु पुरद्वारमि"त्यमरः । प्रतते विस्तृते गोपुरवासिनः गोपुररक्षकस्य निकेतने गृहे, अवसत् तस्थौ ॥१०५॥

એમ કહી તે મિત્રમુદ સાંજે ઉજ્જયિની નગરીના પરિસર પાસે આગળના ઉચ્ચ ભૂમિમાં જઈ લાંબા ગોપુર–નગર દ્વારની વચ્ચે વિશાળ ગોપુરમાં રહેનારાના ઘરે વાસ કર્યો. ॥૧૦૫॥

स्थितिमयं कलयन्नपि तत्र च, समशृणोत्पटहस्य पटुध्वनिम् ।
अवति दोषमृतं नरमाक्षपं, क्षपितभीतिरमुं कथमेव यः ॥१०६॥
दिशति तस्य सुवर्णसहस्रकं, धनवतां प्रभुरीश्वरनामकः ।
स विनिशम्य तदाह च यामिकं, किमिति रक्ष्यत एव शवो ननु ? ॥१०७॥

तत्र निकेतने च, श्रवणसमुच्चायकः । स्थितिं कलयन् तिष्ठन्नित्यर्थः । अपिः वाक्यालङ्कारे । अयं मित्रमुत् पटहस्य तदाख्यवाद्यविशेषस्य पटुध्वनिम् सुस्पष्टशब्दम्, समशृणोत् । किन्तच्छब्दमित्याह— यः क्षपिता दूरीकृता भीतिः सम्भावितं भयं येन स निर्भयः यः-कोऽपि पुमान्, दोषेण रोगविशेषेण मृतम् । मृतम् दोषमृतम्—दोषायां रात्रौ मृतम्, अमुम् अत्रस्थितम् नरम् पुरुषं, शवमित्यर्थः । क्षपाया आ इत्याक्षपम्, रात्रिपर्यन्तम्, कथमेव कथमपि रक्षति भूतकुक्कुरादिभिर्न दूष्येत यथेति भावः । तस्य रक्षकस्य कृते इति शेषः । ईश्वरनामकः धनवतां प्रभुः धनाढ्यतरः सुवर्णसहस्रं दिशति दातुं स्वीकरोति, तद्घोषणां विनिशम्य स मित्रमुत्, यामिकम्, प्रहरिकम्, आह च, किमित्याह— नन्विति सम्बोधने, किमिति किं स्याद्यदि, शवः रक्ष्यते इव, शवरक्षणे कीदृग्गुणदोषसम्भवः ? तद् ब्रूहीति भावः । यद्वा किमिति कथं शवः रक्ष्यत एवेति ॥१०६॥१०७॥

त्यां रहेतो छतो ते पडहनो भारे आवाज सांभळ्यो, दोषथी मरी गयेला आ पुरुषने जे निर्भय पुरुष कोई पण रीते रात्रि सुधी आखी रात साचवशे तेने धनाढ्योनो अधिपति जेवो ईश्वर नामे एक हजार सोनामहोर आपशे, ते सांभळीने मित्रमुदे पहेरेदारने पूछ्युं के शवनी रक्षा शुं काम कराय छे ? ॥१०६-१०७॥

स जगिवान् दुरवोऽयमहो नरः, पथिक ! मारिकदर्थनमारितः ।
पिदधिरे निखिलान्यपि गोपुरा-ण्यवितुमेतमतो हि महादरः ॥१०८॥

स यामिकः जगिवान्, जगौ, किमित्याह—पथिक ! अयं मृतः नरः, दुरवः दुःखेन रक्षणीयः रक्षितुमयोग्य इत्यर्थः । तत्र हेतुजिज्ञासायामाह अहो ! इति भयाधिक्यसम्भावनायाम् । यतः मारिः महामारिः तस्याः कदर्थनेन तत्कृतपीडनेन मारितः पञ्चतां प्रापितः, मार्या मृतनररक्षणे हि तस्यापि तद्दोषानुवृत्तिसम्भवात् भूताद्युपद्रवसम्भावनाच्च शवः दुरव इति गूढाभिप्रायः । ननु तर्हि किमिति साम्प्रतमेवासौ श्मशानभूमीर्न नीयते इति चेत्तत्राह—निखिलानि सर्वाणि अपि गोपुराणि पुरद्वाराणि पिदधिरे दत्तार्गलानि जातानि, अतः बहिर्नेतुं न शक्यते इति भावः । अतो हि अस्मात्कारणादेवेत्यर्थः । एतं शवम् अवितुं रक्षितुम् महादरः "महाभयः दरस्त्रासो भीतिरित्य"मरः । अत्यामहो एतेनाप्यस्य रक्षका विरला एव सम्भाव्यन्त, इति सुवर्णसहस्रं रक्षकस्य प्रदानार्थमुद्घोषणा क्रियत इति भावः ॥१०८॥

त्यारे ते बोल्यो के हे पथिक ! ते पुरुष मरकीनी पीडाथी मरी गयो छे. माटे तेनुं रक्षण अत्यंत कठण छे, बधा गोपुरो बन्ध कराया छे, माटे ते शवना रक्षण माटे आ काळजी लेवाय छे. ॥१०८॥

पटहमस्पृशदेव धनाशया, धनमवाप निवेदितसामि च ।
उषसि चानतिसृज्य धनं बलाच्छवमनैषुरिदं प्रियबान्धवाः ॥१०९॥

एष मित्रमुत्, धनाशया धनलोभेन, पटहम्, अस्पृशत्, घोषणास्वीकारसूचकं पटहस्पर्शनमकरोदित्यर्थः । निवेदितस्य घोषणायां प्रतिश्रुतस्य सामि "अर्धं धनञ्च सामि त्वर्द्धे" इत्यमरः । अवाप, प्राप, तत्काल एवेति भावः । उषसि प्रभाते च प्रियबान्धवाः मृतनरसम्बन्धिनः इदमवशिष्टमर्धम्, धनम्, अनतिसृज्य अदत्त्वैव, बलात् मित्रमुदा निवारिताऽपि बलपूर्वकम् शवमनैषुर्नीतवन्तः ॥१०९॥

त्यारे धननी ईच्छाथी मित्रमुदे पडहनो स्पर्श कर्यो ने अर्धो धन तो तेणे त्यारे ज मेळव्युं. सवारे वळी प्रिय बांधवो बाकीनुं धन आप्या शिवाय ज बळपूर्वक ते शब लई गया. ॥१०९॥

अनयमैहत मित्रमुदेतकं, तमपि बोधयितुं वसुधाभुजे ।
वसुशताप्तसुवेषविराजित–स्तदनु वारवधूसदनं ययौ ॥११०॥

मित्रमुत्, एतकं सद्योऽनुभूतम्, तमपि अर्धादानं बलाच्छवग्रहणञ्च अनयम् अन्यायम् वसुधाभुजे राज्ञे बोधयितुं निवेदयितुमैहतैच्छत्, तदनु तादृशेच्छानन्तरम्, वसुशतेन द्रव्यशतेन आप्तेन क्रीतेन सुवेषेण चारुनेपथ्येन विराजितः सुप्रभावसम्पन्नः सन् वारवध्वाः वेश्यायाः सदनं ययौ । तत्र गतस्य द्रविणलोभेन कृतेन वारवधूसाहाय्येन कार्यानुकूल्यसम्भवादिति भावः ॥११०॥

मित्रमुदे आ वातने अनीति मान्यो राजाने ते जणाववाने सो सोना महोरथी मेळवीने वेशथी शोभित थई पछी कोई वेश्याना घरे गयो. ॥११०॥

मदयति स्म हिरण्यचतुःशती–वितरणेन तदैव स कुट्टिनीम् ।
सवनभोजनकर्मभिरेव सा, विहितगौरवमेतमतूतुषत् ॥१११॥

स मित्रमुत्—तदैव वारवधूसदनं प्राप्त एव हिरण्यचतुःशतीवितरणेन, हिरण्यानां सुवर्णानां चतुर्णां शतानां समाहारः हिरण्यचतुःशती तस्याः वितरणेनार्पणेन कृत्वा, सुवर्णानां शतचतुष्टयं दत्त्वात्यर्थः । कुट्टिनीम्—"कुट्टनी शम्भली समा" इति हैमः । वेश्योपमातरं शम्भलीम् मदयति स्म मत्तामिव करोति स्म । हर्षभूताम् स्ववशाञ्चेत्यर्थः । सा एव साऽपीत्यर्थः । सवनं स्नानं भोजनञ्च तदादिभिः कर्मभिः क्रियाभिः विहितं गौरवं प्रभूतसत्कारः यस्य स तादृशं यथास्यात्तथा एतम् मित्रमुदम् अतूतुषत् ॥१११॥

ते त्यारे ज कुटनीने चारसो सोनामहोर आपीने खुश करी दीधी, ते पण स्नान भोजन आदिथी सत्कार करी मित्रमुदने संतोष आप्यो. ॥१११॥

सहचरार्थविनिर्मितिचिन्तनः, कमनशास्त्रपरिस्मृतिशून्यधीः ।
अनयदेव तमीमखिलामसौ, हृदि समाधिविधिं किल नाटयन् ॥११२॥

सहचरस्य मित्रस्यामरदत्तस्यार्थस्य प्रयोजनस्य पुत्रिकाप्रकृतिमणिमञ्जरीप्रापणेन स्वस्थत्वरूपस्य विनिर्मितिं सम्पादनम्, कथमेतन्निद्ध्येदित्येवं चिन्तयतीति सः तादृशः, अत एव कमनशास्त्रस्य

कामशास्त्रस्य तदुक्तविधेरित्यर्थः । "अनङ्गमन्मथौ कमनः:" इति हैमः । परिस्मृत्या स्मरणेन शून्या रिक्ता धीर्यस्य स तादृशः, ज्ञातकामशास्त्रोऽपि सुहृदर्थचिन्तनेन कृत्वा न तत्स्मरणावकाश इति भावः, अकृतकामचेष्ट इत्यर्थः । असौ मित्रमुत् अखिलामेव तमीं रात्रिम्, हृदि समाधिविधिम् युक्तिप्रयुक्तिम्, अर्थात्सुहृदर्थसाधने नाटयन्, विचारयन्, अनयद् व्यत्यगाद, किलेति निश्चये ॥११२॥

इति निशात्रितयेऽपि नियन्त्रितं, विदधतं सुतमां मुनिवन्मनः ।
सविधभाजिगुणोपचितस्त्रियां, तत इयं तमवोचत शम्भली ॥११३॥

इति पूर्वोक्तेन—चिन्तनप्रकारेण, निशात्रितयेऽपि त्रिसङ्ख्याकासु रात्रिष्वपि, रात्रित्रयं यावदित्यर्थः । गुणेन सौन्दर्यादिरूपेणोपचितायां सम्पन्नायां स्त्रियां सविधभाजि समीपवर्त्तिन्यां सत्यामपि यथा मुनेरविचलं मनस्तथा मुनिवन्मुनितुल्यं मनः नियन्त्रितम्, अविचलितम्, अप्राप्तकामविकारम्, विदधतं कुर्वन्तम्, तं मित्रमुदम्, ततः पश्चादियम्, शम्भली कुट्टिनी अवोचत ॥११३॥

કામશાસ્ત્રનું સ્મરણથી અછૂતો એવો તે મિત્રમુદ મિત્ર માટે ચિંતા કરતો મનમાં પૂર્ણ સંતોષનો અભિનય કરતો છતો આખી રાત પસાર કરી આમ ત્રણ રાત સુધી ગુણવતી સ્ત્રી પાસમાં રહી છતે પણ મુનિની જેમ મન કાબૂમાં રાખતો, તેને તે કુટ્ટિનીએ કહ્યું. ॥૧૧૨-૧૧૩॥

मम सुता भवता किमुपेक्ष्यते, विकचगन्धफलीव षडंह्रिणा ? ।
किमुचिता न गुणैर्निचिता नवा, प्रियतयोपचिता यदि वा न वा ? ॥११४॥

कुट्टिन्युक्तिमेवाह—ममेति । मम सुता पुत्री व संरक्षणात्पुत्री षडंह्रिणा भ्रमरेण विकचा विकस्वराया, गन्धफली चम्पककलिका एतस्य "कलिका गन्धफली" इत्यमरः । सेव, भवता किं कुतः हेतोरुपेक्ष्यते ? षट्पदो हि प्रकृत्या गन्धफलीं न जिघ्रति तद्वत्—कामचेष्टया तां किं न स्वीकरोषि ? उचिता त्वदनुरूपा न किम् ? अननुरूपता ह्यौदासिन्यकारणं सम्भाव्यते, तत्तु नास्ति तर्हि उपेक्षायां को हेतुरित्यर्थः । वा अथवा, गुणैः सौन्दर्यादिभिः निचिता समन्विता न नास्ति किम् ? तादृश्यपि तु वर्त्तत एव, अतः प्रश्नान्तरमाह—यदि वा प्रियतया प्रेम्णा-'प्रेमा ना प्रियता हार्दमो' त्यमरः । उपचिता युक्ता नवा किम् ? भवति प्रीतिं न करोति किम्, को हेतुरिति वद ॥११४॥

જેમ ભ્રમર વિકસ્વર ચમ્પાની ઉપેક્ષા કરે તેમ મારી પુત્રીની ઉપેક્ષા કેમ કરો છો. શું ગુણવતી આ તમારા યોગ્ય નથી, કે નવી છે. આ પ્રેમથી ભરેલી નથી ? ॥૧૧૪॥

अथ जजल्प स मातरिदं हितं, त्वदुदितं समये विदधे पुरा ।
कथय किञ्च तवाप्यवरोधके, किमु गतिर्दृढसङ्गतिशालिनी ? ॥११५॥

अथप्रश्नानन्तरम्—स मित्रमुत्, जजल्प, किमित्याह—मातः हितम् उचितम् त्वदुदितमिदम् त्वत्सुतानुपेक्षणाभिप्रायकम्, समये अवसरे प्राप्ते पुरा विदधे विधास्यामि, पुरा योगे भविष्यन्त्यां वर्त्तमाना । तव गतिः प्रवेशः दृढसङ्गतिशालिनी कार्यसाधनक्षमप्रेमपुष्टा किमु ? तत्कथय ॥११५॥

ત્યારે તે બોલ્યો કે હે માતા ! તમે જે હિતવચન કહો છો તે અવસરે કરીશ. પહેલાં કહો કે અંતઃપુરમાં કોઈ સાથે દૃઢ મૈત્રી હોય તેવી તમારી પહોંચ છે ? ॥૧૧૫॥

वदति सा स्म ततो मणिमञ्जरी, तनुभुवो मम यत्सुतरां सखी ।
सदृशरूपकलाबलशीलयो–र्भवति सख्यमपेक्ष्यमिदं यतः ॥११६॥

ततः मित्रसुत्पृच्छानन्तरं सा कुट्टिनी वदति स्म, किमित्याह—यत् मणिमञ्जरी राजपुत्री मम तनुभुवः पुत्र्याः सुतराम् अत्यन्तम् विश्वस्तेत्यर्थः सखी प्रीतिमती वयस्या—"वयस्यालिः सखी" इति हैमः । ननु वेश्याराजपुत्र्याः सख्यमश्रुतपूर्वमिति चेत् तत्र समर्थयति—यतः यस्माद्धेतोः सदृशानि रूपं कला बलं शीलं च ययोस्तयोः इदम् दृढम् सख्यं अपेक्ष्यम् अपेक्षितं भवति नतु तत्र कुलाद्यपेक्षितम् । समानशीलव्यसनेषु सख्यमित्युक्तः । मत्सुताराजपुत्र्योश्च ततस्तत्त्वम् इति भावः ॥११६॥

ત્યારે તે બોલી કે મણિમંજરી મારી પુત્રીની અત્યંત સખી છે કેમકે સમાન રૂપ, કળા, બળશીલ વાલા વચ્ચે સખી ભાવ હોય છે. તે હોવું જ જોઈએ. ॥૧૧૬॥

अपि स तामवदद् वदतां वरो, जननि ! सा तदिदं प्रणिगद्यताम् ।
सुतनु ! वाचिकतोऽप्यनुरागयुग्, दृढहृदो भव मे प्रिय ईदृशात् ॥११७॥

सः वदतांवरः वाक्पटुः मित्रसुत् तां कुट्टिनीम्, अवदत्, किमित्याह—जननि ! तर्हि, यदि तव पुत्र्याः तया सख्यं तदेत्यर्थः, सा मणिमञ्जरी इदं मया वक्ष्यमाणम्, निगद्यताम्, वक्ष्यमाणनिजोक्तिमेव प्रपञ्चयति सुतनुः ! दृढं त्वयि प्रीतिनिर्भरं हृदयं यस्यास्तस्या मे मम, ईदृशात्, मत्कथ्यमानात् वाचिकतः सन्देशवाचः अपि, प्रथमं सन्देशवाचा, "सन्देशवाक् तु वाचिकम्" इति हैमः । प्रिये ! अनुरागयुक् प्रसन्ना भव ! तवानन्दप्रदमेतद्वाचिकमित्यर्थः ॥११७॥

अमरदत्तमहापुरुषेण ते, प्रियतमेन सुते ! प्रहितः परम् ।
हृदयमेव परं समुपागतो , मधुरवागिह वाचिकहारकः ॥११८॥

ननु किन्तद्वाचिकं येनाहं प्रसीदामीत्यपेक्षायामाह—अमरेति—सुते ! अमरदत्तेन तदाख्येन महापुरुषेण कुलविद्यैश्वर्याद्युपेतेन एतेनोपेक्षणीयता निरस्ता । ते तव, प्रियतमेन अदृष्टायामपि त्वयि सानुरागेण, प्रहितः, प्रेषितः परं द्वितीयं हृदयमेव, हृदयमिव, यद्वा परं मित्रमेव नतु साधारणपुरुषस्सः परमत्यन्तं मधुरवाक् श्रवणमनोहरवचनरचना । प्रियः, एतेन श्रवणोत्कण्ठाहेतुरुक्तः । वाचिकस्य सन्देशवाचः हारकः प्रापयिता, सन्देशवाहक इत्यर्थः । इह च नगरे समुपागतः, तद्वाचिकं ततस्त्वयावश्यं श्रोतव्यमिति ॥११८॥

ત્યારે બોલવામાં હુશીયાર એવો ફરી બોલ્યો કે હે માતા ! તો તે મણિમંજરીને આમ કહો કે હે સુન્દરી ! આવા સન્દેશથી પણ મારું પ્રિય કરવા માટે તું દૃઢ હૃદયથી અનુરાગ વાલી થા. હે પુત્રી ! તમારા પ્રિયતમ એવા અમરદત્ત મહાપુરૂષે પોતાના બીજા હૃદયની જેમ મોકલેલો, મધુર વચન બોલનારો સંદેશ લાવનારો, અહિં આવ્યો છે. ॥૧૧૭–૧૧૮॥

श्रुतिपदं तदवाप्य जगाम तां, हृषितरोमततिर्लघु कुट्टिनी ।
अभिहिताऽथ तया प्रमदाञ्चितेव—भवती प्रसवित्रि ! किमीक्ष्यते ? ॥११९॥

तद् मित्रमुदुक्तम्, श्रुतिपदम् कर्णगोचरम् अवाप्य श्रुत्वेत्यर्थः । कुट्टिनी, हृषितरोमततिः रोमाञ्चिता कार्यविशेषलाभ्यजन्यहर्षादितिभावः । लघु-शीघ्रं तां मणिमञ्जरीम्, तत्पार्श्वे इत्यर्थः । एतेन च कार्यसाधनत्वरा सूचिता । जगाम । अथ पश्चात् तया राजसुतया अभिहिता पृष्टा किमित्याह—प्रसवित्रि ! मातः ! प्रमदो हर्षः तेनाञ्चितेव पूर्णेव उत्फुल्लनेत्रतापूर्णा इव, मुखादिलक्षणेन कृत्वेतिभावः । भवती किं कुतो हेतोरीक्ष्यतेऽवलोक्यते ? ॥११९॥

તે સાંભળી રોમાંચિત થયેલી તે કુટ્ટિની તરત જ તેની પાસે ગઈ, ત્યાર મણિમંજરીએ પૂછ્યું કે હે માતા ! આજ આપ ખુશખુશ દેખાઓ છો. શું છે. ॥૧૧૯॥

अथ जगावपि सा तदुदीरितं, हृदि निधाय च धूर्तधुरन्धरा ।
विकटकैतवयुक्तिपरिष्कृतं, तमपि मेलय मे प्रियमेलकम् ॥१२०॥

अथानन्तरं तस्याः कुट्टिन्या उदीरितं कथितं हृदि निधाय मनसि कृत्वा सा धूर्तधुरन्धरा, चतुरशिरोमणिः मणिमञ्जरी अपि च विकटस्य ज्ञातुमशक्यस्य कैतवस्य या वृत्तिः व्यापारः तया परिष्कृतं यथास्यात्तथा छलपूर्वकमित्यर्थः, जगावुवाच, किमित्याह—प्रियस्य मयि सानुरागस्य मेलकम् सङ्गतिम् कारयितारम् तम् वाचिकहारकम् मे ममापि मेलय सङ्गमय येन वाचिकं श्रोष्यामीतिभावः ॥१२०॥

પછી ધૂર્તધુરંધર એવી તે કુટિની તેની વાત સાંભળી મિત્રમુદે કીધેલું બધુંય કીધું ત્યારે રાજપુત્રીએ કીધું કે પ્રિયતમ સાથે મેલાપ કરાવનાર તે પુરુષનો અત્યંત છલપૂર્વક મને મેલાપ કરાવો. ॥૧૨૦॥

तमुदितं मुदिता विनिवेद्य सा, तमथ मित्रमुदं समतोषयत् ।
नृपसुताऽऽलयमीक्षयितुं स्वयं, सुजवना निशि तेन सहागमत् ॥१२१॥

अथ राजसुताप्रतिवचनानन्तरम्—मुदिता कार्यसिद्धेः प्रसन्ना सा कुट्टिनी तदुदितम्, राजसुतावचनं विनिवेद्य विज्ञाप्य तं मित्रमुदं समतोषयत् मुदितमकरोत् । नृपसुतालयं राजसुतागृहम् ईक्षयितुम् दर्शयितुम्, तेन मित्रमुदा सह, निशि, सुजवना अतिवेगवती अगमच्च ॥१२१॥

ત્યારે તે પ્રેમી રાજપુત્રીએ કીધેલું બધું કહિ મિત્રમુદને ખુશ કર્યો ને રાત્રે તેની સાથે જ પોતે ખૂબ વેગથી રાજપુત્રીના ઘરે દેખાડવાને ગઈ. ॥૧૨૧॥

प्रणिजगाद च वत्स ! महामते, वरणसप्तकयामिककोटिभिः ।
परिवृते कथमत्र तदालये, भयमपास्य ! भवानपि यास्यति ? ॥१२२॥

प्रणिजगाद च, सा कुट्टिनीति शेषः । किं जगादेत्याह—वरणानां कोट्टानां—"प्राकारो वरणः साल" इति हैमेऽमरे च । सप्तकेन यामिकानां प्राहरिकाणां कोटिभिः परिवृते परिवेष्टिते अत्रास्मिन्

तदालये राजसुतागृहे, भयम् यामिककर्तृकदर्शनबन्धनादिभयमपास्य त्यक्त्वा भवानपि कथं यास्यति ? अत्र स्थितौ तदालयगमने महतो भयस्य सम्भवः, तत्र कः प्रतीकारः ? इत्याशयः ॥१२२॥

અને બોલી કે હે બુદ્ધિમાન વત્સ સાત વાડાઓના અનેક પહેરગીરોથી પરિ વરાયેલા મણિમંજરીના આ મહેલમાં તમે પણ નિર્ભય રીતે કેમ જશો ? ॥૧૨૨॥

अथ तया भवने तदपेक्षिते, निजकराम्बुरुहा समवेक्षिते ।
असमविक्रमभृत्तडिदुच्छिखं, करणमेव ददावतिसाहसः ॥१२३॥

अथ स्वप्रश्नस्योत्तरमप्राप्यैव, तया कुट्टिन्या तस्य मित्रमुदः अपेक्षिते आकाङ्क्षिते, इष्टे इत्यर्थः । भवने राजसुताप्रासादे, समवेक्षिते दर्शिते सति, असमं विक्रममतुलपराक्रमं बिभर्तीति सः तादृशः अतिसाहसः मित्रमुत्, तडिदुच्छिकम् विद्युद्वद्भास्वरम् करणरज्ज्वादिसाधनम् ददौ, उत्क्षेपणादिना भवने समसञ्जयत् गुप्तरीत्या राजादिभवनमारुरुक्षुर्हि तादृशेन रज्ज्वादिसाधनेन तदधिरोहतीति- प्रसिद्धमेव, न तु भीतिप्रश्नेन विरराभेत्येवकारार्थः ॥१२३॥

પછી તેણીવડે પોતાના કર-કમળથી તે ઇષ્ટ મહેલ બતાવાયે છતે અતુલ્ય પરાક્રમી ને અત્યન્ત સાહસીક મિત્રમુદે વિજળીની જેમ ઊર્ધ્વમુખ ઊંચી ફાલ દીધી અથવા આકાશમાં ઊંચી નીસરણી જેવું સાધન મૂક્યું ॥૧૨૩॥

अति विशालसमुन्नतशालक-प्रविततिं समतीत्य निमेषतः ।
प्रवरजालगवाक्षमधिश्रितः, समवलोकयति स्म स कन्यकाम् ? ॥१२४॥

अतिविशालानासमुन्नतानां मत्युन्नतानां शालकानां प्राकाराणां-"प्राकारो वरणः सालः शालः" इत्यमरः । प्रविततिं श्रेणिं समतीत्य समुल्लङ्घ्य निमेषतः निमेषमात्रेण, प्रवरं शोभनं जालं यस्मिन् तादृशम् गवाक्षं राजसुताप्रासादवातायनमधिश्रितः प्राप्तः स मित्रमुत् कन्यकां मणिमञ्जरीं समवलोकयति स्म, ददर्श ! "वातायनो गवाक्षः" इत्यमरः ॥१२४॥

તે ક્ષણવારમા અત્યત મોટા ને ઊંચા મકાનોની પરંપરાને ઓલંગીને ઉત્તમ જાલિયાવાળા ગોખ ઉપર પહોંચી તે કન્યાને જોઈ. ॥૧૨૪॥

अहह ! वीरशिरोमणिरेष को, बलमियच्च यदीयमवेक्ष्यते ? ।
इति सहर्षमियं परिचिन्तय-न्त्यचिरमालयमापक कुट्टिनी ॥१२५॥

अहह ! इति-सानन्दाश्चर्ये । एष दृश्यमानः कः, अनिर्वचनीयः वीरशिरोमणिः यदीयमियद- साधारणं बलम् अवेक्ष्यते ? इति इत्थं परिचिन्तयन्ती सहर्षम् इयं कुट्टिनी अचिरं शीघ्रमेव आलयं निजगृहम् आपक माप । स्वार्थेऽकच् ॥१२५॥

તે કુટની પણ અરે રે આ કોણ વીરમણિ છે. કે જેનો આવો બળ જોવામાં આવ્યો છે. એમ હર્ષ ભરે ચિન્તવતી શીઘ્ર જ પોતાના ઘરે પહોંચી ગઈ. ॥૧૨૫॥

उपनमन्तमनन्यसमाकृतिं, सुकृतवीक्ष्यमवेक्ष्य च कन्यका ।
वितनुते किमयं तदवेक्ष इ-त्युपधितः स्वपिति स्म सविस्मया ॥१२६॥

अनन्या अनुपमा समाकृतिः अन्येन सह समा सदृशी आकृतिराकारो यस्य सोऽन्यसमाकृतिः न तथेत्यनन्यसमाकृतिः तम्, रूपं यस्य तं तादृशम्, अत एव सुकृतेन पुण्येन वीक्ष्यं दर्शनीयम्। नहि दर्शनीयदर्शनं पुण्येन विना भवतीतिभावः। उपनमन्तमुपरिगच्छन्तम्, पार्श्वमागच्छन्तम्, गवाक्षे लम्बमानमित्यर्थः। च समुच्चये। अवेक्ष्य कन्यका मणिमञ्जरी, सविस्मया महासाहसिकोऽयमिति जातविस्मया सती, अयमुपनयनपुरुषः, किं वितनुते करोति ? तत् अवेक्षे पश्यामि, इति एतादृशाभिप्रायेण, उपधितः, छलेन, सकपटमित्यर्थः। स्वपिति स्म, तद्व्यापारनिरूपणाय छलनिद्रामाश्रितवतीत्यर्थः ॥१२६॥

અનુપમ રૂપવાળાને પુણ્ય બલેજ જેનું દર્શન થઈ શકે એવા મિત્રમુદને ઊંચે ચઢતો જોઈ મણિમંજરી આ શું કહે છે. તે જોઈએ એમ વિચારી કપટપૂર્વક વિસ્મય સાથે સુઈ ગઈ. ॥૧૨૬॥

स च विकृष्य ततः क्षुरिकां शितां, करिकराकृतिदक्षिणसक्थनि ।
किमपि तां करभोरुमलाञ्छय-द्वलयमादित वामकराद् द्रुतम् ॥१२७॥

ततः गवाक्षप्राप्त्यनन्तरम्—स मित्रमुत्, शितां तीक्ष्णाम्, एतेन सामान्यतः स्पर्शनेऽपि आघातसम्भावना सूचिता। क्षुरिकां शस्त्रीम् विकृष्य क्षुरिकाधान्याः हस्ते गृहीत्वा, तां पुरः सुप्ताम् करभाविवोरू यस्यास्ताम्, "मणिबन्धादाकनिष्ठात्करस्य करभो बहिः"रित्यमरः। अत्र करभोरूमिति ह्रस्वान्तपाठः प्रामादिकः। उपमानपूर्वपदादूरुशब्दस्य स्त्रियामूङ्शासनादित्यवधेयम्। करी हस्ती तस्य करः शुण्डादण्डः स इवाकृतिर्यस्य तत् तस्मिन् करि करोपमिते दक्षिणे सक्थनि ऊरौ, किमपि अज्ञातप्रकारम्, अलाञ्छयत् चिह्नं कृतवान् प्रत्यभिज्ञार्थमितिभावः। तथा,—वामकराद् वलयं कटकम्— "वलयं कटके सानावि"त्यमरः। द्रुतम्-विलम्बे निद्राभङ्गसम्भवेन कार्यविघ्नापत्तेरितिभावः। आदित गृहीतवांश्च ॥१२७॥

ત્યાર પછી તે મિત્રમુદ તેજ ધારવાળી ચપ્પુ કાઢી સુંદર જંઘાવાળી તે મણિમંજરીના હાથીના સુંઢ જેવા જમણા સાથળમાં કંઈક ચિન્હ કર્યું ને તેનો ડાબા હાથનો કંગન જલ્દીથી લઈ લીધો. ॥૧૨૭॥

करणशक्तियथागतवर्त्मना, पणवधूभवनं प्रविवेश सः ।
प्रतिपदा सचिवेन महौजसा, तदिह किं नहि यत्सुकरं नृणाम् ? ॥१२८॥

स मित्रमुत्, करणस्य रज्ज्वादिसाधनस्य यद्वा करणस्य शरीरस्य "करणं करणे कामे" इति जयकोशः। 'करणकायम्' इति हैमः। शक्त्या प्रभावेण, यथाऽऽगतेन येनैवाऽऽगतस्तेनैव वर्त्मना मार्गेण "अयनं वर्त्म मार्गाध्वे"त्यमरः। पणवध्वाः वेश्यायाः पूर्वोक्तकुटिन्या भवनं प्रविवेश। इह तत् किम् कार्यम्, यत् प्रतिपदा बुद्धिरूपेण सचिवेन सहायकेन महौजसा बलवता सुकरं नहि अर्थात्सर्वमेव सुकरमेवेत्यर्थः। बुद्धिमतां बलवतां नृणां किं सुकरं नहि भवति ? ॥१२८॥

વિજળી વેગ સાધને ઊંચે ચઢેલા માર્ગે જ તે મિત્રમુદ વેશ્યાના ઘરમાં પ્રવેશ કરી ગયો. તે અહીં કઈ વસ્તુ છે. જે માણસને બુદ્ધિના સહિયારે મહાન બળથી સુસાધ્ય નહિ હોય ? ॥૧૨૮॥

सुलपना तदनालपनापि सा, स्वमपि विप्रमदा स्म विगायति ।
कथमपि क्षणदाविरतिक्षणे, शयनशर्म समासददाशु च ॥१२९॥

अथ मणिमञ्जरी वृत्तान्तमाह—सुलपनेति—सुलपना=सुमुखी, "आननं लपनं मुख"मित्यमरः। सा मणिमञ्जर्यपि तेन मित्रमुदाऽविद्यमानमालपनामाभाषणं यस्या सा तादृशी, मित्रमुदा अकृतवाग्व्यवहारः, छलनिन्द्रं गतत्वादितिभावः । अत एव विगतः प्रमदो हर्षो यस्याः सा, विप्रमदा निरानन्दा खिन्ना, कथमहं न तेनाभाषि इत्येवम्, स्वमात्मानम्, विगायति निन्दति स्म । क्षणदायाः रात्रेः विरतेरवसानस्य क्षणे, रात्र्यन्तकाले, च स्वविगानसमुद्भायतः कथमपि आशु, शयनशर्म निद्रासुखं समासदत् प्राप्ता । नहि सचिन्तस्य झटिति निद्रा समायातीति भावः ॥१२९॥

ખંડિત અભિમાનવાળી અથવા વિષાદ પામેલી તે સુમુખી મણિમંજરી પણ તે મિત્રમુદ સાથે નહિ બોલવા વાળી પોતાને પણ નિંદવા લાગી ને રાત પૂરી થયે છતે શીઘ્રતાથી શયન સુખને પામી. ॥૧૨૯॥

अमरदत्तसुहृद् दिवसोदये, नृपतिमन्दिरवेत्रिमहीस्थले ।
सरलवंशपुरस्तृणपूलक-मधृत पूत्कृतिपूर्वकमुच्चकैः ॥१३०॥

अथ मित्रमुदो नृपतिसमीपे प्रतिज्ञाताऽदायिनि वणिजि अभियोगवृत्तान्तमाह—अमरेति । अमरदत्तस्य नृपपुत्रस्य सुहृन्मित्रं मित्रमुत्, दिवसोदये प्रभाते नृपतिमन्दिरस्य यो वेत्री वेत्रधरः प्रतीहारो "प्रतीहारो वेत्रीग" इति हैमः । तन्महीस्थले, तदन्तिके स्थाने इत्यर्थः । सरलवंशपुरः अभियोगसूचनाय कल्पितभूभागरोपितर्जुवंशस्याग्रे, उच्चकैः तारस्वरेण, यथा नृपतिः शृणुयादिति भावः। पूत्कृतिपूर्वकम् अहो अन्याय इत्युच्चारणपूर्वकम्, तृणपूलकम्, अधृत स्थापितवान् । पुरा अभियोक्तुः विज्ञप्तुः तथाकरणनियमादितिभावः ॥१३०॥

અમરદત્તનો મિત્ર મિત્રમુદ દિવસ ઉગ્યે છતે રાજગૃહના દ્વારપાલની જગ્યામાં ઊંચેથી બૂમ પાડતો લાંબા વાસને ઘાસનો મૂક્યો. ॥૧૩૦॥

तमथ वेत्रिमुखेन महीपतिद्रुतमजूहवदाश्रुतपूत्कृतिः ।
तदनुपृच्छति च स्म स चावदत्, परिभवं वणिजा कृतमात्मनः ॥१३१॥

अथानन्तरम्। आश्रुता आकर्णिता पूत्कृतिः येन स तादृशो महीपतिः, वेत्रिमुखेन वेत्रिद्वारा तम् अभियोक्तारं मित्रमुदम्, द्रुतम्, अजूहवत् आकारयामास। एतेन राज्ञो न्याये तत्परता सूचिता। तदनु च पृच्छति स्म, स मित्रमुच्च, वणिजा कृतम् आत्मनः स्वस्य परिभवम् प्रतिज्ञातादानरूपापराधम्। अवदत्—न्यवेदयत् ॥१३१॥

પછી તે પોક સાંભળી રાજા તેને દ્વારપાલ દ્વારા તરત જ બોલાવ્યો, ને તેને પૂછ્યું, ત્યારે તે મિત્રમુદે વણિક વડે કરાયેલો પોતાનો અપમાન કહી સંભળાવ્યો ॥૧૩૧॥

क्षितिपतेर्वरपत्तिभिराहतः, स उपदासहितो वणिगीश्वरः ।
उपगतः प्रणतो नृपभाषितोऽवगततत्त्वमुवाच कृताञ्जलिः ॥१३२॥

क्षितिपते राज्ञः, वरपत्तिभिः श्रेष्ठराजपुरुषैः, आहृतः गृहीत्वाऽऽनीतः, स वणिगीश्वरः, उपदयोपायनेन सह उपगतः समागतः, रिक्तहस्तो न लोक्येत राजानं देवतां गुरुमित्युक्तेरितिभावः। प्रणतः कृतप्रणामः, नृपेण भाषितः पृष्टः, अवगततत्त्वं ज्ञाततत्त्वं यथा स्यात्तथास्वरूपं ज्ञात्वेत्यर्थः। कृताञ्जलिः, उवाच न्यवेदयत् । अवगततत्त्वं यथा स्यात्तथोवाच । क्रियाविशेषणम् ॥१३२॥

રાજાના સિપાઈઓએ પકડી લાવેલા તે વણિક એક ઉપહાર સાથે પાસે આવી પ્રણામ કર્યો ને રાજાથી પુછાયેલો છતો વાત સમજીને હાથ જોડી બોલ્યો. ॥૧૩૨॥

अवनिवासव ! पुत्रविपत्तितः, शुचमकार्षमहं दिवसत्रयम् ।
व्यवहृतिः परमा परमार्थतो, भजति ना न विनैव तया सुखम् ॥१३३॥

अथ वणिजो निवेदनमेवाह—अवनिवासव ! राजन्! अहम्, पुत्रविपत्तितः पुत्रमरणाद्धेतोः दिवसत्रयम्, शुचं शोकमकार्षम्, कार्यमात्रं त्यक्त्वा शोकसम्मग्नोऽतिष्ठमित्यर्थः। "शोकः शुक् शोचनं खेदः" इति हैमः। अवश्यंभाविनि भावे तथाकरणमबुधविलसितमिति चेत्तत्राह—परमार्थतः, व्यवहृतिः व्यवहारः, लोकाचार इत्यर्थः। परमा प्रधानम्, इष्टवियोगे तथाकरणस्य लोकाचारादितिभावः। लोकाचारत्यागेऽनुपपत्तिमाह ना पुरुषः, तया व्यवहृत्या विना, सुखं लोकसम्मानादिरूपं नैव भजति, अतो मया तत्कृतमिति भावः ॥१३३॥

હે રાજા પુત્ર મરી જવાથી હું ત્રણ દિવસ સુધી શોક પાળ્યો હતો. પરમાર્થ રીતે વ્યવહાર સર્વ શ્રેષ્ઠ છે. તે સાચવ્યા વિના મનુષ્ય સુખ પામતો નથી. ॥૧૩૩॥

प्रभुपदाम्बुजयुग्ममयं ततः, सुमतिराश्रितवान्मतिमत्प्रियः ।
इति निवेद्य विसृज्य च तद्धनं, गृहमिते वणिजे तमवग् नृपः ॥१३४॥

ततः शोकसम्मग्नतया मया प्रतिज्ञाताद् दानाद्धेतोः, मतिमतां प्रियः, अयं प्रत्यक्षः, सुमतिः मतिमानभियोक्ता, विज्ञप्त्यर्थं, प्रभुपदम्बुजयुग्ममाश्रितवान् अभियोगाकर्णार्थं तव समीपमागत इत्यर्थः। इति पूर्वोक्तप्रकारम्, निवेद्य, तत्प्रतिज्ञातं धनम्, विसृज्य दत्त्वा च, वणिजे गृहम् इते गते सति, नृपः, तं मित्रमुदम्, अवक् पृच्छति स्म ॥१३४॥

किमवगित्याह-कथयेति—

कथय सत्त्वनिधे ! कुणपं त्वया, कथमिदं परिरक्षितमक्षतम् ? ।
स निजगाद निवध्य महीपते !, परिकरं दृढमत्यवधानतः ॥१३५॥

सत्त्वनिधे ! आत्मबलभूयिष्ठ ! कथय किमित्याह-इदं प्रकृताभियोगविषयं कुणपं शवम्, अक्षतम्-यथातथम् त्वया, कथं परिरक्षितम्, क्रव्यादानां बलवत्त्वात्। ततः शव-रक्षणस्य दुष्करत्वा-

रितिभावः । स मित्रमुत्, निजगादोदसरत् । तदाह—महीपते ! अत्यवधानतः चित्तैकाग्रतातः—परिकरं प्रगाढगात्रिकाबन्धं निबद्धं बध्वा, "परिकरः प्रगाढगात्रिकाबंध" इति विश्वकोषः । पूर्णावधानतया सन्नद्ध इत्यर्थः । अस्याग्रेतनेनातिष्ठमित्यनेनान्वयः ॥१३५॥

करतले क्षुरिकां निशितां दधद्, निदधदक्षि विदिक्षु च दिक्षु च ।
अहमतिष्ठमतः प्रहरे गते, विहितफेत्कृतिर्भीमशिवागण: ॥१३६॥

करतले-हस्ते निशितां तीक्ष्णां क्षुरिकां कर्त्तरीं "कर्त्तरी चासितपुत्री च क्षुरिका चासिधेनुके" त्यमरः । दधत्, सति सम्भवे तदुपयोगेनात्मरक्षणार्थमिति भावः । अक्षि नेत्रं दिक्षु पूर्वादिदिशासु च विदिक्षु विरुद्धदिशासु ईशानादिकोणेषु वा, निदधत्-क्षिपन् । एतेन स्वस्यातिसावधानत्वं सूचितम् । अहमतिष्ठम्-अतः उक्तस्थितेरूर्ध्वम्, प्रहरे यामे गते व्यतीते सति, विहिता फेत्कृतिः स्फारफेत्कारो तथानिनादः येन तादृशः भीमो भयङ्करः शिवागणः शृगालीवृन्दम्, अस्याग्रेतनेन समीयायेत्यनेनान्वयः । पिशिताशयेति शेषः ॥१३६॥

તેથી બુદ્ધિમાની પ્રિયને સારો બુદ્ધિમાન આ પુરૂષ આપના રાજાના ચરણકમળ યુગલનો આશ્રય લીધો છે. એમ કહી તેનું ધન આપી વણિક ઘર ગયે છતે રાજાએ મિત્રમુદ ને કહ્યું કે હે મહાન સત્વશાળી કહો કે તમે તે શવને કાંઈ પણ નુકશાન ન થાય એવી રીતે કેમ કરી સાચવ્યો, ત્યારે તેણે કીધું કે હે રાજા દૃઢબુદ્ધિને સાવધાનીથી કમર કસીને હાથમાં તેજ છરી લઈ ચારે બાજુ આંખ ફેરવતો હું બેઠો હતો. પછી એક પહોરે વીત્યે છતે ભયંકર એવું શીયાળાઓનું ટોળું ફેત્કાર કરવા લાગ્યું ॥૧૩૪-૧૩૫-૧૩૬॥

तदनु च द्विमिते प्रहरे परे, नृपलभोज्यकृतोऽपि नृचक्षसः ।
प्रहर एव भयङ्करशाकिनी-समुदयः समियाय तृतीयके ॥१३७॥

तदनु-तत्पश्चाच्च, द्विमिते-द्वित्वसङ्ख्यायुक्ते, द्वितीयेत्यर्थः । प्रहरे, परे-शिवागणादन्ये, नुः-मनुष्यस्य, पलस्य-मांसस्य, भोज्यकृतो भक्षकाः नृचक्षसः-राक्षसाः "राक्षसः पुण्यजनो नृचक्षाः"इतिहैमः । समीयुरित्यर्थबलाल्लभ्यते, तृतीयके-प्रहरे भयङ्कराणां-शाकिनीनां-प्रेतविशेषाणां समुदयः, एवकारार्थं, समियाय ॥१३७॥

ત્યાર પછી બીજો પહોરે ગયે છતે મનુષ્ય માંસ ખાવા માટે રાક્ષસ આવ્યો ને ત્રીજે પહોરે ભયંકર એવી શાકિનીઓનું ટોળું આવ્યું. ॥૧૩૭॥

अथ समागतानां तेषां कृत्यमाह—

विविधखेलननर्तनजल्पनैः, सुचिरमप्यधिवास्य तिरोदधुः ।
अपरिभूततयाऽवहिताशयो, विगतभीरपि यावदवास्थिषि ॥१३८॥

विविधैः खेलनैः-क्रीडाभिः, नर्तनैः-जल्पनैश्च, सुचिरम्, अधिवास्य-तत्र वासं कृत्वा, तिरोदधुः अलक्ष्यतां गताः । अपरिभूततया-परिभवमप्राप्ततया विगतभीः-निर्भयः, अवहिताशयः सावधानश्च यावदवास्थिषि-अतिष्ठम्, अग्रेतनवृत्तान्तजिज्ञासयेति भावः ॥१३८॥

उपगता रमणीयतमाकृतिः, कुणपसिन्निधिमेव तुरीयके ।
प्रहर आगमिता ननु मान्त्रिके-र्व रमणी रमणीयविभाभरैः ॥१३९॥

तुरीयके चतुर्थे प्रहरे, कुणपस्य शवस्य सन्निधिं समीपे एव, नत्वन्यत्र, एतेनागतायाः पूर्वागतसजातीयत्वं सूचितम् । रमणीयो विभाभरः कान्त्यतिशयो येषां तैः प्रभावशालिभिर्मान्त्रिकैः, व इव ववा यथा तथैवैवमि"ति "वं प्रचेतसि जानीयादिवार्थे च तदव्ययमिति" चामरः । रमणीयतमाऽऽकृतिर्यस्यास्सा तादृशी सौन्दर्यशालिनी रमणी स्त्री: । यद्वा रमणीयप्रभाभरैः रमणीयतमाऽऽकृतिः इत्येवमन्वयः । आगमिता प्रतीक्षिता भाविवृत्तान्तं प्रतीक्षमाणेन मयेतिशेषः, उपगता-प्राप्ता । मान्त्रिकैः मन्त्रिप्रभावाद्यथा काऽपि स्त्री समाकार्यते तथैव कालं हरता मया प्रतीक्षिता सा रमणी प्राप्तेत्यर्थः ॥१३९॥

નાના પ્રકારની ક્રીડા, નૃત્યને બતાવીને આથી લાંબા કાળ સુધી રહીને તે અન્તર્હિત થઈ ગયું. અને હું તેમાંથી પરાભવ પામ્યા સીવાય સાવધાન ને નિર્ભય થઈને બેઠો છું તેટલામાં શબની પાસે ચોથા પહોરમાં શ્રેષ્ઠ મણિના મનોહર કાન્તિવાળા માંત્રિકો વડે આવાહન કરાયેલી અત્યન્ત મનોહર રૂપવાળી કોઈ સ્ત્રી આવી. ॥૧૩૮૧૩૯॥

सनय ! मारिरिति प्रतिपद्य साऽध्रियत वामकरे प्रसभं मया ।
विदधती प्रपलायनमेषिका, सपदि दक्षिणसक्थनि लाञ्छिता ॥१४०॥

सनय ! नययुक् ! नीतिज्ञ ! राजन् ! मारिस्तदाख्यदेवयोनिविशेषः । इति प्रतिपद्य बुद्ध्वा सा रमणी, मया प्रसभं बलात्कारेण वामकरे अध्रियत गृहीता, प्रपलायनं विदधती, करग्रहमोचनाय, परिचिता स्यामिति भयाद्वेतिभावः, एषिका प्रस्तुता रमणी सपदि तत्कालम्, दक्षिणे सक्थनि ऊरौ "सक्थ्यूरुः" इति हैमः । लाञ्छिता चिह्नवती कृता । एतेन मनुष्याः सम्भवे तत्परिचयार्थम् तथाकरणमिति स्वस्य मतिमत्त्वम्, भयहेतौ सत्यप्यभीतत्वान्महासाहसिकत्वञ्च सूचितम् ॥१४०॥

હે નીતિમાન્ રાજા ! આ મરકી છે એમ ધારીને મેં બળપૂર્વક તેનો ડાબો હાથ પકડી લીધો, તે ભાગી જવા કોશીશ કરતી હતી. તે વખતે તેના જમણા સાથળમાં ચિહ્ન કરી દીધો હતો. ॥૧૪૦॥

ननु तवैतत्कृतौ किम्प्रमाणमिति चेत्तत्राह—

रभसनाशविकृष्टकराम्बुजे, मम करे किल तद्वलयं स्थितम् ।
नृपनिदेशवशादथ दर्शिते-ऽत्र नृपतिर्मनसीदमचिन्तयत् ॥१४१॥

रभसं हठाद्यो नाशः पलायनं "नशनं च पलायने" इति तस्मिन् सति विकृष्टे कराम्बुजे, तद्वलयं रमण्याः कटकम् "कटको वलयं" इति हैमः । मम करे स्थितम्, करमाच्छोट्य सा तु पलायितवती, किन्तु करविकर्षणाकर्षणकर्मणि तद्वलयं तत्करान्निःसृतम्, तच्च मम करे स्थितमिति तदेवाकार्ये प्रमाणमितिभावः । अथ, नृपस्य निदेशवशात्, तन्मां दर्शयेत्येवमाज्ञावशाद्दर्शिते अत्र वलये विषये नृपतिः मनसि इदं वक्ष्यमाणप्रकारमचिन्तयत् ॥१४१॥

હાથી નાસી જતી પકડાયેલો હાથમાંનું કંકણ મારા હાથમાં આવી ગયો હતો. ત્યારે રાજાની આજ્ઞાથી તે કંકણ દેખાડયે છતે રાજા મનમાં વિચારવા લાગ્યો. ॥૧૪૧॥

अथ नृपतिचिन्तामेवाह—

कनककङ्कणमेतदहो ! मया, स्वतनयाकर एव विलोकितम् ।
इदमजायत तस्करतः कथं, श्लथनवर्जि च तत्करगोचरः ? ॥१४२॥

अहो-आश्चर्ये, मया एतद् दृश्यमानम्, कनककङ्कणं स्वतनयाकरे स्वपुत्रीहस्ते एव विलोकितम् । श्लथनवर्जि कराद् भ्रंशनशीलतारहितञ्चेदम् कङ्कणम्, ततः प्रमादात्तत्कराच्च्युतमनेन लब्धमिति न शक्यते तर्कितुम्, ततस्तस्माद्धेतोश्च, तत्करतः मत्तनयाकरतः, तत्करगोचरः एतत्पुरुषकरगतः तं कथं केन प्रकारेण अजायत ? इति नृपतिर्दध्याविति भावः ॥१४२॥

અરે આ સોનાના કંગનને મેં પોતાની પુત્રીના હાથમાં જોયો હતો. હાથમાંથી નહિ સરી પડનારો આ કંગન તેના હાથમાંથી આના હાથમાં શી રીતે આવ્યો ? ॥૧૪૨॥

अथ संशये नृपस्य स्वसुतापरीक्षणमाह—

समभिसृत्य ततः शयितां सुतां, परिहिताच्छतराभरणांशुकाम् ।
सुदृढमूरुनिबद्धकपट्टिकां, नृपतिरैक्षत संहृतकङ्कणाम् ॥१४३॥

ततः तथा विचारिते सति, समभिसृत्य गत्वा, नृपतिः परिहितानि धृतानि अङ्गे अच्छतराणि कान्तिमन्ति आभरणानि अंशुकानि वस्त्राणि च यया सा तादृशी ताम्, "अंशुकं वस्त्रं" इति हैमः । तथा । सुदृढम्, यथा न मुच्येत तथा, निबद्धकपट्टिकां 'स्वार्थे कप्रत्ययः' निबद्धा न्यस्ता लक्ष्मतव्रण-शमनार्थं पट्टिका वस्त्रखण्डं यया सा ताम् बद्धपट्टाम्, संहृतं कराद् दूरीभूतम् कङ्कणं यस्याः सा ताम्, शयितां सुतां सुप्तां सुतामैक्षत दृष्टवान् ॥१४३॥

પછી ત્યાંથી જઈને રાજા અત્યન્ત સ્વચ્છ આભૂષણને વસ્ત્રને પહેરેલી સાથળમાં મજબૂત રીતે બાંધેલી પટ્ટીવાળીને હરણ કરાયેલી કંગણવાળી સુતેલી પુત્રીને જોઈ. ॥૧૪૩॥

तादृशीं सुतां दृष्ट्वा राज्ञो वितर्कमाह—

किमभवत्तरणेस्तिमिरोदयः, सलिलतो यदि वा ज्वलनोद्भवः ।
यदिदमश्रुतपूर्वकमीदृशं, तनुभुवो मम मारिविदूषणम् ॥१४४॥

तरणेः सूर्यात्, तिमिरोदयः अन्धकारोत्पत्तिः, अभवत् किम् ? यदि वा सलिलतः ज्वलन-स्याग्नेरुद्भवः अस्याभवत् किमित्यनेनान्वयः । ननु कुत इदं सम्भाव्यते इति चेत्तत्राह—यद्यस्माद्धेतोः, इदम् दृश्यमानम् । अश्रुतपूर्वकम् अश्रुतपूर्वकम्, स्वार्थे कः । मम तनुभुवः पुत्र्याः, ईदृशं वर्त्तमानेन प्रकारेण मारिविदूषणम् मिश्रमुदुकमारिदूषणवत्वम् । नहि मनुष्यसन्ततौ मारिता सम्भाविता । यदि तदत्र दृश्यते तर्हि नूनं सलिलादितः ज्वलनाद्युत्पत्तिसम्भावनेतिभावः । सन्देहालङ्कारः ॥१४४॥

શું આ સૂર્યથી અન્ધકારનો ઉદય થયો કે પાણીથી અગ્નિ ઉત્પન્ન થયો ? કે જે મારી પુત્રીને પૂર્વે કદી નહિ સાંભળેલો એવો મરકીનો દોષ લાગ્યો. ॥૧૪૪॥

अपि समग्रविलक्षणलक्षणै-रियमजायत किंतु कलङ्किनी ? ।
किमथवा सहसा न निगृह्यते, सकलमेव कुलं परिरक्षितुम् ॥१४५॥

अपि सम्भावनायाम्, नु वितर्के, अहमेवं वितर्कयामि, समग्रं प्रत्यक्षं यानि विलक्षणानि इतरव्यावृत्तानि लक्षणानि तैः कृत्वा, इयं मत्पुत्री, कलङ्किनी राजपुत्री न मानुषी किन्तु मारिरिति कलङ्कवती अजायत किं ? ननु तथा सति कः प्रतिकारः इति वितर्क्याह—अथवा सकलमेव कुलं परिरक्षितुम्। मारिकुलमित्येवमपवादात् मारिकृताद्वा भयात् त्रातुम्, सहसा अविचार्यैव, झटिति वा, किं न गृह्यते ? प्रतिक्रियते, अवश्यमेव मारिनिग्रहः कर्तव्य इति भावः ॥१४५॥

ખરેખર અદ્ભુત લક્ષણો છતા આ કલંકિની કેમ થઈ ગઈ ! તો આખા કુળના રક્ષણ માટે આનો નિગ્રહ કેમ ના કરાય. ॥૧૪૫॥

इति विमृश्य तमेत्य रहोऽभ्यधात्, सरससाहसिकोत्तम ! साहसम् ।
कुणपरक्षण एव तवाथवा, स्फुरति किञ्चन मान्त्रिककौशलम् ॥१४६॥

इति पूर्वोक्तश्लोकद्वयोक्तप्रकारेण, विमृश्य एत्य, तम् मित्रमुदम्, रहः एकान्ते अभ्यधात्, जगाद—सरससाहसिकोत्तम ! प्रकृष्टसाहसिकपुङ्गव ! कुणपरक्षणे एव, तव साहसं स्फुरति, अथवा मान्त्रिकस्य कौशलं किञ्चन ? केवलं साहसिक एवासि अथवा मन्त्रप्रयोगप्रकारमपि जानासि इति प्रश्नः ॥१४६॥

એમ વિચારી તે મિત્રમુદ પાસે આવી રાજા એકાન્તમાં બોલ્યો. હે સારા સાહસિકોમાં શ્રેષ્ઠ, તમે શબની રક્ષામાં સાહસ કર્યો છે. તેથી તમારી પાસે કંઈક માંત્રિકોનુ કૌશલમંત્ર શક્તિ લાગે છે. ॥૧૪૬॥

ननु तव किं प्रयोजनं यदेवं पृच्छसीति चेत्तत्राह—

निनयिथ क्षणदाप्रहरेऽन्तिमे, सुनयनां नयनायनमेव याम् ।
कलयतां तनयां विनयान्वितां, मम विचक्षण ! मारितयेङ्गिताम् ॥१४७॥

अन्तिमे क्षणदायाः रात्रेः, प्रहरे, एव, नत्वन्यत्र प्रहरे यां सुनयनां चारुनेत्रां नारीं नयनाऽऽयनं नेत्रगोचरं निनयिथ चकर्थ, तां विचक्षण ! धीमन् ! मारितया इयं मारिरित्येवमिङ्गिताम् कथिताम् विनयान्विताम् मम तनयां पुत्रीं कलयतां जानीहि, या त्वया इयं मारिरित्येवं कथिता सा न तथा किन्तु मम पुत्र्येवेतिभावः ॥१४७॥

તમે રાત્રિના છેલ્લે પહોર જે સુંદર નેત્રવાળીને જેમ સામે કર્યું હતું હે બુદ્ધિમાન મારી રૂપે ઓળખાવેલી તેને મારી વિનયવાળી પુત્રી જાણો. ॥૧૪૭॥

ननु सा तव पुत्री भवतु, तेन मम किं प्रयोजनमिति चेत्तत्राह—

यदि तवास्त्यपि शक्तिरनाहता, तदिमिकां निगृहाण गृहाण च ।
प्रथममेव निरीक्ष्य परीक्ष्य च, प्रवदितास्मि नृपेति च सोऽवदत् ॥१४८॥

यदि तव, अनाहता अनभिभवनीया, अन्यथा तु निग्रहो ग्रहणं वा मारेस्त्वया न सम्भवतीतिभावः । शक्तिरप्यस्ति, न तु केवलं साहसम्, तत्तदा, इमिकामिमां मम पुत्रीं, निगृहाण वशीकुरु, स्वशक्त्या, तस्या मारित्वादितिभावः । गृहाण च स्वीकुरु च, मन्त्रादिशक्तिमानेव मारिं ग्रहीतुं शक्नोतीतिभावः । स च तथा पृष्टः मित्रमुत्, अवदत्, किमित्याह—नृप ! प्रथमं पूर्वमेव, न तु ग्रहणानन्तरम्, परिहासोपद्रवादेः सम्भवादितिभावः । निरीक्ष्य परीक्ष्य विचार्य च, प्रवदितास्मि कथयिष्यामि ॥१४८॥

જો તમારી પાસે જોરદાર શક્તિ હોય તો આનો નિગ્રહ કરો, ને આનું ગ્રહણ પણ કરો. ત્યારે તેણે કીધું કે હે રાજા પહેલા તેને જોઈને પરીક્ષા કરી પછી કહીશ. ।।૧૪૮।।

नृपतिदेशवशात्समुपागतं, सदकरोद् नृपतेस्तनयाऽपि तम् ।
किमुचिताचरणव्यभिचारणां, विदधते क्वचनापि महाशयः ? ॥१४९॥

नृपनिर्देशवशात् राजाऽऽज्ञामासाद्य, समागतं तं मित्रमुदम्, नृपतनया, अपिना नृपोऽपि, सदकरोत् सत्कारमकार्षीत्, तत्सत्कारं समर्थयति महाशयाः उदारमनसः, क्वचनाऽपि, उचितस्य लोकाविरुद्धस्य आचरणस्य व्यवहारस्य व्यभिचाराणामतिक्रमं विदधते किम् ? नैवेत्यर्थः । अर्थान्तरन्यासः, सामान्येन विशेषस्य समर्थनात् ॥१४९॥

રાજાની આજ્ઞાથી પાસે આવેલા તે મિત્રમુદનો રાજપુત્રીએ પણ સત્કાર કર્યો, કેમકે મહાશયી કયાંય પણ ઉચિત શિષ્ટાચારમાં ચૂકે છે ? નહીજ ।।૧૪૯।।

अथ जगौ जगतीपतिनन्दना—ममरदत्तसुहृद् यदहं ब्रुवे ।
शुभमुताशुभमेव मदीरितं, तदविमर्शमिदं क्रियतां त्वया ॥१५०॥

अथानन्तरम, अमरदत्तसुहृत् मित्रमुत्, जगतीपतिनन्दना राजपुत्री जगौ तदेवाह—यत् अहं ब्रुवे कथयामि, तदिदं मदीरितं शुभम् उताथवा अशुभमेव वा, अविमर्शम् विमर्शाभावपूर्वकम् अविमर्शमित्यव्ययीभावः । शुभम् अशुभम् वाऽविचार्यैव, त्वया क्रियताम् । अन्यथा उभयोरेवावयोर्हानिसम्भव इति भावः ॥१५०॥

પછી રાજાની પુત્રીને મિત્રમુદે કીધું કે જે હું કહું છું શુભ કે અશુભ તે મેં કહેલું તમારે વિચાર્યા સિવાય કરવાનું છે ।।૧૫૦।।

मदुक्ताकरणे तव निग्रहोऽवश्यंभावी तथोपायस्तूचयन्नाह—

न वलयापहृतौ तव केवलं, नवलयापहृतौ मनसोऽस्त्यलम् ।
कुवलयाक्षि ! च सक्थनि दक्षिणे, विहितवानहमस्मि तवाङ्कनम् ॥१५१॥

तव, वळयस्य अपहृतावपहरणे केवलं न पटुरहमितिशेषः। किन्तु, मनसः, अधोत्सवैव, नवो विलक्षणो यो लयः आनन्दः तस्य अपहृतौ, नयने नवानन्दप्रापणे अपीति शेषः। अलं समर्थः अस्मि। तदुपायमाह—कुवलयाक्षि ! पद्मनेत्रे ! तव दक्षिणे सक्थनि ऊरौ, च अहम्, अङ्कनम्-चिह्नम्, विहितवानस्मि। मदुक्ताकरणे तदेव तव निग्रहोपायो भवितेतिभावः ॥१५१॥

હું તમારા કંગનનું હરણ કરવામાં નહિ, પણ તમારા મનના નવા રાગનું હરણ કરવામાં સમર્થ છું. હે કમલાથી તમારા જમણા સાથળ ઉપર ચિહ્ન કરી ચૂક્યો છું ॥૧૫૧॥

शुभवती भवती नृपतेः पुरः, कनि ! मया खलु मारिरितीरिता ।
जडधिया निजकार्यविधित्सया, परमघं नहि दूषणरोपणात् ॥१५२॥

कनि ! कन्ये ? भगिनि ? जडधिया—मन्दबुद्ध्या हेतुना उत्तमस्य दूषणं जडबुद्धेरेव विजृम्भित-मितिभावः। खल्विति अलीके, मया, शुभवती कल्याणभागिनी भवती, नृपतेः पुरोऽग्रे मारिः इति इत्येवम्, ईरिता कथिता, अस्तीतिशेषः, एवञ्च मया निजबुद्धिवैभवेन त्वं पाशिताऽसीति मदुक्तं त्वयाऽवश्यं कर्त्तव्यम्, अन्यथा तवानर्थ इति भावः। ननु निर्दोषस्य दूषणे तव महत्पातकमिति चेत्, स्वकार्य-साधनाय दूषणारोपणं नाऽत्यन्तं पातकाय, अन्यथा कार्यासिद्धेरित्येतदाह—हि यतः, निजकार्यस्य विधित्सया चिकीर्षया, एवं च निरर्थकं दूषणारोपणं महापातकायेतिभावः। दूषणस्य रोपणादारोपात्, परमत्यन्तमघं पातकं न नैव तथा च यत्किञ्चित्पातकं निजकार्यविधित्सुना सोढव्यमेव भवति, अन्यथा कार्यसिद्धेर्महानर्थसम्भवादितिभावः ॥१५२॥

હે શુભલક્ષણુવાલી કન્યે ! રાજાની આગળ જડ મતિના લીધે મેં આપ મારી છો એમ કીધું છે—પોતાના કાર્ય સાવધાની ઇચ્છાથી બીજાને દોષ આપવાથી કોઈ પાપ થતું નથી. ॥૧૫૨॥

अथ पूर्वश्लोकद्वयेन दण्डभेदावुक्त्वा सम्प्रति साम प्रयुञ्जानः स्वकार्यमपि सहैवाह—

शृणु यतोऽस्ति सुहृत् सुमपत्तनेऽप्यमरदत्त इति प्रथितो मम ।
सुरगृहे तव रूपकपुत्रिका—सुभगताकलनात्स भवन्मयः ॥१५३॥

यतः यस्माद्धेतोः मयैतत्कृतम्, तच्छृणु, सुमपत्तने कुसुमपुरे, पाटलिपुत्रापरनाम्नि वा। "पाटलिपुत्रं कुसुमपुर"मितिहैमः। सुरगृहे देवमन्दिरे तव, रूपकपुत्रिकायाः त्वदाकृतितुल्यपाञ्चालि-कायाः सुभगतायाः सौन्दर्यस्य आकलनात् अवलोकनात् हेतोः, भवन्मयः त्वद्ध्यानपरायणः, मम सुहृदस्ति स अमरदत्त इति प्रथितः ख्यातः ॥१५३॥

સાંભળો, મારો અમરદત્તનામે પ્રસિદ્ધ મિત્ર જ્યાં કુસુમપુરમાં છે. તે દેવ મંદિરમાં તમારા રૂપની પુતળીનો સૌંદર્ય જોવાથી તમારામાં લીન થઈ ગયો છે. ॥૧૫૩॥

ननु भवत्वसौ मन्मयः, न तत्र मम दोषः, तथा च निर्दोषाया दूषणं पापकृत्यमिति चेत्, न, त्वयि दूषणारोपणद्वारा तव प्राप्तिरेवेष्टा, अन्यथानर्थसम्भवादित्याह—

निधनतां त्वदलम्भनतो गतो, यमितकक्षिरसौ स्मरसायकैः ।
सुहृदं भवदर्थमिहागमं, कृतमारचनं किल तावकम् ॥१५४॥

असौ मम मित्रम्, स्मरसायकैः कामेषुभिः कृत्वा, गमितशक्तिः गतसंज्ञः, त्वदलम्भनतः तवाप्राप्तेः, निधनतां मरणं गमी प्राप्ता, मरिष्यति त्वद्विनेत्यर्थः । सुहृद् तस्य मित्रमहम्, एतेन तत्प्राणरक्षणोपायो मयाऽवश्यं कार्यं इति सूचितम् । भवदर्थं तव प्राप्त्यर्थमिहागमम्, तादृशं पूर्वोक्तप्रकारम् कपटम्, आरचयं अहं कृतवान् किल ॥१५४॥

જે કામબાણોથી ક્ષીણ શક્તિવાળો થઈ તમો નહિ મળવાથી મૃત્યુ પામશે. તેથી તેનો મિત્ર હું તમારા માટે અહીં આવ્યો છું ને આવું કપટ કર્યું છે. ॥૧૫૪॥

मम मृतिर्नियता त्वदलाभतः, स च मरिष्यति तत्र शुभाशये ।
तव कलङ्कयुगं भविता गिराऽयमपि चेतसि तन्वि ! विचारय ! ॥१५५॥

शुभाशये शुभभावसम्पन्ने, शुभभावश्च न परविपत्तिमिच्छतीति साकूतमिदं सम्बोधनम् । त्वदलाभतः तव प्राप्त्यभावे, मम मृतिर्नियताऽवश्यम्भाविनी, यदि त्वां न प्राप्नुयां तदाहमवश्यं म्रियेय इत्यर्थः, तत्र कुसुमपुरे, स मम मित्रं च मरिष्यति, ननु तेन मम का हानिरिति चेत्तत्राह— तव गिरा शब्दतः, लोकवाक्यात्, कलङ्कयुगमपवादद्वयं भविता भविष्यति, अनिष्टस्य हि सम्बन्धो मरणादतिरिच्यते इति भावः । तन्वि ! चेतसि एतदपि, विचारय । त्वया मम वचनमवश्यं स्वीकर्तव्यम् एवञ्च तव मम वचनमवश्यं कर्त्तव्यमित्यनुनयोक्तिः ॥१५५॥

અહિં તમારા નહિ મલવાથી મારી મૃત્યુ નક્કી છે ને હે શુભ આશયવાળી ત્યાં તે પણ મરશે. તેથી તમને બે કલંક લાગશે. હે કોમલાંગી માટે મારા વચનથી આ બધું પણ મનમાં વિચારો. ॥૧૫૫॥

नृपसुताऽपि विचिन्त्य जगाद तं, मयि दृषद्वपुषि स्थिरसौहृदः ।
अयि ! सुहृद् तव मित्रयुरीदृशस्त्वमपि तद्द्वयमाव्यमिदं ध्रुवम् ॥१५६॥

अयीति कोमलामन्त्रणे । तव सुहृत्, दृषत्-प्रस्तरः "पाषाणः प्रस्तरः दृषद्" इति हैमः । तन्मयमित्यर्थः वपुर्यस्याः सा तस्यां मयि मद्विषये, मम प्रतिमां दृष्ट्वा मयीत्यर्थः । स्थिरं सौहृदं प्रेम यस्य स तादृशः सातिशयप्रीतिमान्, त्वमपि, ईदृशः सम्प्रत्यनुभूतप्रकारः, मित्रयुः प्राणव्ययेनाऽपि मित्रवत्सलः "मित्रयुर्मित्रवत्सलः" इति हैमः । तत्तस्मादिदं प्रस्तुतं द्वय मित्रयुगम्, ध्रुवं निश्चयेन, आव्यम् रक्षणीयम्, अन्यथा द्वयोरेव शोचनीयत्वं स्यात्, एवञ्च त्वद्वचनमहं करिष्यामिति स्वीकारोक्तिः सूचिता, स्त्रियो हि प्रकारान्तरेणैव स्वाभिप्रायं सूचयन्तीति भावः ॥१५६॥

રાજપુત્રી પણ વિચારીને તેને કીધું કે અહો મારા પત્થરના શરીરમાં પણ તમારો મિત્ર આટલો સ્થિર પ્રેમવાળો છે ને તમે આવા મિત્રોપકારી છો માટે આ બન્નેનું નક્કી સાચવવું જોઈએ. ॥૧૫૬॥

स मित्रभुत, विसारिणं वर्धमानं तस्या मणिमञ्जर्या अनुरागमवेक्ष्य स्वीकारोक्त्याऽनुमाय
भवति स्म तां प्रतीतिलेशः । किमित्याह—

तदनुरागमवेक्ष्य विसारिणं, स वदति स्म यदा जनकस्तव ।
मम समर्पयते भवतीं तदा, सुतनु ! फेल्क्रियतां सुतरां त्वया ॥१५७॥

सुतनु ! यदा तव जनकः पिता, भवतीं मम समर्पयते मह्यं दास्यति, तदा त्वया, सुतरामति-शयेन फेत्किबताम्, फेत्काराः कर्त्तव्याः, यथा सर्वेषामियं मारिरिति निश्चयो भवेत्, तथा च विशिष्य-नोहापोहौ भवेताम् ततश्च कार्यसौकर्यमितिभावः ॥१५७॥

તેનો વૃદ્ધિ પામતો અનુરાગ જોઈ મિત્રમુદ બોલ્યો કે જ્યારે તમારા પિતા મને તમારી સોંપણી કરે ત્યારે કોમલાંગી તમારે શિયાળિયાની જેમ સારી રીતે આવાજ કરવો. ॥૧૫૭॥

इति विनीय स तां मणिमञ्जरीं, नृपतिमभ्यगमन्निजगाद च ।
क्षितिपते ! मम साध्यतमाऽस्ति सा, चतुरगस्तुरगः परमर्प्यताम् ॥१५८॥

स मित्रमुत्, तां-मणिमञ्जरीम्, इति उक्तप्रकारं विनीय-शिक्षयित्वा, नृपतिम् अभ्यगमत्, निजगाद च, किमित्याह—क्षितिपते ! राजन् !, सा-तव पुत्री, मम, साध्यतमा, तामहं वशीकर्तुं क्षमः, ततश्च त्वया न भेतव्यमितिभावः । परं किन्तु चतुरगतिः पटुगतिः, तुरगोऽश्वः अर्प्यताम् दीयताम् ॥१५८॥

એમ તે મણિમંજરીને વધુ શીખવી તે મિત્રમુદ રાજા પાસે ગયો ને બોલ્યો કે હે રાજા આ મારો સાધ્ય છે પણ સારી ચાલવાળો ઘોડો આપો. ॥૧૫૮॥

ननु तुरगेण तव किं प्रयोजनम् इति चेत्तत्राह—

दिनकराभ्युदयात्प्रथमं यथा, जनपदान्तरमेव तकां नये ।
अपरथा तु तथाश्रितलक्षणा, कुलविघातकरी भवितैव सा ॥१५९॥

यथा येन प्रकारेण दिनकरस्य अभ्युदयात्प्रथममेव सूर्योदयात्पूर्वं रात्रावेवेत्यर्थः । अन्यथा साऽसाध्या भवेदितिभावः । तकां तां 'स्वार्थे कः' जनपदान्तरं देशान्तरं नये प्रापयामि, शीघ्रगामि-तुरगाभावे तु नैवं शक्यम्, तव राज्यस्य विस्तृतत्वात् सीम्नोऽतिदूरत्वान्मन्दगतिनाऽश्वेन तदुल्लङ्घनस्या-सम्भवादितिभावः । ननु सा पुत्रीति मद्गृहे देशे एव वा तिष्ठतु, अत्रैव तद्दोषप्रतीकारः कोऽपि त्वया कार्यः इति चेत्, नैतत्सम्भवतीत्याह—अपरथा जनपदान्तराप्रापणे पक्षे, तु न पूर्वपक्षस्य नितरा-मनिष्टताऽशक्यता च सूच्यते । तथाकथितप्रकारेण मार्यादिरूपेण आश्रितं लक्षणं स्वरूपं यया सा तादृशी मारिरूपा सा त्वत्पुत्री कुलविघातकरी भविता नान्यस्तद्दोषोपशमोपायः, एवञ्च कुलविघाता-पेक्षया वरमेकस्यास्त्यागः इति भावः ॥१५९॥

જેથી સૂર્યોદય પહેલાં જ તેને બીજા દેશમાં લઈ જઈ શકું અન્યથા તેવા લક્ષણોવાળી તે કુળ નાશ કરનારી થશે જ. ॥૧૫૯॥

क्षितिभुजा चकितेन च तस्य सा, कचविकर्षणपूर्वकमर्पिता ।
अथ श्रुता गुरु फेत्कृतिभीषणा, व्यवसिता कुलजा हि कुलश्रिये ॥१६०॥

अथ तद्वाक्यश्रवणानन्तरम्, चकितेन साश्चर्यभीतेन क्षितिभुजा-राज्ञा, गुरु सातिशयम्,

या फेत्कृतिः शृगालरवः, तया भीषणा, पूर्वकृतोपदेशानुसारादितिभावः । सा सुता मणिमञ्जरी, कचानां केशानां यद्विकर्षणं तत् पूर्वकम्, सदोषत्वे हि अपत्येऽपि नादरो महतामितिभावः । तस्य मित्रमुदः, अर्पिता । स्वापत्ये तादृशव्यवहारं समर्थयति-हि यतः, कुलजाः कुलीनाः, कुलमिव कुलकल्याणाय, व्यवसिताः कृतप्रयत्नाः, व्यापृता इति यावत्, भवन्तीतिशेषः । एवञ्च कुलक्षयभयादेवापत्येऽपि तस्यां तथाऽव्यवहार इति भावः ॥१६०॥

રાજાએ ચકિત થઈને તેને કેશ ખેંચીને તે પુત્રી આપી દીધી પછી તે રાજપુત્રી શિયાળિયાની જેમ ભયંકર મોટો હૂંકારો કર્યો, કેમકે કુલીન કન્યા કુલની શોભા આબાદી માટે હોય છે. ॥૧૬૦॥

अयमपि प्रणयप्रवणः स हुं-फुडिति मन्त्रसमुच्चरणाग्रिमम् ।
नृपसुतामधिरोह्य तुरङ्गमं, निरगमन्नगराद्दिवसात्यये ॥१६१॥

प्रणयः प्रीतिस्तत्प्रवण उन्मुखः, मित्रप्रीतिमानित्यर्थः, स तादृशाद्भुतमतिः, अयं मित्रमुदपि हुंफुडिति मन्त्रसमुच्चारणम् अग्रिमं प्रथमं यथास्यात्तथा, मन्त्रेणेयं मया वशीकृता, इति मारिरेवेयमिति लोकप्रत्यायनार्थमितिभावः । नृपसुतां मणिमञ्जरीम्, तुरङ्गममश्वमधिरोह्य, दिवसात्यये सूर्यास्तानन्तरम्, दिवसे कार्यविघ्नसम्भवादितिभावः । नगरान्निरगमत् ॥१६१॥

લોકોને રીઝવવામાં તત્પર તે મિત્રમુદ પણ 'હુँ फट्' એમ મન્ત્ર બોલતો પહેલા રાજપુત્રીને ઘોડા ઉપર ચઢાવી સાંજે નગરથી બહાર નીકળી ગયો. ॥૧૬૧॥

उदित एष तया हयमाश्रये-ति स जगौ स्फुटमेककवाहने ।
सह सुहृत्प्रियया त्वधिरोहणं, न खलु सङ्गतिमङ्गति कुत्रचित् ॥१६२॥

तया मणिमञ्जर्या, हयमश्वमाश्रयारोहय, इत्येव मुदितः कथितः, एष स मित्रमुत्, स्फुटं जगौ व्यक्तस्पष्टम्, मित्रस्य स्वच्छहृदयत्वात्, अस्पष्टोक्तौ तस्याः अविश्वाससम्भवाच्चेतिभावः । किमित्याह- एककवाहने एकस्मिन् वाहने, तुना वाहनान्तरे सम्मतिः सूचिता, सुहृत्प्रियया सह, अधिरोहणं न खलु नैव कुत्रचिद् कुत्राऽपि सङ्गतिम्, अङ्गति गच्छति, असङ्गतमित्यर्थः । नीतिविरुद्धमितियावत्, मनसि दृढेऽपि सति कदाचिद्दोषसम्भवादितिभावः ॥१६२॥

રાજપુત્રીએ તે મિત્રમુદને કીધું તમે પણ ઘોડા ઉપર ચઢી જાવ ત્યારે તેણે ચોખ્ખું કીધું કે એક વાહન ઉપર મિત્રની પત્નીની સાથે ચઢવું તે ક્યાંય પણ ઉચિત નથી. ॥૧૬૨॥

अथ तदुत्तरं श्रुत्वा मणिमञ्जर्याः विचारमाह—

नृपसुताऽपि विचिन्तयति स्म सा, सुकृतिनां कृतिनां स शिरोमणिः ।
गुणनिधिः सुहृदेष यदीयकः, श्रुतिविदां व्यवहारविदां गुरुः ॥१६३॥

सा नृपसुता मणिमञ्जर्यपि विचिन्तयति स्म, किमित्याह—श्रुतिविदां विदुषां व्यवहारविदां नीतिशास्त्रज्ञानां गुरुः श्रेष्ठः, गुणनिधिः-एष मित्रमुत्, यदीयकः यस्य सुहृत् मित्रम्, सोऽमरदत्तः, स

सुकृतिनां पुण्यवतां कृतिनां धीमतां शिरोमणिः प्रधानम् । स च विदूरप्रज्ञो नाऽल्पेन पुण्येन लभ्य इति भावः । एतादृशमित्रलाभः नाल्पस्य पुण्यस्य फलमितिभावः ॥१६३॥

ત્યારે રાજપુત્રી વિચારવા લાગી કે પુણ્યશાળી એવાં બુદ્ધિમાનોનો શિરોમણી હોવો જોઈએ કે જેનો શાસ્ત્ર અને વ્યવહારના બાબતોમાં શ્રેષ્ઠ બુદ્ધિની ખાણ આવો મિત્ર છે. ॥૧૬૩॥

अहमपि–त्रिजगत्प्रमदाजनस्तुतिपदं न भवाम्यधुना कथम् ? ।
अपि दृषद्वपुषा परिक्लृप्तया, युवमनः प्रसभं प्रहृतं यया ॥१६४॥

अथात्मानमपि धन्यं मनुते अहमिति इति अहमपि अधुना, त्रिजगति भुवनत्रयेऽपि, यः प्रमदाजनः तस्य स्तुतिपदं प्रशंसापात्रं कथं न भवामि ? अपि तु भवाम्येव, अत्र हेतुमाह—यया मया दृषद्वपुषा प्रस्तरमयशरीरया परिक्लृप्तया निर्मितया स्वप्रतिमया युवमनः प्रसभं हठात् प्रहृतमाकृष्टम्। अन्या तु मानुषशरीरेणाऽपि तादृशयुवमनोहरणेऽसमर्था अहं तु स्वप्रतिमयाऽपि तत्र समर्थेति अवश्यमहं प्रशंस्या, असाधारणगुणवत्त्वादिति भावः ॥१६४॥

હું પણ ત્રણે જગતની સ્ત્રીઓમાં પ્રશંસાપાત્ર કેમ નહિં થાઉ ? કેમકે મારી બનાવેલી પત્થરની મૂર્તિથી પણ મે યુવાનનું મન હઠથી હરી લીધું છે. ॥૧૬૪॥

विमृशतीति महीपतिकन्यका, सुहृदपेक्षितसिद्धिविधित्सुना ।
द्रुतमनीयत पुष्पपुरान्तिकं, नयवता कमलेव विशालताम् ॥१६५॥

इति–पूर्वोक्तप्रकारेण, विमृशती विचिन्तयन्ती महीपतिकन्यका राजपुत्री, सुहृदः–अपेक्षिता इष्टा या सिद्धिः कार्यं तद्विधित्सुना तच्चिकीर्षुणा मित्रमुदा, नयवता–नीतिज्ञेन, कमला लक्ष्मीर्विशालतां वृद्धिमिव, द्रुतं पुष्पपुरान्तिकमनीयत "कुसुमपुरं पाटलीपुरापराख्यं" प्रापिता । उपमालङ्कारः ॥१६५॥

આમ વિચાર કરતી રાજાની પુત્રી મિત્રની ઇષ્ટ સિદ્ધિ કરી આપવા ઇચ્છનાર તે મિત્રમુદ વડે નીતિજ્ઞો વડે લક્ષ્મીને વિશાળતા વૃદ્ધિની જેમ કુસુમપુર પાસે શીઘ્રતાથી લઈ જવાઈ. ॥૧૬૫॥

अथामरदत्तवृत्तान्तमाह—

परमितश्च दृषन्मयपुत्रिका, स्मरणलीनमना नृपनन्दनः ।
अवसिते सुहृदाऽभिहितेऽवधौ, तमरमिभ्यमयाचत चितिकाम् ॥१६६॥

परम् किन्तु इतः कुसुमपुरे च मित्रमुद्वृत्तसमुच्चायकः । दृषन्मयी या पुत्रिका पुत्तलिका तस्याः स्मरणे लीनमेकतानं मनो यस्य स तादृशः नृपनन्दनो अमरदत्तः, सुहृदा मित्रमुदा, अभिहिते कथिते, अवधौ–कालमर्यादायाम् मासद्वयमिते ज्ञाते सति "ज्ञानं सितमते अवात्" इति हैमः । अवसिते व्यतीते सति अरम्–शीघ्रम् एव, एतेन विरहस्यात्यन्तमसहिष्णुता सूचिता तमिभ्यं श्रेष्ठिवरम् रत्नसारम् चितिकां चितां "चिति चित्याचिता" इति हैमः । अयाचत चितारोहणे मनो यथाविस्तरं ॥१६६॥

પણ અહીંનો પત્થરની પુતળીનું સ્મરણ કરવામાં જ લીન એવો રાજપુત્ર અમરદત્ત મિત્રે કરેલી અવધિનો અન્ત થયે છતે તે વણિકને તરત જ કીધું કે મને ચિતા બનાવી આપો. ॥૧૬૬॥

विरचिते खलु तेन तदीहिते, निरुपचारमथोपचितानले ।
निखिलपौरजनप्रतिपत्तित–स्तदहरेकमवास्थित भूपजः ॥१६७॥

अथ तेनेभ्येन, तदीहिते अमरदत्तेष्टे, निरुपचारम् पवनाद्युपचाराभावेऽपि उपचितानले समृद्धाग्नौ विरचिते सम्पादिते सति, भूपजः निखिलानां पौरजनानां प्रतिपत्तिराग्रहः, अद्य प्रतीक्षस्वेत्येवं प्रार्थना, तद्धेतोः, एकं केवलं तदहः अवधेरन्त्यं तद्दिनम्, अवास्थित चितारोहणाद्विरतः ॥१६७॥

તે વણિક વડે તેનો ઇષ્ટ ચિતા બનાવાયે છતે અને તે ચિતામાં વિના ઉપચારે અગ્નિવૃદ્ધિ પામે છતે બધા નગરજનોના આગ્રહથી તે એક દિવસ રાજપુત્ર થોભ્યો. ॥૧૬૭॥

अथ मित्रमुखागमनमाह—

तुरगवाहन एति पदातिना, सममिति प्रजया प्रतिरूपिते ।
अमरदत्तसुहृत् तयका समं, स समयाऽमरदत्तमुपागतम् ॥१६८॥

तुरगवाहनोऽश्वारूढः कोऽपि पदातिना पदगेन सममेत्याऽऽगच्छति "पदातिस्तु पत्तिः पदगः" इति हैमः । इत्येवम् प्रजयालोकेन प्रतिरूपिते कथिते, अमरदत्त सुहृत् मित्रमुत्, तयका मणिमञ्जर्या समम्, अमरदत्तं समया समीपे, समया योगे द्वितीया । उपागमदागात् ॥१६८॥

કોઈ ઘોડે સવાર પગે ચાલતાની સાથે આવે છે એમ લોકો કહે છતે અમરદત્તનો મિત્ર તે મણિમંજરી સાથે અમરદત્તની પાસે આવી પહોંચ્યો. ॥૧૬૮॥

उपलमूर्त्तिरियं समुपासिता, कलयति स्म यदत्र समक्षताम् ।
अविकलं तदिदं किल भावना–बलफलं कलयन्तु मनीषिणः ॥१६९॥

अथ तद्भावनां स्तौति–इयं प्रत्यक्षा, उपलमूर्त्तिः प्रस्तरप्रतिमा, समुपासिता आराधिता सती यदत्र, समक्षताम् सजीवरूपेण प्रत्यक्षतां कलयति स्म गता, मनीषिणः तदिदम्, अविकलं सर्वम्, भावना तया दृढमनोवृत्तेर्बलस्य शक्तेः फलं कलयन्तु जानन्तु किल । भावनया हि असाध्यमपि साध्यते इति भावः ॥१६९॥

જે કારણથી આ પત્થરની મૂર્તિ સેવાયેલી છતી સદ્ય સ્વરૂપે થઈ ગઈ છે તેથી બુદ્ધિમાનો તે આ સંપૂર્ણ રૂપે ભાવના બળે મળેલું ફળ છે. એમ નિશ્ચિત રૂપે જાણો. ॥૧૬૯॥

अमरदत्तकुमारशिरोमणिः, समवलोक्य स तां मणिमञ्जरीम् ।
सुखमवाप तदेव न निर्वृतैर्यदिह–निर्वृतिमाप्य दुरासदम् ॥१७०॥

स चितामारुरुक्षुः, अमरदत्तः तदाख्यः कुमारशिरोमणिः, तां मित्रसुरा सह आगतां मणिमञ्जरीं समवलोक्य एव दर्शनमात्रेण तत् सुखमवाप, यत् न निर्वृतैः मावस्थैः जीवाविकैरितियावत् ।

निवृत्तिमाप्यापि निरुपाधिभावमाप्यापि यद्दुरासदं दुष्प्राप्यं सुखमवाप्यते तत्सोपाधिकत्वेऽपि अवाप्तः प्राप्तः, अमुक्तैः, भवस्थैरिति यावत्, निर्वृतिं मुक्तिमपि, अपिना अन्यस्याप्तौ तु का कथेति ध्वन्यते । आप्य दुरासदम् दुष्प्रापम् । मुक्तिसुखापेक्षयाऽप्यधिकं सुखमापेत्यर्थः ॥१७०॥

કુમારોમાં શિરોમણિ સમાન તે અમરદત્ત તે મણિમંજરીને જોઈ તેવો સુખ પામ્યો કે જે મુક્ત આત્માઓ મુક્તિ મેળવીને પણ દુઃખે કરીને મેળવી શકે છે. ॥૧૭૦॥

अथ मित्रमुदो नागरकृतस्तुतिमाह—

कटसुहृत्प्रियता कटसङ्गराम्बुधितटप्रतिपत्तिरनाहता ।
कटविसाध्वसमानसवृत्तिताकटमतिप्रचयोऽपचयोज्झितः ॥१७१॥

इति स मित्रमुदाश्रितसंमदैरभिनुतो मणिसारकनागरैः ।
न गुणवद् यदि वस्तु विवर्ण्यते, क्व रसनारसमद्भुतमश्नुताम् ? ॥१७२॥

कटा सातिशया क्रियाकारिका, सार्थिका इतियावत्, सुहृदि प्रियता प्रेम एतादृशकार्यसाधनेन सुहृदि प्रेम सार्थकम् सातिशयम् वा इत्यर्थः । अनाहता निर्विघ्ना, कटा सफला, क्रियाकारिकेतियावत् । सङ्गरस्य प्रतिज्ञायाः तद्रूपस्य अम्बुधितटस्य समुद्रतटस्य च प्रतिपत्तिः प्राप्तिः । कटे काले विसाध्वसा निर्भया मानसवृत्तिः मनोनिश्चलता यस्य स तादृशस्तद्भावः, अपचयोज्झितः ह्रासरहितः कटे आपदि मतिप्रचयः बुद्धिराशिः । इतीत्थम् मणिः मुख्यो येषां ते मणि सारवन्तः ते च ते नागरा तैः आश्रितसंमदैः प्राप्तहर्षैः मणिसारकस्य तदाख्यवणिजो नागरैः पौरैः स मित्रमुत्, अभिनुतः स्तुतः । तादृशदुःसाध्यकार्यसाधकस्य स्तुतिरुचितैवेत्याह—यदि गुणवत् उत्कृष्टं वस्तु न विवर्ण्यते, तदा, रसना जिह्वा अद्भुतं विलक्षणं रसं प्रीतिं क्व अश्नुताम् प्राप्नोतु । गुणवद्वस्तुप्रशंसयैव हि रसनायाः रसग्रहणम् । अन्यथा तु स्वादग्रहणम् इति भावः ॥१७१।१७२॥ युग्मम् ॥

કેવો મિત્રપ્રેમ ! નિર્વિઘ્ન રૂપે પ્રતિજ્ઞા રૂપી સમુદ્રના તટની કેવી પ્રાપ્તિ કેવિ નિર્ભય મનોવૃત્તિ ! કદી ક્ષીણ ન થાય એવો કેવો બુદ્ધિ વૈભવ ! મિત્રમુદનું બધુંય અદ્દ્ભુત છે. આમ અત્યંત હર્ષ પામેલા મણિસાર વગેરે નગરસ્વજનોથી તે મિત્રમુદ અભિનંદિત કરાયો. જો ગુણવાલી વસ્તુ વર્ણન તેમ થાય તો જિહ્વા અદ્દ્ભુત રસ ક્યાં અનુભવે ? ॥૧૭૧–૧૭૨॥

सुजनभावमितैरथ नागरैर्भजति शुष्मणि तत्र च साक्षिताम् ।
स्वमनसः परितापनिवृत्तये व्यधित सोऽपि विवाहविधिं तया ॥१७३॥

अथ पश्चात्, सुजनभावं सज्जनताम्, इतैः प्राप्तैः सज्जनैरित्यर्थः, नागरैः, सह तद्‌साहाय्येनेत्यर्थः । कृतसहाय इत्यर्थोऽवगम्यते, तत्र शुष्मणि अग्नौ "बर्हिः शुष्मा कृष्णवर्त्मा" इत्यमरः । साक्षितां भजति च, अग्निं साक्षीकृत्येत्यर्थः; सः अमरदत्तोऽपि, स्वमनसः, परितापस्य वियोगजनितज्वरस्य निवृत्तये शान्तये तया मणिमञ्जर्या सह विवाहविधिं व्यधित–चकार ॥१७३॥

સુજનપણાને પામેલા તે નગર લોકો ને તે અગ્નિ સાક્ષી રૂપે રહે છતે તે અમરદત્ત પોતાના મનનો સન્તાપ દૂર કરવા સારૂ તેની સાથે વિવાહ કર્યો. ।।૧૭૩।।

नवनवं खलु मासयुगेन यत्कृतमशर्म दृषद्वपुषा तया ।
अपि शिरीषसुमात्सुकुमारया तदपि तस्य तदैव तया क्षतम् ।।१७४।।

दृषद्वपुषा- पुत्तलिकारूपया तया मणिमञ्जर्या, मासयुगेन मासद्वयेन यत् यादृशम्, नवनवम्, नवप्रकारम् अशर्म असुखं कृतमुत्पादितम्, तदपि, शिरीषस्य सुमात्पुष्पादपि सुकुमारया तया तदैव क्षतम् विनाशितम् । वियोगजनितं दुःखं संयोगेन शान्तमिति भावः ।।१७४।।

મણિમંજરીએ પત્થરની પુતળી રૂપે જે નવો નવો કષ્ટ બે માસથી આપ્યો હતો તે શિરીષ ફૂલ કરતા પણ સુકુમાર એવી તેણીએ જ તેનો બધો કષ્ટ દૂર કર્યો. ।।૧૭૪।।

तस्य तादृश सुखदुःखयोः चेतनाचेतनकृतत्वमित्याह–यद्वा–यादृशद्वपुरपि सैव तथा च कथमेकमेव वस्तुमिलितं सुखाय दुःखाय चेति चेत्तत्राह—

वितनुतेऽसुखमेव विचेतनो मिलित एव सुखं तु सचेतनः ।
अपरथा हि दृषद्वपुषा तया सुखमजन्यत नास्य तदा कथम् ? ।।१७५।।

विचेतनः जडः मिलितः सङ्गतः असुखमेव वितनुते, जडस्यार्थक्रियाकारकत्वाभावादिति भावः । सचेतनस्तु सुखमेव वितनुते इति सम्बध्यते, अर्थक्रियासम्पादकत्वादिति भावः । तत्र प्रस्तुत एव दृष्टान्त इत्याह—अपरथा प्रकारान्तरे हि तदा चेतनमणिमञ्जर्यसत्वकाले दृषद्वपुषा तया, अस्य अमरदत्तस्य सुखं कथं नाजन्यत जातम्! एवञ्च चेतनाचेतनकृते सुखदुःखे इति व्याप्तिरिति भावः ।।१७५।।

• જડવસ્તુ દુઃખજ આપે છે ને સચેતન વસ્તુ મળ્યે છતે સુખ જ આપે છે જો તેમ નહિ હોય તો પહેલાં મણીમંજરીના પત્થરની મૂર્તિથી તેને ત્યારે સુખ કેમ ન થયો ? ।।૧૭૫।।

अथ निशीथभरेऽत्र महीश्वरे-ऽसुतकुले मृतिमीयुषि मन्त्रिणः ।
अभिविमृश्य मिथोऽभ्यषिचत् समे गजमुखादद्भुतदिव्यसुपञ्चकम् ।।१७६।।

अथ, अत्रावसरे, निशीथभरे पूर्णार्द्धरात्रे "निशीथस्त्वर्द्धरात्रो महानिशा" इति हैमः । असुतं पुत्ररहितं कुलं यस्य तस्मिन्नपुत्रे महीश्वरे राजनि मृतिमीयुषि प्राप्ते सति, समे सर्वे मन्त्रिणः अर्थात्तस्य राज्ञ एव, मिथः परस्परम्, अभिविमृश्य विचार्य, गजः मुखं प्रधानं येषु तादृशमद्भुतानां दिव्यानां सुपञ्चकं गजहयछत्रचामरजलपूर्णसुवर्णघटात्मकादिव्यपञ्चकं गजादीनि पञ्च दिव्यानीति यावत्, अभ्यषिचत् मन्त्रयामासुः, राजलोकः पञ्चदिव्याधिवासतामकरोत्, अन्यस्य राज्ञो लाभायेति । नृपाभावे को राजा भवत्विति परीक्षणाय दिव्यपञ्चकप्रयोगः इति पुरातनी रीतिः ।।१७६।।

હવે અરધ્મધ્ય રાત્રિએ તે નગરના રાજા મૃત્યુ પામે છતે બધા મંત્રીઓએ પરસ્પર વિચારીને હાથી વિગેરે પાંચ ઉત્તમ દિવ્યોનો અભિષેક કર્યો. ।।૧૭૬।।

अथ अधिवासितस्य दिव्यपञ्चकस्य वृत्तान्तमाह—

**दयितया सुहृदा सह चामरस्तरुगणाश्रितबाह्यवने स्थितः ।**

**स जलपूर्णघटेन समुक्षितः, स निहितः करिणा निजकुम्भके ॥१७७॥**

दयितया प्रियया मणिमञ्जर्या सुहृदा मित्रमुदा च सह, तरुगणैरञ्चिते सुशोभिते बाह्यवने पुरबाह्योद्याने स्थितः स अमरः अमरदत्तः, सत्याभामेतिवन्नामैकदेशग्रहणे नामग्रहणमितिभावः। कारिणा गजेन जलपूर्णघटेन समुक्षितोऽभिषिक्तः महीपतित्वाभिषेकः कृतः निजकुम्भके स्वशिरसः पिण्डे "कुम्भौ तु शिरसः पिण्डौ" इति हैमः। स्वमस्तकोपरि निहितः स्थापितश्च, हस्तिना शुण्डयोत्पाट्य स्वस्कन्धेऽधिरोहितः ॥१७७॥

પત્નીને મિત્ર સાથે વૃક્ષોથી શોભિત તે બાહરના ઉદ્યાનમાં રહેલો અમરદત્ત હાથી વડે પોતાના કુંભ ઉપર મૂકેલા ભરેલા કલશથી અભિષેક કરાયો ॥૧૭૭॥

शेषदिव्यप्रवृत्तिमाह—

**तुरग एव चकार च हेषितं, शशिकरोज्ज्वलचामरवीजितः ।**

**स्वयमवास्थित चातपवारणं, शिरसि दैवमहामहिमाश्रयात् ॥१७८॥**

तुरगोऽश्वः, एवकारोऽप्यर्थः। हेषितं ह्रेषा शब्दं चकार च, हस्ती च गुलगुलायितमकरोत्, शशिकरवदुज्ज्वलाभ्यां चामराभ्यां विजितः, स अमर इति शेषः। आतपवारणं छत्रं च स्वयमेव विकसितं दैवस्य भाग्यस्य "दैवं भाग्यं" इति हैमः। महतः महिम्नः आश्रयात् प्रभावात्, यद्वा दैवस्य देवसम्बन्धिनो महतो महिम्नः आश्रयात् प्रभावादित्यर्थः। अत एव 'दैवताधिष्ठितत्वतः' इति मुनिदेवसूरिप्रणीते शान्तिनाथचरित्रे प्रोक्तं सङ्गच्छते, शिरसि मस्तके, अर्थादमरदत्तस्यैव स्वयम् अवस्थित, प्रौढपुण्यप्रयुक्तत्वाद्दिव्यानाम् स्वयं तत्तत्कार्येषु प्रवृत्तिर्जाता दैवप्रभावादिति भावः ॥१७८॥

ચન્દ્રમાના કિરણોની જેમ ઉજળા ચામરથી વીઝાતો ઘોડો હણુ હણી અવાજ કર્યો ને ભાગ્યના મહાન પ્રભાવના લીધે છત્ર પોતે જ અમરદત્તના મસ્તક ઉપર આવીને રહ્યો. ॥૧૭૮॥

**अमरदत्त इति प्रथिताभिधो, जयति भूमिपतिः स्थितिवेदकः ।**

**इति जगादतमां दिवि देवता, सचिवमुख्यजनैः स्म विनम्यते ॥१७९॥**

स्थितिवेदकः मर्यादापालकः, अमरदत्त इति प्रथिताभिधः भूमिपतिः नृपः जयति इतीत्थं देवता देवसमूहः दिवि आकाशे जगादतमाम्, तथा, सचिवमुख्यैः जनैः विनम्यते प्रणम्यते स्म, नृपत्वेन दिव्यपञ्चकैर्वृतत्वादितिभावः ॥१७९॥

અમરદત્ત આવા પ્રસિદ્ધ નામવાળા સ્થિતિનો જાણકાર રાજા જય પામો એમ આકાશમાં દેવતાઓ બોલવા લાગ્યા ને મંત્રી વગેરે લોકો તેને પ્રણામ કર્યો. ॥૧૭૯॥

जनपदान्तरमप्यधिजग्मुषः, सुकृतिनः सुकृतं फलवद्भवेत् ।
क्वचन तिष्ठतु गच्छतु वेच्छया, कनकमस्य हता न महार्घता ॥१८०॥

अथ अमरदत्तस्य नृपत्वप्राप्तिं समर्थयति । जनपदान्तरं देशान्तरमपि अधिजग्मुषः गतस्य, न तु स्वदेशमात्रे, सुकृतिनः पुण्यशालिनः सुकृतं पुण्यम् फलवद्भवेत्, फलत्येवेत्यर्थः । अमरदत्तोऽपि पुण्यवानेवेति तद् भाग्यं जागर्त्येव, कथमन्यथा पूर्ववृत्तस्य घटनेतिभावः । किञ्च कनकम् सुवर्णम्, इच्छयान्यथारुचि, दैवप्रेरितम्, इति यावत् । अचेतनस्य कनकस्य इच्छया प्रवृत्त्ययोगादिति बोध्यम् । क्वचन कुत्रापि, तिष्ठतु गच्छतु वा, अस्य कनकस्य महार्घता बहुमूल्यवत्त्वम्, पूजातिशयलाभ इति यावत्, न हता नापगच्छति । कनकं सर्वदा कनकमेवेत्यमरदत्तस्याऽपि राजपुत्रत्वाद्राज्यप्राप्तिः नैसर्गिकी पुण्यप्रयोजिता वा, नात्रानौचित्यमसम्भवो वेतिभावः ॥१८०॥

દેશાન્તરમાં પણ ગયેલા પુણ્યશાલીનું પુણ્ય ફળ આપે જ છે. સોનું મુક્ત રૂપે ક્યાં પણ જાય કે રહે પણ તેનું મહામૂલ્ય પણું જતું નથી. ॥૧૮૦॥

प्रविशतो नृपतेर्नगरान्तरं वदनचन्द्रमवेक्षितुमुत्सुकाः ।
व्यधिषताऽऽलपनं नगराङ्गना, भवनतुङ्गगवाक्षमधिश्रिताः ॥१८१॥

अथामरदत्तस्य पुरप्रवेशमाह—नगरान्तरम् पुरमध्ये प्रविशतः नृपतेरमरदत्तस्य, वदनं मुखं चन्द्र इव तम् अवेक्षितुं द्रष्टुमुत्सुका नगराङ्गनाः पुरसुन्दर्यः आलपनं आलापस्तं वार्तालापं, भवनस्य तुङ्गः उच्चस्थानस्थो यो गवाक्षो वातायनं तत्राधिश्रिताः स्थिता व्यधिषत अकार्षुरित्यर्थः, निजं मुखम् "वक्त्रास्ये वदनं तुंडमाननं लपनं मुखम्" इत्यमरः ॥१८१॥

નગરની અંદર પ્રવેશ કરતા રાજાના મુખ-ચન્દ્ર જોવાને આતુર નગરીની સ્ત્રીઓએ પોત પોતાના મહેલના ઉંચા ગોખમાં મોઢું કરી જોવા લાગી. ॥૧૮૧॥

अथ तासां परस्परं नृपविषयं सम्भाषणमाह—

समवलोक्य महीपतिमेकिका, प्रवदति स्म सखीं प्रति पश्य यत् ।
सुरपतेरिव मर्त्यपतेः श्रियः परबलच्छिदुरत्वमनोहराः ॥१८२॥

महीपतिममरदत्तनृपं समवलोक्य, एकिका काप्येका सखीं प्रति प्रवदति स्म । किमित्याह—यत्, पश्य, मर्त्यपतेर्नृपस्यास्य सुरपतेरिन्द्रस्येव परबलस्य शत्रुसैन्यस्य छिदुरत्वेन भेदकत्वेन मनोहराः श्रियः लक्ष्म्यः, ताः पश्य स्वभाव एवास्य परबलभेदक इत्यर्थः । स्वरूपत एवायं प्रतापीतिभावः ॥१८२॥

એક સ્ત્રી રાજાને જોઈ પોતાની સખીને કહેવા લાગી કે જુઓ. ઈંદ્રની જેમ જ આ રાજાની લક્ષ્મી શત્રુ સૈન્યોના નાશ કરવાના ભાવનાવાળી કેવી મનોહર છે. ॥૧૮૨॥

अपरा अन्या अपि अवदत्, किमित्याह—

अवददप्यपरा मणिमञ्जरी—करसरोरुहपृक्थ्यनुभावतः ।
पथिकवृत्तितयाऽयमुपागतः, सखि ! विलोकय राज्यमविन्दत ॥१८३॥

सखि ! विलोकय वदतीतिशेषः। पथिकवृत्तितया पथिकरूपेण न तु राज्यप्राप्तीच्छया, उपागतः अयममरदत्तः मणिमञ्जर्याः करसरोरुहेण पाणिपद्मेन या पृक्तिः सम्पर्कः, पाणिग्रहणमित्यर्थः, तस्यानुभावतः प्रभावतः राज्यमविन्दत प्राप्तवान्, सुलक्षणस्त्रीकामः राज्यादिलाभहेतुर्भवतीतिभावः ॥१८३॥

બીજી પણ બોલી કે હે સખી ! વટેમાર્ગુ રૂપે અહીં આવેલો આ મણિમંજરીના કર કમલના સ્પર્શના પ્રભાવે રાજ્ય પ્રાપ્ત કર્યું તે જુઓ. ॥૧૮૩॥

अथ तासां मित्रमुद्विषयमालापमाह—

रसनया सखि ! वर्णनमेकया, किमिव मित्रमुदोऽस्य विधीयताम् ? ।
जलधिपारमवाप्य च मालवप्रभुसुतां य इमां सुधियाऽऽनयत् ॥१८४॥

सखि ! एकया रसनया जिह्वया अस्य दृश्यमानस्य मित्रमुदः तदाख्यस्य नृपसुहृदः वर्णनम्, किमिव विधीयताम् क्रियताम्, एकया जिह्वया तद्वर्णनं न सम्भवतीति भावः, । ननु किं कार्यगौरवं तस्य यदेवं वदसीति चेत्तत्राह-यः मित्रमुत्, जलधिपारम् समुद्रपरतीरमवाप्य गत्वा च, सुधिया सुबुद्धिप्रभावेण, इमां दृश्यमानाम् मालवस्य तदाख्यदेशस्य प्रभोर्नृपस्य सुतां पुत्रीं मणिमञ्जरीम्, आनयत् । दुष्करदुष्करमेतत्कर्म एवञ्च बुद्धिमत्तमत्वान्महासाहसिकत्वाच्च तद्वर्णनमेकया रसनया न सम्भवतीतिभावः ॥१८४॥

ત્યારે ત્રીજી બોલી કે હે સખિ આ મિત્રમુદનું વર્ણન એક જિહ્વાથી કેમ કરી શકાય કે જે બુદ્ધિમાને સમુદ્રનો પાર પામી માલવદેશના રાજાની આ કન્યાને લઈ આવ્યો. ॥૧૮૪॥

मित्रहर्षिहि लोक इति कस्याश्चिन्मणिसारस्तुतिमाह—

सखि ! विवर्ण्यतमो मणिसारको, दयितया दयया समलङ्कृतः ।
कथमपीममजीजिवदेव यः, सहचरेण विनाऽत्र पुनः स्थितम् ॥१८५॥

सखि ! दयितया प्रियया इव दयया समलङ्कृतः समन्वितः, नहि स्त्र्यभावे दयाऽभावे च कोऽप्येवं कर्तुमर्हतीति भावः। मणिसारकः तदाख्यो वणिक्, विवर्ण्यतमः अतिशयेन वर्णनीयः, स्तुतौ हेतुमाह-य एव, नत्वन्यः एवं कर्तुं प्रभवति इति भावः। पुनरिति वाक्यालङ्कारे, सहचरेण मित्रेण, सहायेन वा विना, असहायमित्यर्थः, अत्र स्थितम्, इमममरदत्तनृपम्, पुत्रमपरिचितं, कथमपि, दुष्करेण प्रयत्नेन पुत्रवत् अजीजिवत् जीवितवान्, असहायसहायो हि सर्वगुणप्रधानदयावान् इति स स्तुत्यतम इति भावः ॥१८५॥

ચોથી બોલી કે હે સખી ! પ્રિય એવી દયાથી શોભીત આ મણિસાર પ્રશંસા કરવા યોગ્ય છે. કે જેણે સાથી વગર રહેલા આ અમરદત્તને કોઈ પણ રીતે જીવતો રાખ્યો. ॥૧૮૫॥

अथ नृपस्य राजसदनप्राप्तिमाह—

इति नयन् वचनं विषयं श्रुतेः, प्रमुदिताखिलनागरयोषिताम् ।
नृपतिसौधमवाप नरेश्वरः, सचिवमाण्डलिकैरभितो वृतः ॥१८६॥

प्रमुदिताशयानाम् हृष्टमनसां नागरयोषितां पुरस्त्रीणाम्, इति पूर्वोक्तिप्रकारं वचनं, श्रुतेः कर्णस्य विषयं गोचरतां नयन् शृण्वन्नित्यर्थः । नृपः अमरदत्तनृपः, सचिवैः माण्डलिकैः सामन्तैश्च अभितः परितः वृतः समन्वितः, नृपतिसौधम् राजप्रासादमवाप प्राप्तः ॥१८६॥

આમ અત્યંત પ્રસન્ન સ્ત્રી નગરીની સ્ત્રીઓને વચન સાંભળતો મન્ત્રી–મંડલથી પરિવરેલો રાજા રાજાના મહેલમાં પહોચ્યો. ॥૧૮૬॥

व्यधित भूमिपतेरभिषेचनं, सचिवसंहतिरभ्युदयोन्मुखी ।
विविधतीर्थजलैरुपहारितैः, कनककुम्भधृतैरथ पावनैः ॥१८७॥

अथ नृपतेः प्रासादप्राप्त्यनन्तरम्, सचिवानां संहतिः गणः, अभ्युदयस्य श्रेयस उन्मुखी प्रवणा अभ्युदयाकाङ्क्षिणी सतीत्यर्थः । उपहारितैः आनायितैः, पावनैः पवित्रैः, "पवित्रं पावनं पूतम्" इति हैमः । कनककुम्भेषु सुवर्णकलशेषु धृतैः निक्षिप्तैः विविधानां तीर्थानां जलैः, भूमिपतेः अभिषेचनं राज्याभिषेकं व्यधित चकार ॥१८७॥

આબાદિને ઇચ્છતો એવો મંત્રિઓનો સમૂહ ઉપહારમાં અપાયેલા સુવર્ણ ઘડાના ધીથાને નાના તીર્થના પવિત્ર જલોથી રાજાનો અભિષેક કર્યો. ॥૧૮૭॥

अथ नृपतेः व्यवहारविभागमाह—

सुहृदि मन्त्रिपदं निदधेऽमुना, प्रविदधे महिषी मणिमञ्जरी ।
सममहेभ्यवरो मणिसारकः, क्षितिभुजा जनकेन समस्तदा ॥१८८॥

तदा राज्याभिषेके जाते, क्षितिभुजा राज्ञाऽमरदत्तेन मन्त्रिपदं मन्त्रित्वम् सचिवत्वं "अमात्यः सचिवो मन्त्री" इति हैमः । सुहृदि मित्रे मित्रमुदि निदधे न्यस्तम्, मित्रमुदं मन्त्रिणमकारयदित्यर्थः । तथा मणिमञ्जरी महिषी पट्टराज्ञी प्रविदधे कृता । तथा समेषु सर्वेषु महेभ्येषु श्रेष्ठिषु वरः श्रेष्ठः मणिसारकः तदाख्यः श्रेष्ठी जनकेन पित्रा समः तुल्यः प्रविदधे इत्यनुष्यते, पितृवदुपकारकत्वा तु पितृतया स्थापित इति यावत् ॥१८८॥

ત્યારે તે અમરદત્ત રાજાએ મિત્રને મંત્રિ પદ પર સ્થાપ્યો ને મણિમંજરીને પટરાણી પદે સ્થાપી. જે પિતા તુલ્ય એવા મણિસારને બધા શ્રેષ્ઠીઓમાં નગરશેઠ પણે થાપ્યો. ॥૧૮૮॥

अथ तस्य नृपस्य वैशिष्ट्यमाह—

परमवास्थित भास्वति सूरता, कुमुदिनीदयिते किल राजता ।
निबिडमेव बिडौजसि जिष्णुताऽप्यमरदत्तनृपेऽवति मेदिनीम् ॥१८९॥

परमिति तथार्थे, मेदिनीं पृथिवीम्, अवति पालयति सति अमरदत्तनृपे भास्वति सूर्ये सूरतो लोकप्रेरकत्वप्रकाशकत्वप्रतापाः षूंङ् प्रसवैश्वर्ययोरित्युक्तेः धातोः अनुशासनादितिभावः । कुमुदिनीदयिते चन्द्रे राजता शोभमानता आह्लादकता वा, विट् व्यापकमोजोबलं यस्य स तस्मिन् बिडौजसि

इन्द्रे जिष्णुता जयनशीलता, निबिडम् गाढमेवा अवास्थित अभूत् । सूर्यस्य सूरः, चन्द्रस्य राजा, इन्द्रस्य जिष्णुरिति पर्यायः तत्तद्वास्यर्थाभिप्रायेणान्वर्थः, तद्भावश्चामरदत्तनृपे गाढतया अभूत्, सूर्यादीनां सूरत्वादयोऽमरदत्तनृपे ततोऽपि गाढतया अभूदिति अमरदत्त एव जगति सूरता राजता जिष्णुता च सति बभूव, नान्य इति सारार्थः । सूर्याद्यपेक्षयाऽप्यधिक प्रतापादिसम्पन्नः स इति यावत् ॥१८९॥

રાજા અમરદત્ત પૃથ્વીનું પાલન કરતો છતો સૂર્યમાં જ સૂર પ્રયોગ હતો. આંધળામાં નહિ ( કેમકે કોઈ આંધળો ન હતો ) ચંદ્રમાં જ રાજશબ્દનો પ્રયોગ હતો. ( કેમકે કોઈ બીજો રાજા ન હતો ) જિષ્ણુ શબ્દનો પ્રયોગ ઘનિષ્ટ પ્રયોગ ઈન્દ્રમાં જ હતો ( કેમકે બીજો કોઈ જય પામે એવો ન હતો ) અમરદત્ત બધાને પરાજિત કર્યો હતો. ॥૧૮૯॥

अतिगतेषु कियत्स्वपि वत्सरेष्व-मरदत्तमहीपतिमन्यदा ।
विनयपूर्वमभाषत मित्रमुत्नुदति तन्नृप ! मां शवभाषितम् ॥१९०॥

अतिगतेषु व्यतीतेषु कियत्स्वपि वत्सरेषु वर्षेषु, अन्यदा एकदा मित्रमुत् अमरदत्तमहीपतिं विनयपूर्वकं सविनयं यथा स्यात्तथा अभाषत न्यवेदयत्, किमित्याह–नृप ! माम्, तत् पूर्वानुभूतम् शवभाषितम् शववचनम्, तव मुखेऽपि कनकमोदिका पतिष्यतीत्येवंरूपम्, नुदति बाधते, तत्स्मृत्वा साम्प्रतमप्यहं बिभेमि सचिन्तश्चास्मीत्यर्थः ॥१९०॥

કેટલાક વર્ષો વીતી ગયે છતે એક દિવસે મિત્રમુદે અમરદત્ત રાજાને વિનયપૂર્વક કીધું કે હે રાજા તે શબનો વચન મને હંમેશા પીડે છે. ॥૧૯૦॥

ननु एवं स्थिते मया किं कर्त्तव्यमितिचेत्तत्राह—

कुरु तदभ्युपपत्तिमिलापते ! विसृज्य मामिति साग्रहमीरितः ।
नरपतिः स्वजनैरनुवर्त्तकै-रथ वसन्तपुरे नयति स्म तम् ॥१९१॥

इलापते ! राजन् ! तस्य अभ्युपपत्तिमभ्युपायं कुरु, ननु कोऽसावुपाय इति चेत्तत्राह—मां विसृज त्यज, आज्ञापय गमनायेत्यर्थः । इतीत्थं साग्रहम् ईरितः प्रार्थितः नरपतिः अमरदत्तनृपः, अथानन्तरम्, तं मित्रमुदम् स्वजनैः, अनुवर्त्तकैरनुकूलैः अनुयायिभिः, यद्वा स्वजनैः अनुजीविभिश्च सह वसन्तपुरे तदाख्यनगरे नयति स्म प्रापयति स्म, तं वसन्तपुरं प्रेषितवानित्यर्थः ॥१९१॥

માટે હે રાજા ! મારા ઉપર અનુગ્રહ કરો ને મને રજા આપો એમ આગ્રહપૂર્વક કહેવાયેલો રાજા પછી અનુવર્તન કરનાર સ્વજનોથી તેને વસંતપુર લઈ ગયો. ॥૧૯૧॥

कतिपयैर्दिवसैस्तदुदन्तकेऽनवगतेऽधृतिमान् धरणीधवः ।
अकृत शुद्धिमभीष्टजनैर्निजैर्न तदुदन्तमविदन्त कश्चन ॥१९२॥

कतिपयैः कियद्भिः दिवसैः, तस्य मित्रमुदः तदुदन्तके वृत्तान्ते, स्वार्थे कः अनवगतेऽज्ञाते

हेतौ, अत्र हेतुसप्तमी सति अधृतिमान् सचिन्तश्चेताः धरणीधवः अमरदत्तनृपः, निजैः अभीष्टजनैः प्रियजनैः, शुद्धिमन्वेषणमकृत, किन्तु, कश्चन तदुदन्तं कमपि मित्रमुदवृत्तान्तं न अविन्दत प्राप्तवान् ॥१९२॥

કેટલાક દિવસોથી તે મિત્રનો સમાચાર નહિ મલવાથી અધીરો થઈ ગયેલો રાજા પોતાના પ્રિયજનો દ્વારા તેની શોધ કરિ. પણ તેનો કોઈ સમાચાર મળ્યો નહિ. ॥૧૯૨॥

प्रियवयस्यकवार्तमनाप्नुवन्, हृदि वहन्नसमाधिभरं नृपः ।
इति विचिन्तयति स्म स कोऽपि विद्, यदि समेति तदा रुचिरं भवेत् ॥१९३॥

प्रियस्य, वयस्य एव वयस्यकस्तस्य सुहृदः वार्तां एतिह्यं जनश्रुतिं "जनश्रुतिः किम्वदन्ती वार्तैतिह्यं" इति हैमः । अनाप्नुवन् अलभमानः अत एव, हृदि असमाधिभरं सातिशयचिन्तां वहन् नृपः सोऽमरदत्तः इति वक्ष्यमाणप्रकारं विचिन्तयति स्म, तच्चिन्तामेवाह–यदि कोऽपि वित् विद्वान्, अदृष्टार्थज्ञः समेत्यागच्छति, तदा रुचिरम् शोभनं भवेत्, तत्सकाशान्मित्रवृत्तान्तलाभसम्भवादिति भावः ॥१९३॥

પ્રિયમિત્રનો સમાચાર નહિ મળવાથી મનમાં અત્યંત અસ્વસ્થતાનું ધારણ કરતો રાજા એમ વિચારવા લાગ્યો કે જો કોઈ જ્ઞાની આવે તો સારૂ થાય. ॥૧૯૩॥

अथ वनीपतिरप्यवनीपतिं, समुपगम्य विनम्य जगाद तम् ।
तव वने समुपास्थित चित्चतुष्टयधरो वृषघोषमुनीश्वरः ॥१९४॥

अथात्रावसरे, वनीपतिः वनपालः उद्यानरक्षकः तमवनीपतिममरदत्तनृपं समुपगम्य विनम्य, अपिश्चार्थे, जगाद, किमित्याह—तव वने उद्याने, चितां ज्ञानानां चतुष्टयस्य मतिश्रुतावधिमनःपर्यायात्मकस्य धरः चित्चतुष्टयवान् वृषघोषमुनीश्वरः धर्मघोषसूरिः, समुपास्थित आयातः ॥१९४॥

પછી વનપાલે આવી પ્રણામ કરી રાજા ને કીધું કે ચાર જ્ઞાનના ધારક ધર્મઘોષ મુનિ તમારા ઉદ્યાનમાં સમોસર્યા છે. ॥૧૯૪॥

अमरदत्तनृपः प्रमदोल्लसद्बहलरोमसमाचितविग्रहः ।
सदयितोऽथ विवन्द्य गुरूनयं गुरुमुखात्सुकृतश्रवणं व्यधात् ।

अथ, प्रमदेन गुर्वागमनजनितहर्षेण उल्लसद्भिः विकसितैः अग्रतः गच्छद्भिः बहलैः निबिडैः रोमभिः समाचितः समन्वितः विग्रहः शरीरं यस्य स तादृशः हर्षात्पुलकितशरीरः अयम् अमरदत्तनृपः, सदयितः सभार्यः, गुरून् तान् मुनीश्वरान् विवन्द्य, गुरुमुखात् सुकृतस्य च उपचारात्तत्कारिसदनुष्ठानधर्मस्य श्रवणं व्यधात् ॥१९५॥

પછી અમરદત્ત રાજા હર્ષથી ઉલ્લાસ પામતા રોમાંચથી શોભિત દેહવાળો થતો પત્ની સાથે, ગુરુની વંદના કરી ગુરુમુખથી ધર્મનું શ્રવણ કર્યું ॥૧૯૫॥

तदनु शोकसदत्तमहेभ्यको, दुहितृशोकसमाकुलमानसः ।
स्फुटमपृच्छदनिच्छहृदो गुरून्, मम सुताऽपि सदा किमहो ! सरुक् ! ॥१९६॥

तदनु धर्मकथा श्रवणानन्तरम् शोकात् शोकशब्दादनन्तरं सदत्तः दत्तशब्दसहितः शोकदत्ताभिधः चारित्रान्तराऽभिहितशोकदत्ताख्यः, महेभ्यकः दुहितुः पुत्र्याः शोकेन चिन्तया समाकुलं मानसं यस्य स तादृशः दुहितृरोगचिन्तादुःस्थः, अनिच्छं निःस्पृहं हृद् येषां तान् गुरून् मुनीश्वरान्, स्फुटमपृच्छत्, तत्प्रश्नमेवाह—अहो इति खेदे, मम सुता सदापि सर्वदैव, सरुक् रुग्णा सहिता किम् कुतो हेतोः ? ॥१९६॥

ત્યાર પછી શોકદત્ત શેઠે કન્યાના રોગથી વ્યાકુલ મનવાળો છતો વીતરાગ ગુરુને પ્રકટ રીતે પૂછ્યું કે મારી પુત્રી હંમેશાં રોગી કેમ રહે છે ? ॥૧૯૬॥

गुरुभिरात्मसमीपमवापिता, गुरुदृशाऽजनि साऽपि निरामया ।
धनपतिस्तु किमेतदिति स्वयं, मुनिपतीन् स ततः परिपृष्टवान् ॥१९७॥

गुरुभिः धर्मघोषसूरिभिः, आत्मसमीपं स्वसमक्षम् अवापिता आनायिता सा शोकदत्तपुत्री गुरुदृशा मुनिपतिश्रीगुरुकृतावलोकनमात्रेण, अपिरेवार्थे, न तु किमपि चिकित्सान्तरमित्यर्थः । निरामया नीरोगा "रोगव्याधिगदाऽऽमया" इत्यमरः । अजनि जाता । ततः तस्माद्धेतो स धनपतिः शोकदत्तः, तुराश्चर्ये, स्वयम्, मुनिपतीन्, किमेतत् किमत्र रहस्यमित्येवं परिपृष्टवान् ॥१९७॥

गुरुरवोचत, तदुक्तिमेवाह—

गुरुरवोचत भूतकशालके, पुरवरेऽजनि भूतकदेवकः ।
वणिगभूतमहाव्यसनोदयः, समुदयच्छुभकर्म मनोरथः ॥१८९॥

भूतकशालके, भूत एव भूतकः शाल एव शालकः तस्मिन् भूतशालाख्ये पुरवरे नगरे, अभूतः न जातः महतो व्यसनस्य विपद उदयः प्राप्तिर्यस्य स तादृशः सर्वदा सुखसमन्वितः, "व्यसनं विपदि" इत्यमरः । समुदयन् शुभे कर्मणि मनोरथो यस्य स तादृशः शुभकर्मपरायणः भूतकदेवकः भूतदेवाख्यः वणिक्, अजनि ॥१९८॥

ત્યારે ગુરુઓએ પિતા આદિ તે ગુરુ પાસે લઈ આવ્યો. ને તે ગુરુની દૃષ્ટિ માત્રથી રોગ રહિત થઈ ગઈ, ત્યારે શેઠે પોતે જ આમ થઈ ગયું તે આ શું છે એમ ગુરુને પૂછ્યું ગુરુ બોલ્યા કે ભૂતકશીલક નગરમાં જેણે કદી મોટા વ્યસન થયો નથી એવો તે શુભ કર્મોમાં ઇચ્છાવાળો ભૂતદેવ નામે વણિક થયો. ॥૧૯૭-૧૯૮॥

कुलमती समजायत तत्प्रिया, सतामिव जायत लोलविलोचना ।
नवनवः समवेत्य च साऽपि पीविषयमाहृतमोतुमिरन्यदा ॥१९९॥

मतिमतीमपि देवमतीं वधूमिति जजल्प रुषाऽरुणितेक्षणा ।
किमवधानपराङ्मुखि ! शाकिनीकवलिताऽसि न पासि यदेतकत् ? ॥२००॥
॥ युग्मम् ॥

तस्य भूतकदेवकस्य भूतदेवश्रेष्ठिनः प्रिया भार्या, सरसिजे कमले तत्पत्रे इव आयते दीर्घे लोले चञ्चले च विलोचने नेत्रे यस्याः सा तादृशी कुरुमती तन्नाम्नी समजायत । अन्यदा एकदा च, ओतुभिः बिडालैः, "ओतुर्बिडालो मार्जार" इत्यमरः । नवपयः अचिरदुग्धम् । दुग्धम् पीबित्ययं पानक्रियाविषयम्, आहृतं प्रापितं पेपीयमानं पीतमित्यर्थः, समवेक्ष्य अपि विलोक्यैव, रुषा क्रोधेन अरुणिते रक्ते ईक्षणे नेत्रे यस्याः सा तादृशी, क्रोधे सति हि नेत्ररक्तता जायते इति भावः । मतिमतीमपि वधूं देवमतीं तन्नाम्नीम् स्नुषां, इति वक्ष्यमाणप्रकारं जजल्प, तदेवाह—अवधाने पराङ्मुखी निवृत्ता तत्सम्बोधने, प्रमादशीले ! शाकिन्या प्रेतयोनिविशेषेणकवलिता गृहीता अभिभूताऽसि किम ? ननु त्वयैतद्दोषारोपणं निर्निमित्तं क्रियत इति चेत्तत्राह—यद्यस्माद्धेतोरेतकं एतद्दुग्धं न पासि रक्षसि, शाकिन्यादिकवलितैव प्रमादं कर्तुमर्हति, नाऽन्या, त्वया प्रमादः कृत इति तथात्वं सम्भाव्यते एवेति भर्त्सनोक्तिः ॥१९९॥२००॥

તેની કમલ જેવા મોટાને ચંચળને વાળી કુરુમતી નામે પત્ની હતી તે એક દિવસ બિલાડીઓએ તાજો દૂધ પીવડાયેલો જોઈ બુદ્ધિમતી પણ દેવમતી નામની વહૂને ક્રોધથી લાલ નેત્રવાળી થઈ કીધું કે કેમ અસાવધાન રહે છે ? શું શાકિનીનુ વળગાડ છે ? કે આનું (કથનું) રક્ષણ કરતી નથી ? ॥૧૯૯-૨૦૦॥

तदतिभीमवचः श्रवणादपि, प्रचलदङ्गलतां क्षुभितामिमाम् ।
छलयति स्म बलादपि शाकिनी, छलपरा हि खला न यथैषिका ॥२०१॥

तस्याः कुरुमत्याः अतिभीमस्य वचसः श्रवणादपि श्रवणमात्रादेव, क्षुभितां क्षोभं गताम्, अत एव, प्रचलन्ती भिया कम्पमाना अङ्गलता इव यस्याः सा तां देवमतीम्, शाकिनीबलादपि हठादेव, छलयति अभिभवति स्म, हि यतः, यथा एषिका शाकिनी छलपरा अभिभवतत्परा, तथा खला दुःशीला न नैव, शाकिनी हि दुःशीलापेक्षयाऽप्यधिकं छलयतीत्यर्थः ॥२०१॥

તેના અત્યંત ભયંકર અવાજ માત્રથી ધ્રુજતી ને ક્ષોભ પામેલી તેણીને શાકીની પણ બલપૂર્વક છલી લીધી કેમકે દુર્જન પણ તેવો છલિયો નથી હોતો, જેવી શાકીની હોય છે. ॥૨૦૧॥

अथ नरेन्द्रगणैः कृतमण्डलैः प्रचुरमन्त्रविधानविशारदैः ।
बलविसारितया स्म निगृह्यते परचमूरिव सा विरसारवा ॥२०२॥

अथ शाकिनी कृताभिभवानन्तरम्, कृतमण्डलैः कृतव्यूहैः, पक्षे परितो मण्डलाकारेणावस्थितैः नरेन्द्रगणैः नृपसमूहैः, अथ च मान्त्रिकैः, परचमूः, शत्रुसैन्यमिव, प्रचुरैरनेकैः मन्त्रविधानेषु, यद्वाऽनेकमन्त्रविधानेषु, शाकिन्याद्युपद्रवनिवारकमन्त्रप्रयोगेषु विशारदैः निपुणैः योगिभिः विरसः अभव्यः श्रुतिकटुर्वा आरवः शब्द यस्याः सा तादृशी कुत्सितस्वरा सा शाकिनी, बलस्य सकैः विसारिता प्रसारः

तस्य भावस्तया बलपूर्वकं निगृह्यते स्म वशीक्रियते स्म । शाकिन्यादीन् भूताद्याविष्टान् भूतादींश्च मान्त्रिका मन्त्रप्रयोगादिना वशीकुर्वन्तीति लोके प्रचलितो व्यवहारः ॥२०२॥

પછી ઘણીજ મંત્રક્રિયાઓમાં નિપુણ ભૂવાઓએ મંડલ બનાવી મંત્ર બલના પ્રભાવે શત્રુએ નાની જેમ અપ્રિય અવાજ કરતી તે શાકિનીને કાબૂમાં કરિ. ( મંત્ર બલે રાજાઓ પણ વ્યૂહ બનાવી સૈન્યબલે શત્રુસેનાનો નિગ્રહ કરે છે. ) ॥૨૦૨॥

पुनरभूद्वपुषाऽपि समाहिता प्रतिकृता खलु तैरपि योगिभिः ।
कुरुमती किल कालरसज्ञिकेति भुवि सा श्रुतिमेव ततो गता ॥२०३॥

पुनः खल्विति वाक्यालङ्कारे, तैरपि योगिभिः मान्त्रिकैः, प्रतिकृता चिकित्सिता वपुषाऽपि समाहिता स्वस्था अभूत्, सेति पूर्वतः सम्बध्यते । ततः तत्प्रभृत्येव सा कुरुमती, काला रसज्ञा जिह्वा यस्याः सा तादृशी, कालजिह्वेति यदनिष्टं भाषितं तथैव सम्पद्यते इति भावः । भुवि लोके श्रुतिं प्रसिद्धिं गता ॥२०३॥

તે માંત્રિકો વડે પ્રતીકાર કરાયે છતે તે શરીરે સ્વસ્થ થઈ. તે કુરુમતી તેથી કાલજીભી ( જેના બોલવાથી અશુભ થાય તેવી ) તરીકે લોકમાં ખ્યાત થઈ. ॥૨૦૩॥

तदसमानविरागभरादियं व्रतमुपेत्य दिवं च तवाङ्गजा ।
अजनि पुण्यमतेऽम्बरदेवता–स्तत इमां व्यथयन्ति कुकर्मणः ॥२०४॥

तेन तादृशपूर्वोक्तहेतुना कृतः योऽसमानोऽसाधारणो विरागो निर्वेदस्तद्भरात्तदतिशयात्, व्रतम् संयमम्, पश्चाद्, दिवं स्वर्गं चोपेत्य प्राप्य इयं दृश्यमाना तवाङ्गजा पुत्री कुरुमती जीवः अजनि । पुण्यमते ! धर्मबुद्धे ! ततः दुर्वाक्यमुक्त्वाऽनालोचितं पूर्वभवे इति तज्जन्यं कुकर्मणः हेतोः, अम्बरदेवताः आकाशचारिण्यः देवताः इमां व्यथयन्ति पीडयन्ति, दुष्कृतिर्हि देवता कोपभाजनं भवतीति भावः ॥२०४॥

તેની અપ્રતિમ અપ્રીતિના કારણે દીક્ષા લઈ સ્વર્ગે ગઈ ને તમારી પુત્રી થઈ માટે પુણ્ય નહિ હોવાથી તે કુકર્મના કારણે આકાશના દેવો આને પીડી છે. ॥૨૦૪॥

ननु तर्हि ता इदानीं कथमपसृता इति चेत्तत्राह—

मम समीक्षणतोऽप्यपहाय तास्तव सुतां प्रपलायिषताधुना ।
सहजवैरभरार्दितचेतसामपि न वैरकथा दृशि विद्वताम् ॥२०५॥

अधुना, मम समीक्षणतः अपि अवलोकनमात्रेणैव तव सुतामपहाय त्यक्त्वा ताः देवताः प्रपलायिषत दूरंगताः, तदेव हेतूक्त्या समर्थयति–विद् ज्ञानं तद्वतां ज्ञानिनां दृशि चक्षुषि, लक्षणया चक्षुर्गोचरे विषये, सहजेन जातिनिबद्धेन वैरभरेण विरोधातिशयेन अर्दितचेतसां व्यथितचित्तानामपि, किं पुनः कृत्रिमविरोधिनामित्यपेरर्थः । विरोधो हि अवसं निजचेतःपीडायै एव भवतीति

र्दिसचेतसामित्युक्तिरितिभावः। वैरकथा द्वेषभावः न, ज्ञानिनां पुरतः सर्वे एव वैरभावं त्यजन्ति तत एव ताः प्रपलायिषतेतिभावः ॥२०५॥

માત્ર જોવા માત્રથી તે દેવતાઓ હમણાંજ તમારી પુત્રીને છોડી ભાગી ગયા છે. જ્ઞાનીઓની દષ્ટિ પડે છતે સહજ શત્રુ ભાવવાળાઓનો વૈરભાવ રહેતો નથી. ॥૨૦૫॥

स्मृतभवान्तरजातिरथ व्रतं, भवविरक्तिरयाचत साऽप्यलम् ।
गुरुमुखाधिकभोगफलश्रुतेः शिवफलं गृहिधर्ममुपाददे ॥२०६॥

अथ पूर्वभववृत्तश्रवणानन्तरम्, सा शोकदत्तसुताऽपि, स्मृता भवान्तरस्य जातिर्जन्म यया सा तादृशी जातजातिस्मरणा अत एव अलमतिशयेन, भवे विरक्तिर्यस्याः सा तादृशी विरक्ता सती, व्रतं संयममयाचत। तथा, गुरुमुखेन अधिकभोगं सातिशयसुखरूपं फलं तस्य श्रुतेः महाशये भोगफलं कर्मास्ति सम्प्रति तव तस्मिन् भुक्ते दीक्षां ग्रहीष्यसीति श्रुतेः श्रवणात् शिवफलं कल्याणजनकं परम्परया मोक्षजनकं वा गृहीधर्मं गार्हस्थ्यधर्मम्, उपाददे ॥२०६॥

પછી તેણીએ જાતિ સ્મરણ થઈ જવાથી સંસારથી વૈરાગ્ય પામી વ્રતની પ્રાર્થના કરવા લાગી. ગુરુ મુખે ભોગફલ કર્મ વધારે છે એમ સાંભલી મોક્ષફલ આપનાર શ્રાવક ધર્મનો અંગીકાર કર્યો. ॥૨૦૬॥

नृपतिविज्ञपमासमनन्तरं, गुरुरवोचत मित्रचरित्रकम् ।
तव भटैः सह भक्तिपरैस्तदा गहन एव पपात स मित्रमुत् ॥२०७॥

नृपतेः अमरदत्तनृपस्य विज्ञपनायाः समनन्तरम् गुरुः धर्मघोषसूरिः, मित्रस्य नृपतिमित्रस्य मित्रमुदः चरित्रमेव चरित्रकमवोचत। तदुक्तिमेवाह—तदा तव सकाशाच्चलितः स मित्रमुत्, भक्तिपरैराज्ञाकारिभिस्तवभटैः योधैः सहैव, गहने कानने पपात जगाम, गच्छन्नासीदित्यर्थः ॥२०७॥

રાજાની વિનંતી પછી ગુરુજી મિત્રમુદનો સમાચાર કહેવા લાગ્યા, તે વખતે ભડ એવા તમારા યોદ્ધાઓ સાથે મિત્રમુદ સંકટમાં પડી ગયો ॥૨૦૭॥

दिनमवास्थित यावदतन्द्रितो जनसुखाय सखा तव तत्र सः ।
बहलनाहलराजिरुपागमद् यमभटा इव तावदतर्किता ॥२०८॥

स तव सखा मित्रं मित्रमुत्, तत्र गहने जनानामनुचराणां सुखाय परिश्रमापगम्याय दिनं यावत् अतन्द्रितः निरलसः, सावधान इति यावत्। अवास्थित तस्थौ, तावत् तदवसर एव यमभटा यमानुचरा इव बहलं दृढं गाढमविरलमिति हैमोक्तेः। बहला दृढा नाहलास्तेषां म्लेच्छजातीनां पुलिन्दानां "पुलिन्दा नाहला निष्ट्याः" इत्यादि हैमः। राजिः श्रेणी, अतर्किता अकस्मादुपागमत् ॥२०८॥

ત્યાં તમારો તે મિત્ર લોકોના સુખ માટે એક દિવસ આલસ વગરનો રહ્યો, તેટલામાં યમના જેવાં ઘણા મ્લેચ્છોનું ટોળું ઓચિંતુ આવી પડ્યું. ॥૨૦૮॥

तव भटेष्वखिलेषु पलायितेष्वथ पलायितवान् स सुहृत्तव ।
क्वचन केचन तेऽपि च मण्डले, परमपत्रपयाऽस्युरवाङ्मुखाः ॥२०९॥

अथ नाहलराजिसमागमानन्तरम्, अखिलेषु तव भटेषु पलायितेषु, भयादितिभावः। स तव सुहृत्, मित्रं, मित्रमुत्, पलायितवान्, स्वस्यासहायत्वात् नाहलानाञ्चानेकत्वात्, ततः स्वरक्षण-स्याशक्यत्वात् प्राणरक्षार्थं पलायनस्यैवोपायस्यावशिष्टत्वात्, नतु पूर्वमेव, वीरधर्मविरुद्धत्वादिति-भावः। ते भटा अपि च केचन, क्वचन मण्डले व्यूहे देशे वा "देशो मण्डलम्" इति हैमः। पर-मत्यन्तमपत्रपया लज्जया, अवाङ्मुखा अधोमुखाः अस्थुः, लज्जितो हि अवाङ्मुखो भवतीति स्वभावः तव देशे न समागता इति भावः ॥२०९॥

क्वचन कानन एव परिभ्रमं–स्तृषित एव निपीय सरोजलम् ।
श्रममपासितुमातपवर्जिते, शयितवान् वटभूमिरुहस्तले ॥२१०॥

क्वचन कस्मिंश्चित् कानने वने एव "गहनं काननं वनम्" इत्यमरः। परिभ्रमन्नेव, तृषितः सरोजलं निपीय पीत्वा, श्रमम्, अपासितुम् दूरीकर्तुम्, आतपवर्जिते सुच्छायत्वात् शीतले, वटभूमि-रुहः वटवृक्षस्य तलेऽधः शयितवान्, निद्रया हि श्रमो विनीयते इति भावः ॥२१०॥

તમારો મિત્ર કોઈ વનમાં ભમતો ભમતો તરસ લાગવાથી તલાવમાં પાણી પીને થાકખાવા તડકા રહિત એવા વડલાના ઝાડ નીચે સુઈ ગયો. ॥૨૧૦॥

तदुरुकोटरतोऽत्र विनिःसृत–स्तमदशत्सहसैव सरीसृपः ।
उपगते हि विधौ प्रतिकूलतां, प्रतिपदं महतां विपदेत्यपि ॥२११॥

अत्र शयिते तस्मिन् सति, तस्य वटवृक्षस्य तरोः विशालत्वात् कोटरतः सहसा अकस्मादेव विनिःसृतः बहिरागतः सरीसृपः सर्पः तं मित्रमुदमदशत् "व्यालः सरीसृप"इत्यमरः। ननु किमिति विपदं गतस्य पुनर्विपदागम इति चेत् एवमेव भवतीत्याह—हि यतो विधौ दैवे प्रतिकूलताम् उपगते महतां समर्थानामपि प्रतिपदं पदे पदे विपदेति आगच्छति, एवञ्च तस्य पुनर्विपदागमो नाश्चर्याय, मानवानामल्पसाधनत्वान्नितरां प्रतिकाराक्षमत्वादितिभावः ॥२११॥

તે ઝાડના મોટા કોટરથી નિકળેલો સર્પ તેને અકસ્માત ડંસ્યો, ભાગ્ય જો પ્રતિકૂલ હોય તો મોટાઓને પણ પગલે પગલે વિપદાઓ હોય છે. ॥૨૧૧॥

तमथ तस्य विषेण विचेतनं, सपदि कोऽपि जटी समजीविवत् ।
उपकृतिः सुकृताय महीपते, भवति संजनिता यदसंस्तुते ॥२१२॥

अथ तस्य सर्पस्य विषेण, सपदि सद्य एव एतेन तस्य सर्पस्योग्रविषत्वं सूच्यते, "सद्यः सपदि तत्क्षणे" इत्यमरः। विचेतनं गतसंज्ञम् मूर्छितमिति यावत्, कोऽप्यनिर्दिष्टनामा जटी जटाधरो योगी मन्त्रौषधादिप्रयोगेण समजीजिवत् निर्विषं कृत्वा यद्यस्माद्धेतोः, असंस्तुते अपरिचिते संजनिता कृता उपकृतिरुपकारः, महीयसेऽतिमहते सुकृताय पुण्याय भवति, "परोपकारः पुण्याय पापाय परपीडनम्" इत्युक्ते, परोपकाराय सतां विभूतयः" इत्युक्तेश्च ॥२१२॥

तेनाः विषथी બેહોશ થયેલો તેને કોઈ જટધારી તાપસે સજીવન કર્યો કેમકે અપરિચિતને વિષે કરાયેલો ઉપકાર મોટા પુણ્ય માટે હોય છે. ॥૨૧૨॥

जटिनि जग्मुषि तत्र निजाश्रमं तव समीपमुपेतुमना वने ।
स जगृहे बलिभिर्नरतस्करैः क सुखमस्ति विधौ विमुखेऽथवा ? ॥२१३॥

तत्र तस्मिन् जटिनि निजाश्रमं जग्मुषि गते सति तव अमरदत्तस्य समीपम्, उपेतुमनाः आजिगमिषुः स मित्रमुत्, वने, बलिभिः स्वापेक्षयाऽधिकबलशालिभिः, नरतस्करैः मनुष्यापहारकैः तस्करैः जगृहे वशीकृतः, इयमनर्थपरम्परा भाग्यनिमित्तमित्याह-अथवा, विधौ भाग्ये "विधिर्विधाने दैवे च" इत्यमरः। विमुखे प्रतिकूले सति क सुखमस्ति ? न क्वापि कल्याणमित्यर्थः ॥२१३॥

તે તાપસ પોતાને આશ્રમ ગયે છતે તે મિત્રમુદ પણ તમારી પાસે આવવાની ઇચ્છાવાળો છતો વનમાં બલવાન એવા પુરુષને ચોરાવનારાઓથી પકડી લેવાયો જો ભાગ્ય ઉંધું હોય તો ક્યાં સુખ મળે ! ન મળે. ॥૨૧૩॥

स विभवग्रहणेन समर्पितोऽभ्युपगतो बहुनौपरिचारिभिः ।
सरसपारसकूलयियासया क्रमश उज्जयिनीमगुरेव ते ॥२१४॥

स मित्रमुत्, विभवस्य तन्मूल्यरूपद्रविणस्य ग्रहणेन करणेन समर्पितः नरतस्करैर्दत्तः विक्रीतः सन् बहुभिरनेकैः नावः परिचारिभिः नियामकैरित्यर्थः। अभ्युपगतः स्वीकृतः, स्वाधिनीकृत इतियावत्। तथा ते नियामकाः, क्रमशः अनुक्रमेण "अनुक्रमः क्रमः" इति हैमः। सरसे रसेन जलेन सहिते रसवति वा पारसकूलाख्यदेशे, यियासया गन्तुमिच्छया उज्जयिनीं तदाख्यनगरीमेव अगुः गतवन्तः ॥२१४॥

તે ધન લઈને સોંપી દેવાયો ને ઘણા વહાણમાં પરિચારકોએ તેને લઈ લીધો, તેઓ સમુદ્રના કાંઠે જવાની ઇચ્છાથી ક્રમે કરી ઉજ્જયિની પહોંચ્યા. ॥૨૧૪॥

भृशमुपद्रवजातमवापिता, प्रबलचौरगणेन तदा पुरी ।
स्वयमिलाऽधिपतेर्विनियोगतो, भ्रमति दुर्गपतिश्च मणीविधौ ॥२१५॥

तदा मित्रमुत् सहितानां नियामकानामुज्जयिन्यामुपस्थितिकाले, पुरी उज्जयिनीनगरी, प्रबलेन दुर्निग्रहेण चौरगणेन भृशं अत्यन्तं उपद्रवजातमनेकविधोपद्रवमवापिता, आसीदिति शेषः। अतः, इलाधिपतेः नृपस्य विनियोगान्निदेशात्, दुर्गपतिः दुर्गाध्यक्षः, स्वयमेव, आरक्षकैश्चौरनिग्रहार्थमभ्रमदिति भावः। भ्रमणीविधौ रक्षणार्थं पुरपर्यटनकर्मणि, भ्रमति स्मेतिशेषः ॥२१५॥

તે સમયે નગરમાં બળવાન ચોરો ઘણોજ ઉપદ્રવ કરતા હતા, રાજાની આજ્ઞાથી દુર્ગપતિ પોતે જ વસ્તીમાં ભમતો હતો. ॥૨૧૫॥

स कथमप्यपसृत्य पलायितः, समभिवञ्च्य विलोककरक्षकान् ।
वरणमध्यगवार्गमनाध्वना पुरि विशन् ददृशे पुररक्षकैः ॥२१६॥

स मित्रमुत्, कथमपि कयाऽपि युक्त्या, विलोककान् मा पलायिष्टेत्येवं नियुक्तान् रक्षकान् समभिवञ्च्य छलयित्वा, अपसृत्य तन्मध्यतो बहिरागत्य पलायितः, वरणस्य प्राकारस्य मध्यगः मध्ये स्थितस्य वारो जलस्य "अम्बु वाः" इति हैमः । गमनस्य निःसरणस्याध्वा मार्गस्तेन प्रणाल्या पुरि नगरे प्रविशन् पुररक्षकैः ददृशे दृष्टः ॥२१६॥

તે મિત્રમુદ દેખરેખ રાખનારા રક્ષકોને છેતરીને કોઈ પણ રીતે ત્યાંથી ખસીને ભાગ્યો ને કોટના વચ્ચેથી જતા પાણી નીકળવાના માર્ગે (ખાળમાર્ગે) નગરમાં પ્રવેશ કરતો નગરરક્ષકોએ જોઈ લીધો. ॥૨૧૬॥

निशि मलिम्लुचविभ्रमतो धृतो, निबिडशृङ्खलया विनियन्त्रितः ।
दिनकरेऽभ्युदिते पुररक्षितुः, सरभसं त्वविमृश्य समर्पितः ॥२१७॥

निशि रात्रौ, मलिम्लुचः चौर इत्येवं विभ्रमतः भ्रान्तेः, तस्य चौराभावादितिभावः । धृतः गृहीतः, निबिडया दृढया शृङ्खलया, विनियन्त्रितः बद्धः, यथा मा पलायिष्टेतिभावः । दिनकरे सूर्ये अभ्युदिते उदयं गते सति अविमृश्य तु अयं चौरो नवेत्येवं विचार्यैव, अत एव, सरभसं सहसा, पुररक्षितुः समर्पितः ॥२१७॥

રાતમાં ચોર ભ્રમથી પકડાયેલો ને મજબૂત સાંકળથી બંધાયેલો સૂર્યોદય થયે છતે વિચાર્યા વગર ઉતાવળથી દુર્ગપતિને સોપી દેવાયો. ॥૨૧૭॥

स तदवेक्षणतः कुपितोऽधिकं, वटतरावुदलम्बयदाशु तम् ।
यदुपकण्ठमधिश्रितयोस्तदा, स भवतोः किलतोरवदच्छवः ॥२१८॥

स पुररक्षिता, तस्य चौरप्रत्ययविषयस्य मित्रमुदः अवेक्षणतः, अधिकं कुपितः पूर्वापेक्षयाऽपि विवृद्धतरकोपः, दृष्टे ह्यपराधिनि कोपे नितरां विवर्धते इति भावः । तम् मित्रमुदमाशु शीघ्रमेव शिप्रानदीतटे वटतरौ उदलम्बयत् अधोमुखमुपरिचरणं लम्बयति स्म, तदा पूर्वं बाल्ये यस्य वटतरोरुपकण्ठं समीपमधिश्रितयोः स्थितयोः किलतोः क्रीडतोः भवतोः अमरदत्तमित्रमुदोः स शवः मृतकः अवदत् कथयति स्मेति पूर्ववृत्तस्मारणम् ॥२१८॥

તેને જોવા માત્રથી અત્યંત કુપિત થયેલો કોટવાલ તેને વડના ઝાડમાં લટકાવી દીધો જેના પાસે ત્યારે આપ બંન્ને રમતા હતા તે શબ બોલ્યું હતું. ॥૨૧૮॥

विदधतामथ तत्र च खेलनं, ललितयौवनमोपवनद्रुवाम् ।
उपरिभागमिते वटुदन्त्रिका, प्रविशति स्म भवत्सुहृदानने ॥२१९॥

अथ च तत्र वटतरौ ललितयौवनानां मनोहरतारुण्यानां गोपतनूभवाम् गोपपुत्राणां खेलनं विदधतां कुर्वतां सतां तेषामुदञ्चिका क्रीडा साधनमुन्नतिका आन्दोलिकापराख्या उपरिभागम् ऊर्ध्व-मुखताम् इते गते भवतः सुहृदः आनने मुखे प्रविशति स्म ॥२१९॥

त्या मनोहर युवान बे गोवाळीआओ रमत रमता हता तेनी गोटी उछळीने उपर लटकावेला तमारा मित्रना मोढामा पेसी गई. ॥२१९॥

अवश्यंभाविभावानां प्रतिकारो न विद्यते इत्याह—

त्रिदिवलोकमुपैतु रसातलं, विशतु वा यदि वा भजतां नभः ।
फलमुपैति पुमानविशङ्कितं, स्वविहितानुगुणं हि परं स्वयम् ॥२२०॥

पुमान् नरः, उपलक्षणत्वात्प्राणिमात्रम्, त्रिदिवलोकम् देवलोकम्, उपैतु, वाऽथवा, रसातलं पातालं विशतु, यदि वा नभः आकाशं भजताम्, परं हि, स्वयम् यत्नं विनैव, स्वेन विहितस्यैव कर्मणः अनुगुणम् अनुरूपम्, फलम् अविशङ्कितम् असंशयमुपैति, त्रिष्वपि लोकेषु न कुत्राऽपि स्वविहित-कर्मफलभोगात्त्राणमितिभावः ॥२२०॥

स्वर्गमां जाय के पातालमां प्रवेश करे, अथवा आकाशमां सद्धर रहे पण लोको पोते करेला कर्मना अनुसारे नक्की फळ भोगवे ज छे. ॥२२०॥

यतिपतेरितिमित्रसुदुर्मृतेः, समुपलभ्य कथां नरपुङ्गवः ।
गुणगणं गणनाऽतिगतं स्मरन्, सदयितः परिदेवनमाश्रित ॥२२१॥

यतिपतेः धर्मघोषसूरेः मित्रस्य सुदुर्मृतेः अत्यन्तानिष्टरीत्या मृतेः इति पूर्वोक्तप्रकारां कथां समुपलभ्य विज्ञाय, गणानां सङ्ख्यामतिगतमतिक्रान्तम्, अगण्यमितियावत्, गुणगणं स्मरन् अर्थान्मित्रस्यैवेतिबोध्यम्। नरपुङ्गवः अमरदत्तनृपः सदयितः सभार्यः परिदेवनं शोकमाश्रित प्राप्तः ॥२२१॥

मुनीश्वर पासेथी पोताना मित्रनी अपमृत्युनी वात जाणी राजा पत्नी साथे तेना असंख्य गुण-समूहोने संभारतो विलाप करवा लाग्यो. ॥२२१॥

गुरुरपि प्रसरद्वचनामृतैः शुगुपतापमपाकृतवांस्तयोः ।
प्रियवयस्यवियोगनिदाघजं, घनजिनागमसङ्गमसंभृतैः ॥२२२॥

गुरुः धर्मघोषसूरिरपि, घनो मेघरूपो यो जिनागमः प्रवचनं तस्य सङ्गमेन परिचयेनाभ्यासेनेति यावत्। संभृतैः निष्पन्नैः प्रसरन्ति वचनानि देशना एवामृतानि तैः कृत्वा, प्रियस्य वयस्यस्य मित्रस्य वियोग एव निदाघो ग्रीष्मर्तुः तज्जम्, तयोः नृपतद्दयितयोः शुक् शोक एवोपतापः तापः तमपाकृतवान् शमयति स्म ॥ रूपकालङ्कारः ॥२२२॥

त्यारे गुरुओ पण वादळा रूपी जैनागमना संबंधथी संपूर्ण एवा विस्तृत वचनरूपी अमृतोथी ने बनेला प्रिय मित्रना वियोगरूपी ग्रीष्म ऋतुथी थयेला शोक रूपी संतापने दूर कर्यो. ॥२२२॥

असुमतः सुहृदोऽथ महीभुजा, गतिमपृच्छयत सद्गुरुशेखरः ।
स पुनराह तदा शुभभावनः, स उदभून्नृवतो दयितोदरे ॥२२३॥

अथ, महीभुजा, सद्गुरूणां शेखरः मूर्धन्यः धर्मघोषसूरिः सुहृदः मित्रस्य, असुमतः जीवस्य गतिम् परलोकप्राप्तिम् । अपृच्छयत पृष्टः । स सूरिः, तदा, पुनराह-शुभभावनः शुभध्यानपरायणः स मित्रभुत्, भवतः दयितायाः भार्यायाः उदरे गर्भे उदभूत् पुत्रत्वेन उत्पन्नोऽस्ति ॥२२३॥

પછી રાજાએ મુનિને મિત્રના જીવની ગતિ પૂછી, ત્યારે ગુરુ ફરી બોલ્યા કે શુભભાવના વાળો તે તમારી પત્નીના ઉદરમાં ઉત્પન્ન થયો છે. ॥૨૨૩॥

कमलगुप्त इति प्रथिताभिधः, स भविता भवतस्तनयः परम् ।
अथ धराधिपतिः स्ववयस्ययोरपि च पूर्वभवौ परिपृष्टवान् ॥२२४॥

परम् किञ्च, स भवद्दयितागर्भस्थो मित्रभुजजीवः, कमलगुप्त इति प्रथिताभिधः ख्यातनामा भवतः तनयः भविता । अथ पुनश्च धराधिपतिरमरदत्तनृपः, स्वस्य वयस्यस्य मित्रस्य मित्रभुवश्च तयोः पूर्वभवौ परिपृष्टवान् ॥२२४॥

તે કમલગુપ્ત નામે અત્યંત પ્રસિદ્ધ એવો તમારો પુત્ર થશે પછી રાજા પોતાના ને મિત્રના પૂર્વભવો પણ પૂછ્યા. ॥૨૨૪॥

सूरिः प्राह, किमित्याह—

सूरिः प्राह पुरे क्वचित् समजनि क्षेमङ्करोऽपि द्विधा,
सत्यश्रीरिति गेहिनी कुमुदिनी चेन्दोरमुष्याभवत् ।
ख्यातः कर्मकरस्तयोः स चतुरः सचण्डसेनाभिधः,
क्षेत्रं रक्षति खाद्यमानमभितः पक्षिव्रजैः सोऽन्यदा ॥२२५॥

कस्मिंश्चित्पुरे, द्विधा नाम्नो योगार्थेन चापि क्षेमङ्करः क्षेमङ्करनामा क्षेमं लोकानां कल्याणं करोतीत्येवंशीलश्च कौटुम्बिकः, समजनि, अमुष्य क्षेमङ्करस्य गेहिनी भार्या इन्दोश्चन्द्रस्य कुमुदिनीव, सत्यश्रीरिति नाम्नी अभवत् । तयोर्दम्पत्योः स प्रसिद्धः सचण्डसेनाभिधः चण्डसेनेत्यन्वर्थनामा कर्मकरः किङ्करः ख्यातः स चतुरः कर्मसुदक्षः चण्डसेनः अन्यदा, पक्षिव्रजैः खाद्यमानं क्षेत्रमभितः रक्षति, स्मेतिशेषः ॥२२५॥

મુનિ બોલ્યા કે પહેલા સમયમાં કોઈક નગરમાં નામને ક્રિયાથી પણ ક્ષેમંકર નામે કોઈ રહેતો હતો, ચંદ્રમાને કુમુદિનીની જેમ તેની સત્યશ્રી નામે પત્ની હતી. તે બન્નેનો ચંડસેન નામનો ચતુર નોકર હતો, તે એક દિવસ પક્ષિઓએ ખાધ જતા ખેતરની રખેવાલી કરતો હતો. ॥૨૨૫॥

स्वत्क्षेत्रनिष्ठा नवबीजकोशिकाः, स्वक्षेत्रपार्श्वे समवेक्ष्य कश्चन ।
लान्तं स्वयं कर्पटिकं स चाह भोः ! उन्मूल्यतां दस्युरयं वयस्यकाः ? ॥२२६॥

त्वत्क्षेत्रनिष्ठास्त्वत्क्षेत्रस्थिताः त्वत्क्षेत्रेण सह सम्बन्धाः नवाः बीजकोशिकाः स्वक्षेत्रपार्श्वे परक्षेत्रे स्वयं क्रान्तं, कञ्चन कार्पटिकम् जीर्णवस्त्रधारिणं समवेक्ष्य, च पूर्वोक्तरक्षणसमुदायकः। स चण्डसेनः आह-किमित्याह-भो वयस्यकाः ! सुहृदः ! अयं बीजकोशिकाहर्ता दस्युश्चोरः, अत एव उल्लम्ब्यताम्, ऊर्ध्वं लम्ब्यताम् ॥२२६॥

क्व लम्ब्यतामित्याकाङ्क्षानिवृत्तये आह—

शाखामूले शाखिनोऽस्मिन्विशाले, श्रुत्वा चैतद्दुःश्रवं वाक्यमेषः ।
चित्ते दूनः केवलं नास्य किञ्चित्, कारुण्येन क्षेत्रनाथेन क्लृप्तम् ॥२२७॥

शाखिनः पुरोदृश्यमानस्य वृक्षस्य, विशाले अस्मिन् शाखामूले, उल्लम्ब्यतामित्यनुकृष्य सम्बन्धः। दुःश्रवं कर्णपीडाजनकमेतद्वाक्यं श्रुत्वा च एष कार्पटिकः केवलं चित्ते दूनः खेदं प्राप्तः, नतु उल्लम्बन-जन्यदुःखम्, कुत इत्याह-क्षेत्रस्य नाथेन परक्षेत्राधिपेन, कारुण्येन दयया हेतुना अस्य कार्पटिकस्य किञ्चित् उल्लम्बनादिकं न क्लृप्तम् कृतम्, सत्यप्यपराधे दयावाञ्चान्यं पीडयतीति भावः ॥२२७॥

ત્યારે તમારા ખેતરમાં રહેલા બીજના ડુંડાઓને પોતાના ખેતર પાસે પોતે લઈ જતા કોઈ ચીંથરે હાલ માણસને જોઈ બોલ્યા કે હે મિત્રો આ ચોર છે. આને આ વિશાલ ઝાડની ડાલીના મૂલમાં લટકાવી દો. તે કાનને પીડા આપે એવી વાત સાંભળીને મનમાં અત્યન્ત ખેદ પામ્યો, ખેતરના માલિકે દયાને વશ આને કાંઈ કર્યું નહિ. ॥૨૨૬–૨૨૭॥

सन्ध्याकाले चण्डसेनोऽपि चण्डः, संवेशाय स्वामिवेश्माऽऽजगाम ।
युक्तं चैतत् कर्मनिर्माय घस्रे, नक्तं सेवा स्वामिनः किङ्कराणाम् ॥२२८॥

घस्रे दिने "घस्रो दिनाहनी"इत्यमरः। कर्म कार्यं निर्माय सम्पाद्य, सन्ध्याकाले चण्डः अतिक्रोधी "चण्डस्त्वत्यन्तकोपनः" इति हैमः। अपि चण्डसेनः, संवेशार्थम् शयनार्थम् "स्यान्निद्राशयनं स्वापः स्वप्नः संवेश इत्यपि"त्यमरः। स्वामिनः वेश्म गृहमाजगाम। ननु क्षेत्ररक्षणत्यागाऽनुचित इति चेत् तदाह—युक्तश्चैतत्तस्य गृहागमनम्, तत्र हेतुमाह—किङ्कराणाम् स्वामिनः सेवा भक्तिभावः नक्तं रजनौ 'दोषा च नक्तञ्च रजनी'इत्यमरः ॥१२८॥

સાંજે ઉગ્ર એવો ચંડસેન પણ સૂવા સારૂ સ્વામીના ઘરે ગયો. આ ઉચિત પણ છે કે દિવસે કામ કામ કરી નોકરોએ રાત્રે સ્વામીની સેવા કરવી. ॥૨૨૮॥

तदाऽश्नत्या बध्वा विपुलकवले लग्नमचले,
गलं वीक्ष्य क्षेमङ्करदयितयाऽवाचि कटुकम् ।
अरे ! रक्षःकान्ता त्वमसि किमलं स्थूलकवलै-
र्यदेवं भुङ्क्षे चेति परिगदिते साऽश्रममजत् ॥२२९॥

तदा तदवसरे, अश्नत्याः भुञ्जानायाः वध्वाः चण्डसेनस्त्रियाः, अचले स्थिरे विपुले विशाले

कवके ग्रासे, कवलस्य महत्त्वात्तद्गले स्थिरं आसं न तु गलबिलाधः इत्यतः ग्रासे गृहीते कवलस्य महत्त्वाद् गलबिलाधो गमनाभावात् गलं लग्नं वीक्ष्य क्षेमङ्करदयितया अत्यश्रिया कटुकवचनमवादि, किन्तदित्यपेक्षायामाह—अरे ! भर्त्सने सम्बोधनमिदम् । त्वं रक्षःकान्ता राक्षसभार्या असि किम् ? यदेवं स्थूलकवलैरलं भुङ्क्षे, नहि मनुष्यभार्या एवं स्थूलकवलैर्भुङ्क्ते इतिभावः । इति च परिगदिते कथिते सा दुःखं अभजत् प्राप्तवती ॥२२९॥

त्यारे ખાતી વહુના મોટા કોળિયા ગળામાં અટકી ગયેલો જોઈ ક્ષેમંકરની પત્નીએ કટુ વચન બોલી કે અરે તું રાક્ષસની છે. આટલા મોટા કોળીયા ગમે તેમ ખાય છે એમ કહી છતે પણ તે ખાવા લાગી. ॥૨૨૯॥

अप्राक्षीच्चण्डसेनोऽप्यवसरमधिगम्यैकदा स्वामिनं स्वं,
सस्नेहं बन्धुवर्गं मिलितुमपि ! विभो ! याम्यहं त्वन्निदेशात् ।
तेन प्रोचे रुषं वा विरतममिलनिर्बन्धुवर्गेण तेऽस्तु,
श्रुत्वा चैतत् स्वचित्ते पृथुतरमसुखं धारयामास सोऽपि ॥२३०॥

एकदा चण्डसेनः अपि अवसरमधिगम्य प्राप्य स्वं स्वामिनं क्षेमङ्करमप्राक्षीत्, किमित्याह—अयि ! विभो ! त्वन्निदेशात् त्वदाज्ञातः अहं चण्डसेनः सस्नेहं स्वामिन् प्रीतिमन्तम्, बन्धुवर्गं स्वजनं मिलितुं यामि, तेन क्षेमङ्करेण रुषा क्रोधपूर्वकं प्रोचे. किमित्याह–अविरतं सततमेव ते तव बन्धुवर्गेण अमिलनिःसङ्गमाभावः अस्तु । नञोऽनिः शापे, ५।३।१२७। इति सूत्रेण नञ्पूर्वकान्मिल् धातोरनिः प्रत्ययः । न कदापि त्वं बन्धुवर्गं मिलितुमर्हसीति शापवचनम् । एतदुक्तं श्रुत्वा च स चण्डसेनः स्वचित्ते पृथुतरमत्यन्तमसुखं दुःखं धारयामास । इष्टनिषेधः दुःखायैव भवतीतिभावः ॥२३०॥

એક દિવસ ચંડસેન પણ અવસર મેળવીને પોતાના માલિકને પૂછ્યું કે હે માલિક તમારી આજ્ઞાથી પોતાના પ્રિય ભાઈબંધ ને મળવા જઉછ. ત્યારે જેણે ક્રોધથી કીધું કે તમને ભાઈબંધ સાથે કદી મિલન થાય નહિ. તે સાંભળીને તે પણ પોતાના મનમાં ઘણું જ દુઃખ પામ્યો. ॥૨૩૦॥

शुद्धान्नं मुनये नयेन ददतौ तावेकदाऽऽलोकितौ,
धन्यावित्यनुमोदनां विदधता दासेन तेनाधिकम् ।
याते तत्र मुनीश्वरे निजपदं तेषां त्रयाणामुप-
र्यैवापप्तदनित्यतामुपदिशत् सौदामिनीदाम तत् ॥२३१॥

एकदा मुनये नयेन नीतिपूर्वकम् यथाविधीति यावत् शुद्धं निर्दुष्टमन्नं ददतौ तौ जायापती धन्यावित्येवं क्षेमङ्करौ मुनये शुद्धाऽन्नदानात् प्रशंसार्हावित्येवम् अधिकं अतिशयमनुमोदनां विदधता तेन दासेन चण्डसेनेन, आलोकितौ दृष्टौ । एतेन तत्र शुभध्यानसत्त्वं सूचितम् । तत्र मुनीश्वरे निजपदं स्वाश्रयं याते प्राप्ते सति त्रयाणामेषामुपरि अनित्यतां पदार्थानां क्षणभङ्गुरत्वमुपदिशदिव, गम्यमानोत्प्रेक्षा, अचेतनस्योपदेशायोगादिति बोध्यम् तत् प्रसिद्धं सौदामिन्या विद्युतो दाम माला अपप्तत् पतिता ॥२३१॥

એક દિવસ તે બન્નેને નીતિપૂર્વક શુદ્ધ અન્ન મુનિને આપતા જોઈ તે નોકરે ( આ બન્ને ધન્ય છે) એમ અતિશય અનુમોદના કરી. તે મુનીશ્વર પોતાના સ્થાને ગયે છતે તે ત્રણેના ઉપર જ અનિત્યતાનો ઉપદેશ હોય તેમ વિજળી પડી. ॥૨૩૧॥

ते मृत्युं समवाप्य पुण्यवशतो देवास्ततो जज्ञिरे,
सौधर्मेऽप्युपभुज्य भोगमसमं तेऽपि त्रयोऽपि च्युताः ।
सत्यश्रीर्दयिता तवेयमभवद्वध्वां च दुर्वाक्यतो–
मारित्वेन कलङ्किता नरपते ! क्षेमंकरात्मा भवान् ॥२३२॥

ततः विद्युत्पतनानन्तरम्, ते स्वामिनः सत्यश्रीक्षेमङ्करचण्डसेनाः दासश्च, मृत्युं समवाप्य पुण्यवशतः पूर्वश्लोकोक्तपुण्यप्रभावात्, सौधर्मे कल्पे देवा जज्ञिरे जाताः, असममनुपमं भोगं सुखम् । अत्रैकोऽपिश्चार्थे, द्वितीयः पादपूर्णे, उपभुज्य भुक्त्वा, ते त्रयोऽपि च्युताः, तत्र सत्यश्रीः, तवेयं दृश्यमाना दयिता मणिमञ्जरी अभवत्, जाता। वध्वां चण्डसेनभार्याविषये, दुर्वाक्यतः कटुशब्दप्रयोगप्रभावात्, मारित्वेनेयं मारीत्येवं कलङ्किता कलङ्कं प्राप्ता, नरपते ! भवान् क्षेमङ्करात्मा क्षेमङ्करजीवः ॥२३२॥

તેઓ મૃત્યુ પામી પછી પુણ્યના પ્રભાવે સૌધર્મકલ્પમાં દેવો થયા. ત્યાં અનુપમ ભોગ ભોગવી ત્યાંથી ત્રણે આવીને સત્યશ્રી આ તમારી પત્ની થઈ તે વધૂ વિષે દુર્વાક્યો બોલવાથી મારી તરીકે કલંક પામી હે રાજા ક્ષેમંકરનો જીવ આપ છો. ॥૨૩૨॥

दासं प्रत्युदितं विरुद्धवचनं यत्तेन ते बन्धुभि–
र्जातोऽयं विरहः सखा च समभूच्चण्डस्य जीवस्तव ।
यच्चं कार्पटिकं प्रतीरितमसच्चेनायमुल्लम्बितः,
शाखायां वटशाखिनो नहि गिरा कार्याः कषायास्ततः ॥२३३॥

चण्डस्य चण्डसेनस्य जीवश्च तव सखा मित्रं मित्रमुत समभूत्, दासं प्रति विरुद्धमनुचितं वचनं यद्यस्मादुदितं कथितं तेन हेतुना ते अमरदत्ताख्यस्य तव बन्धुभिः स्वजनैरनुभूयमानो विरहः जातः। तं कार्पटिकम् यद्यस्मादसत् कटु ईरितं कथितं तेन हेतुना अयं मित्रमुत, वटशाखिनः वटवृक्षस्य शाखायामुल्लम्बितः। ततः एतादृशं फलमवलोक्य, गिरा वचनेन कषायाः कटुफला न नैव कार्याः ॥२३३॥

નોકર પ્રત્યે વિપરીત વચન ઉચ્ચાર્યો તેથી તમને બંધુની સાથે આ વિયોગ થયો છે. ને ચંડસેનનો જીવ તમારો મિત્ર થયો છો. જે તે ભીખારી દાસ માણસ પ્રત્યે ખોટું બોલ્યોને ખોટું કર્યું તેથી વડના ઝાડની ડાલીમાં લટકાવીયો તેથી વાણીથી કોઈ પણ કષાય કરવો જોઈએ નહિ. ॥૨૩૩॥

स्मृत्वा पूर्वभवं निजं गुरुमुखात्तौ दम्पती आहता–
मङ्गीकृत्य गुरुं स्म पृच्छत इदं किं भाषते वा भवः ? ।

मृत्वा कार्पटिकः क्रमादुदभवत् स व्यन्तरेष्वल्पधीः
प्राग्वैरात् स शवान्तिकस्थितिरवाचैवं गुरुः प्राह सः ॥२३४॥

गुरुमुखात् निजं पूर्वभवं श्रुत्वा, प्राप्तां श्रावकत्वमङ्गीकृत्य तौ दंपती मणिमञ्जर्यमरदत्तौ, गुरुम् प्रतीदं पृच्छतः स्म, इदं किमित्याह—शवः, काकारोऽप्यर्थः, अमात्यार्थो वा, भाषते किमिति प्रश्ने । स गुरुः धर्मघोषसूरिरेवं प्राह–किमेवमित्याह—अल्पधीः मूर्खः स पूर्वोक्तः कार्पटिकः मृत्वा क्रमात् व्यन्तरेषु उदभवत् जातः, शवान्तिके स्थितिर्यस्य स शवसमीपस्थः वटस्य इत्यर्थः, स व्यन्तरः शवस्यास्येऽवतीर्य प्राग्वैरात् पूर्वकार्पटिकभवजातवैराद् हेतोः अवाच, न तु शवः, तस्य वचनासामर्थ्यादितिभावः ॥२३४॥

ગુરુમુખે પોતાનો પૂર્વભવ સાંભળીને જાતિસ્મરણ પામી તે બન્ને પતિપત્ની શ્રાવકધર્મનો અંગીકાર કર્યો, ને ગુરુને પૂછ્યું કે શવ કેમ બોલે ? ત્યારે ગુરુ બોલ્યો કે તે મંદમતિ તે ચીથરે હાલ માણસ મરીને ક્રમે કરીને વ્યન્તરમાં ઉત્પન્ન થયો ને તે પૂર્વભવના વૈરથી શવની પાસે રહેવા વાળો હોઈ આમ બોલ્યો હતો. ॥૨૩૪॥

श्रुत्वैवं सुगुरुं प्रणम्य भवनं जग्मुर्नृपाद्याः क्रमा-
द्देवी सूनुमसूत सूरिगदितं ताभ्यां च नामादधे ।
पुत्रस्यास्य च पद्मगुप्त इति सोऽप्यासाद्य संवर्धनं,
धात्र्यङ्कं सकलाः कलाः परिकलय्यापत् क्रमाद्यौवनम् ॥२३५॥

नृपाद्याः एवमुक्तप्रकारं श्रुत्वा, सुगुरुं मुनिं प्रणम्य भवनं जग्मुः, क्रमाद् कालक्रमं प्राप्य, देवी मणिमञ्जरी, सूनुं पुत्रम्, असूत सुषुवे, ताभ्यां नृपदम्पतीभ्यां च, अस्य जातस्य पुत्रस्य 'पद्मगुप्त' इत्येवं कमलगुप्त इत्येवं सूरिगदितं सूरिणा पूर्वभववृत्तवर्णने कथितं नाम आदधे कृतम् । सः पद्मगुप्तोऽपि संवर्धनं लालनादिना वृद्धिपोषकं धात्र्याः अङ्कमासाद्य प्राप्य, सकलाः कलाः विद्याः परिकलय्याधिगम्य क्रमाद्यौवनमापत्, युवा अभवदित्यर्थः ॥२३५॥

આમ સાંભળી તે સુગુરુને પ્રણામ કરીને રાજા વગેરે બધા પોત પોતાના ઘરે ગયા, ક્રમે કરીને રાણી પુત્રને જન્મ આપ્યો, તે બન્ને ગુરુએ કહેલા પ્રમાણે તે પુત્રનું પદ્મગુપ્ત પણ ધાત્રીઓથી પોષણ પામી સઘલી કલાઓનું જ્ઞાન સંપાદન કરી ક્રમે કરીને યુવા અવસ્થાને પામ્યો. ॥૨૩૫॥

तस्मादेव गुरोः परेद्यविरयं वैराग्यवान् भूपती,
राज्ये न्यस्य सुतं तदा दयितया सार्द्धं तपस्यां ललौ ।
राजर्षिं गुरुरन्वशादपि तदा तं नित्यसौख्यार्थिना,
दीक्षा कल्पलता क्षमामृतरसैः पाल्या त्वयाऽविश्रमम् ॥२३६॥

परेद्यवि, अन्यदा, सुधीर्भूपतिः सुधिय एव वैराग्यसद्भाव इति साभिप्रायं विशेषणमिति भावः, वैराग्यवान्, अत एव, राज्ये सुतं न्यस्य स्थापयित्वा, तथा दयितया प्रियया मणिमञ्जर्या सार्धं, तस्माद्धर्मघोषादेव गुरोः सकाशात् तपस्यां परिव्रज्यां ललौ, "व्रतादानं परिव्रज्या तपस्या" इति हैमः। तथा गुरुरपि सं राजा चासौ ऋषि राजर्षिः तं गृहीतमुनिव्रतम् राजानमन्वशात्, उपदिदेश। किमित्याह—त्वया, नित्यसौख्यस्य मोक्षसुखस्यार्थिना सता, दीक्षा इष्टफलदत्वात्कल्पलता इव सा, शमाः अमृतरसा इव तैः अविश्रमं सततम् पाल्या। परेद्यवि सुधीरितिपाठः कल्पितः। विदुषां परेद्यविशब्दस्याव्ययत्वात्तत्र विसर्गालाभात्। तस्मान्मया विचारणीयमेतदिति दिक् ॥२३६॥

બીજા દિવસે તે રાજા વૈરાગ્ય પામી રાજપદે પુત્રને સ્થાપી તેજ ગુરુ ધર્મઘોષ મુનિ પાસે પત્નીની સાથે દીક્ષા લઈ લીધી. તથા ગુરુએ તે રાજર્ષિને ઉપદેશ આપ્યો. કે નિત્ય સુખ-મોક્ષાર્થી એવા તમારે શમરૂપી અમૃત રસથી હંમેશાં દીક્ષા રૂપી કલ્પલતાનું પાલન કરવું જોઈએ ॥૨૩૬॥

सर्वोपाधिविशुद्धमाप्य मनुजाः प्रायः कलादाद् गुरोः,
किञ्चिद्गन्धकगन्धसङ्गविषयैर्भूताभिचारोद्धतैः ।
देहालङ्कृतिमग्रिमं धनमिदं ये दूषयन्ति व्रत-
स्वर्णं तेऽनुभवन्त्यशं प्रतिभवं धर्मार्थयत्नक्षितेः ॥२३७॥

ये मनुजाः, कलादात्स्वर्णकाररूपाद् "स्वर्णकारः कलादः" इति हैमः, गुरोः सकाशात्, प्रायः बाहुल्येन, सर्वैः उपाधिभिः दोषैः विशुद्धम् निर्मलम्, सर्वोपाधिरहितमिति यावत् व्रतस्वर्णं व्रतरूपं स्वर्णमाप्य देहस्य शरीरस्य तत्स्थलत्वादुपचारादात्मनश्च अलङ्कृतये भूषणाय सन् उत्कृष्टः निधिराकरस्तद् इदं प्राप्तं व्रतस्वर्णरूपं धनम्, भूतानां प्राणिनाम् अभिचारे मारणादौ हिंसार्थकर्माऽऽभिचारः इति उद्धतैः उग्रैः, गन्धकस्य तदाख्यद्रव्यस्य गन्धस्य सङ्गरूपैः विषयैः वनितादिभिः, किञ्चिदीषदपि दूषयन्ति, गन्धकस्वर्णयोगेन कृता गुटिका मारणाद्यभिचारकर्मणि प्रयुज्यते तान्त्रिकैः, तथा व्रतं विषयाऽऽसङ्गात् प्राणिनामधःपाताय भवतीति भावः। ते मनुजाः धर्मार्थं यो यत्नः तस्य क्षितेः नाशात् व्रतनाशात् प्रतिभवं भवे भवे, अशमसुखमनुभवन्ति। रूपकम् ॥२३७॥

જે મનુષ્ય ઘણું કરીને સ્વર્ણકાર જેવા ગુરૂ પાસેથી સર્વમલથી શુદ્ધ એવા વ્રતરૂપી સુવર્ણનું ગ્રહણ કરી પ્રાણિઓની હિંસામાં ઉગ્ર એવા કંઈક ગંધકના સંબંધ જેવાં અનિત્ય એવા વિષયોથી દેહના અલંકાર જેવા આ ધનને દૂષિત કરે છે. ( ગંધકના સંગથી સોનું અશુદ્ધ થઈ જાય છે ) તેઓ ધર્મના કારણ એવા પ્રયાસોના નાશ થવાથી પ્રત્યેક ભવમાં અસાતાનો અનુભવ કરે છે—ભોગવે છે. ॥૨૩૭॥

अथ व्रतरक्षणदूषणयोर्दृष्टान्तमाह—

माकन्दीतनयावुभाविह परं साधर्म्यवैधर्म्यको,
दृष्टान्तौ तु यथाक्रमं शृणु मुने! मे शंसतस्त्वया।

चम्पा नाम पुरी कलिङ्गविषये तत्रास्ति धात्रीधवः,
प्रख्यातो जितशत्रुरित्यभिधया तद्वल्लभा धारिणी ॥२३८॥

मुने ! राजर्षे ! परन्तु किञ्च, इह प्रतविषये, उभौ माकन्दी तन्नामनरः तस्य तनयौ, साधर्म्य-वैधर्म्यकौ, साधर्म्येण वैधर्म्येण च, दृष्टान्तौ शंसतः कथयतः मे मम यथाक्रमं शृणु-तथयेति कथा-प्रस्तावे, कलिङ्गविषये तदाख्यदेशे चम्पानामपुरी । तत्र पुर्यां जितशत्रुरित्यभिधया नाम्ना प्रख्यातः धात्रीधवः नृपः अस्ति, तद्वल्लभा भार्या धारिणी तन्नाम्नी ॥२३८॥

અહિ કહેલા કથનના સાધર્મ્ય અનુકૂલને વૈધર્મ્ય પ્રતિકૂલ રૂપે માકંદીના બે પુત્રો. ક્રમથી ઉત્તમ ઉદાહરણ છે. તે હું કહું છું તે હે મુનિ ! તમે સાંભળો. જેમકે કલિંગ દેશમાં ચંપા નામે નગર હતું ત્યાં જિતશત્રુ નામે પ્રસિદ્ધ રાજા હતો ને ધારિણી નામની તેની પત્ની હતી. ॥૨૩૮॥

माकन्दीति महेभ्यमस्तकमणिस्तत्रास्ति माकन्दको,
भद्रा तद्दयितासुतावभवतां तत्कुक्षिजौ द्वौ परम् ।
नाम्नैको जिनपालितो व्यवसितिप्रारम्भबद्धोद्यमः,
प्रेक्षावान् जिनरक्षितस्तदपरः सौभाग्यभङ्गीनिधिः ॥२३९॥

तत्र चम्पापुर्याम् , महेभ्यानां मस्तकेषु मणिरिव महेभ्यशिरोमणिः 'माकन्दीनामं सत्थवाहे परिवसति' इति ज्ञातासूत्रोक्तो माकन्दीत्याख्यो माकन्दकः माकन्द आम्र इव मत्फलः तद्दयिता तस्य भार्या भद्रा तन्नाम्नी, माकन्दकस्तन्नामा माकन्दीत्येवम् ख्यातः अस्ति । तस्य माकन्दीत्याख्यसार्थवाहस्य दयिता भद्रा तन्नाम्नी, तस्याः कुक्षिजौ द्वौ परं श्रेष्ठौ सुतौ अभवताम् । एकः प्रथमः, नाम्ना जिन-पालितः, व्यवसितेः व्यवसायस्य गृहकार्यकलापस्य प्रारम्भे सम्पादने बद्धोद्यमः कृतश्रमः, गृहकार्यादि सम्पादक इति यावत्। ततो जिनपालितादपरः जिनरक्षितः तन्नामा प्रेक्षावान् ज्ञानवान् प्रेक्षोपलब्धि-श्चित्संविदि"त्यमरः । सौभाग्यस्य भङ्गयाः वैलक्षण्यस्य निधिराकरः, अस्तीतिशेषः ॥२३९॥

ત્યાં મોટા શેઠીઆમાં શિરોમણિ જેવો માકંદી નામે શેઠને ભદ્રાનામની તેની સ્ત્રી હતી. તે શેઠને સ્ત્રીના ગર્ભથી બે પુત્રો થયા, પહેલાનુ નામ જિનપાલિત તે વહેવાર પટામા જ ઉદ્યમવાળો હતો. ને તેનાથી બીજો નામે જિનરક્ષિત હતું તે કોઈ પણ કાર્યમાં પૂર્વાપર પરિણામ જોનારો ને અત્યંત સૌભાગ્યશાળી હતો. ॥૨૩૯॥

ताभ्यां व्यञ्जपि चान्यदा स्वजनकः सांयात्रिकत्वाय स,
प्रोचे नो मकराकरेऽपि गमनं कार्य्यं युवाभ्यां सुतौ ।
यात्रा वां च यदन्तरायविकला एकादशासन् पुरा,
प्रत्यूहेन युता भवेदियमहो ! वेला खलु द्वादशी ॥२४०॥

अन्यदा च, ताभ्यां जिनपालितजिनरक्षिताभ्यां स्वजनकः माकन्दकः, सांयात्रिकत्वाय पोत-

वणिकत्वाय, पोतवणिक्त्वाय, पोतवणिग्रूपेण यावो व्यवहारायेत्येवं व्यक्षपि निवेदितः । "सांयात्रिकः पोतवणिगि"त्यमरः । स माकन्दीकः प्रोचे, किमित्याह-सुतौ युवाभ्यां द्वाभ्यां मकराकरे समुद्रे, गमनमपि, किन्तु पुनः सांयात्रिकत्वमित्यपि नोच्यते, नो नहि कार्यम् । तत्र हेतुमाह-पुरा पूर्वं च वां युवयोः, यद्यस्मात् एकादशयात्राः अन्तरायविफला निर्विघ्ना आसन्, इयं खलु द्वादशीवेला द्वादशयात्रापि द्वादशी यात्राप्रत्यूहेन विघ्नेन युता सोपसर्गा भवेद्, अहो इति खेदे, ततो न गमनमिति ॥२४०॥

એક દિવસે તે બન્નેએ પોતાના પિતાને વહાણથી વ્યપાર કરવાની આજ્ઞા મેલવવા માટે જણાવ્યું. ત્યારે પિતાએ કીધું કે હે પુત્રો તમો બન્નેએ ( મગરનો ખાણ ) રૂપી સમુદ્રમાં યાત્રા કરવી નહિ. પહેલા તમારા બન્નેની અગીયાર યાત્રાએ અન્તરાય થવાથી નીષ્ફલ ગઈ હતી. અરે તો આ બારમી વેલાની યાત્રા પણ વિઘ્નવાલી થશે ॥૨૪૦॥

धनस्य पर्याप्तत्वात्तदर्थमपि प्राणसंकटकरं गमनं न युक्तमित्याह—

संख्यातीतमुपार्जितं च बहुलं तावद्भवद्भ्यां धनं,
तद्दत्तं च यदृच्छया विलसतं मत्सन्निधौ तिष्ठतम् ।
तौ तेनेति निषिध्यमानगमनौ वारांनिधौ प्रस्थिता-
वारुह्यार्थसमीहया प्रवहणं लोभो बलीयान् यतः ॥२४१॥

भवद्भ्यां, तावदिति वाक्यालङ्कारे, सङ्ख्यातीतमसङ्ख्यं बहुलं बहुविधम् धनम् उपार्जितं दत्तमर्पितं याचकेभ्यः इति शेषः तत्तस्मात् अधिकस्य प्रयोजनाभावात्, मत्सन्निधौ तिष्ठतम्, यदृच्छया स्वैरितया विलसतम्, उपार्जितस्य दानभोगौ अधुना कर्तव्यौ । तेन पित्रा इत्येवं निषिध्यमानगमनावपि तौ द्वौ भ्रातरौ अर्थस्य धनस्य समीहया इच्छया, प्रवहणं पोतमारुह्य, वारांनिधौ समुद्रे प्रस्थितौ, ननु पितुर्निषेधेऽपि कथं प्रस्थिताविति चेत्तत्राह-यतः लोभो बलीयान्, लोभाभिभूतो हि निषिद्धमप्याचरतीतिभावः ॥२४१॥

અને બીજુ તમો બન્નેએ નાના પ્રકારનું અસંખ્ય ધન ઉપાર્જન કરી ચૂકયા છો તે તમોને આપ્યું પોતાની ઈચ્છા પ્રમાણે ભોગવો ને મારી પાસે જ રહો તેનાથી આ પ્રમાણે યાત્રાનો નિષેધ કરાતા છતાં તે બન્ને ધનની ઈચ્છાથી વહાણ ઉપર ચઢી સમુદ્ર યાત્રા માટે પ્રસ્થાન કરી દીધું કેમકે લોભ મોટો બળવાન હોય છે. ॥૨૪૧॥

वार्द्धेर्मध्यमधिश्रिते प्रवहणे कैश्चिद्दिनैर्दुर्दिनं,
संवृत्तं वियति स्थिरागमनयोरैक्याय वातो ववौ ।
पोतो वीचिभिराहतः क्षितिभृता संस्फाल्य विस्फोटितो,
रत्नदीपमवापतुश्च फलकं संप्राप्य तौ यत्नतः ॥२४२॥

प्रवहणे पोते कैश्चिद् दिनैः वार्धेः समुद्रस्य मध्यम् अधिश्रिते प्राप्ते सति वियति आकाशे, दुर्दिनं मेघजं तमः संवृत्तम् "दुर्दिनं मेघजं तमः" इति हैमः । वातः महावातः, स्थिरागमनयोः

यावा पृथिव्योः ऐक्यापादनेच्छया, ववौ वाति स्म, महावातः ताहग्वेगेन ववौ, येन रोदस्योरन्तरं विलय-स्थलं जातमित्यर्थः । "रोदसी द्यावापृथिव्यौ" इत्यमरः । वीचिभिस्तरङ्गैः, आहत:- पोतः विविधया पवनेन सम्प्रात्य वेगेनाघातं प्रापय्य विस्फोटितः खण्डितः, तौ जिनपालितजिनरक्षितौ च, फलकं काष्ठखण्डम् सम्प्राप्य, यत्नतः महता प्रयासेन, रत्नद्वीपम्, अवापतुः ॥२४२॥

કેટલાક દિવસે જ્યારે વહાણ સમુદ્રની વચ્ચે પહોંચ્યું ત્યારે વાદળથી આકાશ ઢંકાઈ ગયું. ને આકાશમાં જાણે પૃથ્વીને આકાશ એક કરી દેવા માંગતા હોય તેમ પવન જોરથી ફુંકાવા માંડ્યો ને વહાણ તરંગોથી આઘાત પામી પામીને પહાડ સાથે અફડાઈને તૂટી ગયું. તે બન્ને કોઈ ફલક પકડી મહાકષ્ટથી રત્નદ્વીપ પહોંચ્યા. ॥૨૪૨॥

यावत्कृत्वाऽऽत्मवृत्तिं मधुमधुरफलैः सोदरौ तत्र तौ स्तो,
रत्नद्वीपाधिपाऽऽगात्सरभसममरी तावदाकृष्य खड्गम् ।
सौख्यं सार्द्धं मया वां विषयजमसमं मानयेथां समानौ,
नो चेच्छेत्स्याम्यहं वां कमलवदिमकं मण्डलाग्रेण मौलिम् ॥२४३॥

तत्र रत्नद्वीपे, तौ सोदरौ भ्रातरौ जिनपालित-जिनरक्षितौ मधुवत् मधुभिरिव मधुरैः फलैः नारिकेरैः करणैः, आत्मनः स्वस्य वृत्तिं जीविकां कृत्वा, अभावप्राप्तेरितिभावः । यावत् स्तः, तावत्, रत्नद्वीपाधिपा अमरी देवी, खड्गम् आकृष्य, सरभसं सवेगमागात्, उवाच चेतिशेषः । समानौ तुल्याकृतिकौ वां युवाम् मया देव्या सार्धम् असमम् अनुपमम् विषयजं सौख्यम् भोगम् मानयेथाम् सुखीभवाथाम् । नो चेत्, अहम्, वां युवयोरिमकम् समक्षस्थितं मौलिम् मस्तकम् मण्डलाग्रेण खड्गेन कमलवत्, यथा खड्गेन कमलच्छेदने न प्रयासः तथा, अप्रयासेन छेत्स्यामि, ततो युवाभ्यामवश्यं मद्वचनं कर्तव्यमितिभावः ॥२४३॥

જેટલામાં તે બન્ને સહોદર ભાઈ મધ જેવા મધુર ફલોથી જીવન ચાલતા રહેતા હતા, તેટલામાં ત્યાં તે રત્નદ્વીપની અધિપતિ દેવી ત્યાં વેગથી આવી તરવાર ખેંચીને કીધું સરખા એવા તમે બન્નો મારી સાથે અનુપમ એવા વિષય સુખ અનુભવો નહિતર આ તરવારથી તમારા બન્નેનાં માથાં આ કમલની જેમ કાપી નાંખીશ. ॥૨૪૩॥

स्वीकृत्याज्ञां तदीयां भयचकितहृदौ कामयेते स्म तां तौ,
हृत्वाऽसत्पुद्गलौघाननिशमपि तया पूर्यमाणाभिलाषौ ।
अन्येद्युः साऽवदत् तौ सलिलनिधिपतेः सुस्थितस्योग्रशिष्टेः,
शोध्याब्धिः सप्तकृत्वो जलनिधिरभितस्तत्र वां शर्म चेत् स्यात् ॥२४४॥

भयेन न तु स्वेच्छया, एकत्र योषिति सोदरयोर्भोगस्यानुचितत्वादितिभावः । मृत्युभयेन चकितहृदौ तौ सोदरौ तदीयाम् देवीसम्बन्धिनीमाज्ञां स्वीकृत्य, भयेन हि अकृत्यमपि कुर्वन्ति जना इति भावः । तया देव्या, तथा असतः अशुभान् पुद्गलौघान्, हृत्वा दूरीकृत्य अनिशमपि पूर्यमाणा-

भिक्षायौ सन्तौ, तां देवीं कामयेते भुञ्जाते स्म । अन्येद्युः, सुस्थितस्य तदाख्यदेवस्य लवणजलधिपतेः लवणसमुद्रपतेः उपज्ञिष्टैः कूरशासनाद्धेतोः, सा देवी तौ सोदरौ अवदत्, किमित्याह अकनिधिः लवणसमुद्रः, अभितः, त्रिःसप्तकृत्वः एकविंशतिवारं शोध्यः तृणकाष्ठाशुचिद्रव्यदूरीकरणेन विशोध्यः तदेति अर्थाज्ज्ञायते, वाम् युवयोः शर्म सुखम् चेत्, अन्यथा, तत् शर्म यदचारति उत्पद्यते तत् शर्म सुखं चेत् यदि स्यात्तदेतिशेषः न स्यात् ॥२४४॥

અથવા વિસ્મય પામેલા મનવાળા એવા તે બન્ને એ તેની આજ્ઞા સ્વીકારીને તેની સાથે કામ સુખનો અનુભવ કર્યો, તે દેવી હંમેશાં અશુભ પુદ્ગલોનો સમૂહ લાવી લાવીને તે બન્નેની અભિલાષાની પૂર્તિ કરતી હતી એક દિવસ સમુદ્રનો પતિ સુસ્થિત દેવની ઉગ્ર આજ્ઞાથી તેણીએ તે બન્ને ને કીધું કે આ સમુદ્ર ચારે બાજુથી એકવીસ-એકવીસ વાર શોધવો જોઈએ એમ નહિ થાય તો તમારું કલ્યાણ નથી. ॥૨૪૪॥

हित्वाऽपाच्यवनं च दृग्विषफणिव्यालीढमाशात्रये-
ऽन्यत्रोद्यानततीषु रम्यमिति सा प्रोच्चार्य देवी ययौ ।
आसाद्यारतिमेव तेषु गहनेष्वेतावपाच्ये वने
यातावेकमपश्यतामसुखिनं शूलानुविद्धं नरम् ॥२४५॥

दृग्विषाः दृष्टिविषं येषां तादृशाः दृष्टिमात्रेण विषव्याप्ततनुकारकाः ये फणिनः सर्पाः तैर्व्यालीढं व्याप्तमपाच्यवनं दक्षिणदिक्स्थं वनं हित्वा त्यक्त्वा अन्यत्राशात्रये अन्यस्मिन् आशात्रये दिक्त्रये उद्यानततीषु उद्यानानां श्रेणीषु रम्यं रन्तुं क्रीडितव्यं गन्तव्यं भवद्भ्यामितीत्थं सा देवी प्रोच्चार्य उच्चैरुक्त्वा ययौ गतवती । एतौ जिनपालित-जिनरक्षितौ तेषु गहनेषु उद्यानेषु अरतिमप्रीतिमासाद्य प्राप्य अपाच्ये दक्षिणस्थे वने एव तया निषिद्धेऽपि यातौ गतौ सन्तौ शूलेनानुविद्धमेकम् अत एव असुखिनं दुःखिनं नरं पुरुषमपश्यताम् ॥२४५॥

અને દૃષ્ટિવિષ એવા સર્પથી વ્યાપ્ત દક્ષિણ દિશાના ઉદ્યાન શિવાય, ત્રણે દિશાઓમાં બીજા ઉદ્યાનોમાં તમે ખુશીથી રમી શકો છો. એમ બોલીને તે દેવી જતી રહી. તે બન્ને આ પ્રીતિ પામીને કંટાળી જઈ ને તે વનોમાં દક્ષિણ દિશાના વનમાં ગયા ને શૂલથી વીંધાયલા અત્યન્ત કષ્ટ અનુભવતા એક મનુષ્યને જોયો. ॥૨૪૫॥

आक्रन्दं करुणस्वरं विदधता तेनेति तावीरिता-
वायातौ कथमाग्रहे बत ! युवामस्याः पिशाच्या ननु ? ।
काकन्दीपुरवास्यहं वणिगहो ! संभग्नपोतोऽनया
नीतो मन्तुलवेऽपि दृश्यविषमामीदृग्दशां दुष्टया ॥२४६॥

करुणः करुणजनकः स्वरो यथा स्यात्तथा आक्रन्दम् आक्रोशं विदधता तेन शूलानुविद्धेन नरेण तौ सोदरौ इति वक्ष्यमाणम् ईरितौ कथितौ, तदुक्तिमेवाह-युवाम् अस्याः पिशाच्याः क्रूरत्वात्पिशाची तुल्यायाः देव्याः आग्रहे वशे कथमायातौ ? नैतद्युक्तं कृतमित्यर्थः । बत इति खेदे, नन्वहो ननु

भो इति सस्नेहामन्त्रणे, अहं काकन्दीनाम-पुरवासी वणिक् संभग्नपोतः सन् अनया दुष्टया, दुःख-हेतुत्वाद्विविभाव: । मन्तोः अपराधस्य लवे लेशेऽपि स्वल्पतायामपि, किम्पुनर्बाहुल्ये इत्यपेरर्थः । दृश्यं विषममतिदुःखजनकं यस्यास्ताम् दर्शने विषमप्रकाराम्, ईदृग्दशामेतामवस्थां नीतः प्रापितः । मन्तुलवेऽपि ईदृग्दशा प्रापिका दुष्टा पिशाच्येव न तत्राशङ्का ॥२४६॥

દયાજનક એવા શબ્દે આક્રંદન કરતા એવા તેણે તે બન્નેને આમ કીધું કે ભારે ખેદની વાત છે તમો બન્નો આ પિશાચીના આગ્રહમા કેમ પડી ગયા. હું કાકંદી પુરમાં રહેનારો વણીક છું અને વહાણ તુટી જવાથી આ દેવીથી અહિં લવાયો છું આ દુષ્ટાએ સહેજ અપરાધમાં જોઈ પણ નહિ શકાય એવી મારી આ દશા કરી નાંખી છે ॥૨૪૬॥

तेषामेषोऽस्थिकूटः स्फुटतरमनया ये हताः सन्ति चान्ये,
श्रुत्वैवं तौ विभीतौ तदपगमकथां स्वस्य तं पृच्छतः स्म ।
तेनोचे प्राच्यवन्यां तुरगमयतनुः शैलकाख्योऽत्र यक्षो,
भूतेष्टाष्टम्युपेतेऽहनि वदति स कं तारये पामि कं वा ? ॥२४७॥

अनया देव्या, ये च अन्ये मदतिरिक्ताः, हताः सन्ति, एषः अतिसमीपे वर्तमानः, तेषां हतानाम् अस्थिकूटः अस्थिसमूहः, एवमुक्तप्रकारं स्फुटतरं व्यक्तं स्पष्टमिति यावत्, श्रुत्वा, विभीतावति-भीतौ तौ सोदरौ स्वस्यात्मनः, तदपगमस्य देवी पाशान्निर्गमनस्य कथां युक्तिम्, कथमावामस्या आपदो मुच्येव इत्येवम्, तं शूलानुविद्धं नरं पृच्छतः स्म, तेन ऊचे कथितम्, किमित्याह—अत्र प्राच्यायां पूर्वदिक्स्थायां वन्यामुद्याने, तुरगमयतनुः अश्वाकृतिः, अश्वरूपधारी शैलकाख्यः शैलकनामा यक्षः, अस्तीतिशेषः । स यक्षः भूतेष्टा "भूतेष्टा तु चतुर्दशी" इति हैमोक्तेः, चतुर्दशी अष्टमी तदुपेते तद्युक्ते अहनि पर्वदिने उपलक्षणतया पूर्णिमाऽमावास्या दिवसे इत्यपि ज्ञातासूत्रोक्तं ज्ञेयम्, वदति, किमित्याह—कं तारये उद्धरामि, कं वा पामि रक्षामि ? इति ॥२४७॥

આ દેવીએ જેને હણી નાખ્યા છે તે મનુષ્યોના હાડકાનો દેખાતો આ ઢગલો છે આવા બીજા પણ છે તે સાંભળીને અત્યંત ભય પામેલા એવા તે બન્નેએ તેને પોતાનો તે દેવીથી કેમ છુટકારો થાય તે સમાચાર પૂછ્યો. ત્યારે તેણે કીધું કે પૂર્વ દિશાના ઉદ્યાનમાં ઘોડાનો શરીરવાળો શૈલક નામે યક્ષ છે તે ભૂતેષ્ટા અષ્ટમી દિવસ આવ્યે છતે બોલે છે કે કોને બચાવું, કોનું રક્ષણ કરું ! ॥૨૪૭॥

एवं तत्र यातं त्वरितमभिदधत्पूर्वरीत्या युवाभ्यां,
याच्यः संयोज्य हस्तावुपकृतिनियते ! नाथ ! नौ रक्ष रक्ष ।
तौ नत्वाऽभ्यर्च्य पुष्पैस्तमथ च समयं जीवितं याचमानौ,
प्रोक्तौ नेष्यामि तीरं सपदि जलनिधेर्वामिवामप्रवृत्ती ॥२४८॥

तत् तस्मात्कारणात्, तत्र शैलकयक्षसमीपे त्वरितम् यातम् गच्छतम्, पूर्वरीत्या कं तारये कं पामीत्येवं रीत्या अभिदधत् वदन् सः, युवाभ्यां हस्तौ संयोज्याञ्जलिं बद्ध्वा याच्यः प्रार्थनीयः,

किमित्याह–उपकृतिः परोपकार एव नियतिः निश्चयो यस्य स तत्सम्बोधने उपकारतत्पर नाथ ! नो आवां रक्ष रक्ष, संभ्रमे द्विरुक्तिः । तौ च सोदरौ समये पूर्वनिर्दिष्टकाले तं यक्षं पुष्पैरभ्यर्च्य अस्यापि जीवितं प्राणत्राणं याचमानौ प्रोक्तौ कथितौ, तेन यक्षेणेति अर्थाल्लभ्यते, किमित्याह–वां युवाम्, अवामा अकुटिला प्रवृत्तिर्व्यापारो ययोस्तौ सरलहृदयौ, अतः सपदि शीघ्रमेव जलनिधेः तीरं पारं नेष्यामि प्रापयिष्यामि ॥२४८॥

તેથી ત્યાં જલ્દી જાઓ ને પૂર્વે કહ્યા પ્રમાણે બોલતા એવા તેને તમો બન્નોએ હાથ જોડીને પ્રાર્થના કરવી કે હે ઉપકારી એવા સ્વામી અમો બન્નેને રક્ષો રક્ષો તેને પ્રણામ કરી ફૂલોથી તેની પૂજા કરી અવસરે પોતાની જીવનની પ્રાર્થના કરતો એવા તે બન્નેને તે યક્ષે કીધું કે સરસ ચરિત્રવાળા એવા તમો બન્નેને જલ્દીથી સમુદ્રના પાર લઈ જઈશ. ॥૨૪૮॥

पृष्ठे सा समुपेत्य किन्तु यदि वां देवी भृशं भापये-
द्भेतव्यं न च तत्कथञ्चन गिरा दृष्टयाऽपि संभाव्यताम् ।
आमेति प्रतिपद्य वाह वपुषः पृष्ठे समारुह्यताम्,
तौ तस्यैव चचाल सोऽथ नमसा तत्पत्तनं प्रत्यरम् ॥२४९॥

किन्तु यदि सा देवी, पृष्ठे पश्चात् समुपेत्यागत्य वां युवाम् भृशमत्यन्तं भापयेत् भीषयेत्, तत्तदा कथञ्चन कथमपि, गिरा वाण्या, तां देवीं दृष्टया नेत्रेण सम्भाव्य सम्मुखं दृष्ट्वाऽपि च, न भेतव्यम्, तौ सोदरौ, आम् इत्येवं प्रतिपद्य स्वीकृत्य, आमिति स्वीकारसूचकमव्ययम् । वाहवपुषः अश्वशरीरस्य तस्य यक्षस्यैव पृष्ठे पृष्ठप्रदेशे समारुह्यताम्, समारूढवन्तौ । अथ पश्चात् स यक्षः अरं शीघ्रमेव तयोः सोदरयोः पत्तनं नगरं प्रति नभसा नभोमार्गेण चचाल ॥२४९॥

પણ તે દેવી પાછળથી આવીને જો તમને ખૂબ ખૂબ ડરાવે તો કોઈ પણ રીતે ભય પામવો નહી, તે તેની વાતમાં પડી તેને નજરથી જોવું પણ નહી, તે સ્વીકારીને તે બન્ને ઘોડાના શરીરવાળા યક્ષના પીઠ પર ચઢયા પછી તે યક્ષ આકાશ માર્ગે શીઘ્રતાથી તેઓના નગર પ્રત્યે લેઈ ચાલ્યો. ॥૨૪૯।

सा ज्ञात्वा तद्विभङ्गात् झगिति समुपगत्यानु तावाचचक्षे,
व्यावृत्तिं किं न दासौ कुरुतमपरथा हन्मि कौक्षेयकेण ।
दक्षौ यक्षस्य शिक्षां मनसि निदधतौ तौ न तां पश्यतः स्मा-
ऽविश्याममप्यवियातामिव पुनरवदत्तावनाथाऽस्मि मुक्ता ॥२५०॥

सा देवी तेषां विभङ्गात् विभङ्गज्ञानोपयोगात् ज्ञात्वा तयोः पलायन कर्म विदित्वा, झगिति शीघ्रम्; अनु पृष्ठतः समुपगत्य समीपगत्य समीपमागत्य आचचक्षे बभाष, किमित्याह–दासौ ! किङ्करौ ! व्यावृत्तिम् पलायनान्निवृत्तिं किं कुरुतः, न कुरुतम्, निवर्तेथां युवामित्यर्थः, अपरथा, कौक्षेयकेण खड्गेन हन्मि, किन्तु, यक्षस्य शिक्षां पुरा कृतं न हृदन्वा तेत्सुपदेशं मनसि निदधतौ धारयन्तौ दक्षौ चतुरौ तौ सोदरौ, अविश्यां नेत्राभ्याम्, अवियातां प्राप्तामिव, अविश्यामामिवेत्यर्थः । सा देवी

तापि नैव पश्यतः स्म, यथा अक्षिस्थितं कज्जलादि नेत्राभ्यां न पश्यति लोकः, अति दूरत्वस्येवाति-सामीप्यस्य चाक्षुषं प्रति दोषत्वात्, तथैव तां न ददृशतुरित्यर्थः। पुनः, तौ सोदरौ, अवदत्, शेषस्यार्था-ध्याहार्यते, किमित्याह—मुक्ता त्यक्ता अर्थाद् युवाभ्यामेव, अनाथा असहाया अस्मि, तयोः प्रतारणाय विलापव्याजमाश्रितवतीतिभावः ॥ इति ॥२५०॥

ते देवी विभंग ज्ञानथी ते वात जाणी जल्दीथी आवीने पाछळथी ज ते बन्नेने कीधुं के अरे दासो तमे पाछा वळता केम नथी, नहि पाछा वळो तो तलवारथी तमोने [illegible]. पण चतुर ए वाते बन्ने यक्षना उपदेशने संभारता छता ते देवीनी वातने मनमां लाव्या नहि ने ते [illegible] आंखमां रहेली कीकीनी जेम आंखथी जोया पण नहि. त्यारे ते देवी फरी ते बन्नेने बोली के हा तमे बन्नो मने अनाथ करीने मूकी दीधी छे. ॥२५०॥

स्वप्नेऽप्यप्रियमाहितं न मयका, किञ्चित् कदाचित्कृतं,
चेद्युष्मद्बहुमानताग्रहिलया धार्यं न तच्चेतसि ।
दुष्टादुष्टवचोभिरेवमुदितौ यावन्न तौ क्षुभ्यतः,
स्म प्रोचे किल भेदवाक्यमनया तावत्पुनः क्रूरया ॥२५१॥

मयका मया स्वप्नेऽपि, अपिना जाग्रद्दशायां तु चर्चाऽपि दुर्लभा इति व्यज्यते। अप्रियमन-भिमतम्, अर्थाद्युवयोरेव, न आहितं कृतम्, कदाचित् प्रणयोपक्रमे युष्मत्सम्बन्धि बहुमानतया ग्रहिलया, सातिशयमानवत्या मया, किञ्चिन्नाममात्रं कृतं चेत्, अप्रियमिति सम्बध्यते, तत्कृतमप्रियं चेतसि न धार्यम्, मानिनीकृतमप्रियं न स्मरन्ति कामिन इति भावः। एवमुक्तप्रकारैः दुष्टैरप्रियैः, हननादिविषयत्वादितिभावः, तथा अदुष्टैः रागप्रदर्शनपरतया हृद्यैश्च वचोभिः उदितौ कथितौ तौ सोदरौ यावत् न क्षुभ्यतः स्म स्वनिश्चयाद्विचलितौ भवतः स्म, तावत्, क्रूरया पुनरनया देव्या, भेदस्य वाक्यं परस्परं सोदरयोर्विमतिप्रयोजकं वचनं प्रोचे किल ॥२५१॥

स्वप्ने पण कदी में तमारुं कंई अप्रिय एवुं कर्युं नथी ने तमारा प्रत्ये बहु मानवाळी होवाथी कदी कंई कर्युं पण होय तो ते तमारे मनमां राखवुं जोईए नहि. आम सारा ने नरसां वचनोथी बोलायेला एवा ते बन्ने ज्यारे क्षोभ पाम्या नहीं त्यारे ते बन्नेने भेद पाडवा माटे ते क्रूर देवी फरीथी बोली. ॥२५१॥

तस्या भेदवाक्यमेवाह—

किं त्वं मां जिनरक्षित ! त्यजसि वा गाढानुरागां मिथो,
यन्मेऽयं जिनपालितः समभवद्द्वेष्टः सदा दुष्टधीः ।
इष्टा नास्य कदाऽप्यहं तव कथं प्राणेश ! तद् प्रस्तुतं ?
न स्रोतामिव मानसानि हि नृणां चाकल्यमालम्ब्यते ॥२५२॥

जिनरक्षित ! त्वम्, मिथः रहसि, न तु समक्षम्, [illegible], "मिथोऽन्योन्यं रहस्यपि"

इति अवरोकेरन्योन्यं वा । गाढानुरागाम् मां किं वा कुतो हेतोः त्यजसि ? गाढानुरक्तायाः त्यागोऽनुचित इति भावः । ननु न केवलमहमेव त्वां त्यजामि किन्तु सोऽपि इति तव मम त्याग उचित एवेत्याह—यतः सदा ननु यदा कदाचित् दुष्टधीः अयं जिनपालितः मे मम इष्टः प्रियः न समभवत्, अहं च अस्य जिनपालितस्य कदाऽपि इष्टा प्रिया न, किन्तु, प्राणेश ! तव तत् प्रेम कथं प्रस्मृतं विस्मृतम् ? नहि सुहृदायाः प्रेम विस्मरन्तीतिभावः । तदेव सामान्येन समर्थयति हि यतः नृणां पुरुषाणां मानसानि, स्त्रीणामिव, स्त्रीणां मनश्चाञ्चल्यस्य प्रसिद्धत्वादितिभावः । चाञ्चल्यं न आतन्वते कुर्वते, एवञ्च त्वया मम प्रेम विस्मरणं न युज्यते इति भावः ॥२५२॥

હે જિનરક્ષિત એકાંતમાં ગાઢ પ્રેમવાલી એવી મને કેમ તજો છો ? એટલા માટે કે આ દુષ્ટ બુદ્ધિ જિનપાલિત કદી મારો પ્રિય ન હતો. હું એને કદી પણ પ્રિય ન હતી હે પ્રાણેશ્વર, તમે આ વાત કેમ ભૂલી જાઓ છો ? કેમકે સ્ત્રીઓની જેમ પુરુષોનું મન કંઈ ચંચલતામાં ઉતરતું નથી. ॥૨૫૨॥

इत्युक्ते सोऽपि लज्जाभरविनतमुखः संमुखं संददर्श,
तस्या दुष्टाशयायाः सरभसवलितग्रीवमुत्कण्ठमानः ।
नोच्चैरारोहणं स्याद्विचलितवचनस्येति संचिन्त्य चित्ते,
पृष्ठाद् यक्षोऽपि धृष्टं तमकृत निकृतिच्छित्तयेऽधः स्वतोऽपि ॥२५३॥

इति उक्तप्रकारेण, उक्ते कथिते सति, तयेति शेषः । लज्जाभरेण गुप्तप्रेमप्रकाशनजनित-लज्जातिरेकेण विनतमुखोऽधोमुखः, मर्मप्रकाशेन लज्जितोऽधोमुखो भवतीतिभावः अपि सः जिनरक्षितः उत्कण्ठमानः तस्याश्चाटुनाऽऽकृष्टः दुष्टाशयायाः छलतत्परायाः तस्या देव्याः संमुखम् सरभसं सहर्षं यथा स्यात्तथा "रभसो हर्षवेगयोः" इति विश्वः । वलितग्रीवम् वक्रितकन्धरम् यथास्यात्तथा संददर्श । यक्षः, अपिश्चार्थे, विचलितवचनस्य वचनापालकस्य जनस्य उच्चैः आरोहणम् अभ्युदयः, अथ यक्षपृष्ठाद्युच्च-पदाधिष्ठानं न स्यात् न युक्तमिति चित्ते स्वमनसि संचिन्त्य, निकृतेरपराधस्य वचनापालनरूपस्य छित्तये छेदाय, निष्क्रयायेति यावत् । तं धृष्टमविनयं स्वतः स्वेनैव पृष्ठादधः अकृताधोऽपातयत् ॥२५३॥

તે દેવીએ એમ કહ્યે છતે અતિશય લજ્જાથી નીચા મુખવાલા જિનરક્ષિતે ઉત્કંઠા પામી હર્ષ ભરે ડોક વાલીને દુષ્ટ અભિપ્રાયવાલી તે દેવીને જોઈ ત્યારે જે વચનથી ચલિત થાય તેને ઊંચે ચઢવાનું ન હોય એમ મનમાં વિચારી તે યક્ષે બદલો લેવા માટે પોતે જ તે અવિનયીને પીઠ પરથી નીચે પાડી દીધો. ॥૨૫૩॥

अप्राप्तोदधिमध्यमेव तमियं कौक्षेयकेणाच्छिनद्,
गत्वाऽधो जिनपालितं पुनरनु व्याचष्ट मिष्टाक्षरम् ।
सर्वं नाथ ! मृषाऽप्यभाषत पुरा त्वद्भ्रातुरग्रे मया,
स्निग्धोऽभूर्मम यत्त्वमेव तव चाहं प्रेयसी सर्वदा ॥२५४॥

तं यक्षपृष्ठात्पातितं जिनरक्षितम्, इयं देवी अप्राप्तम् उदधेर्मध्यं येन तं अप्राप्तसागर-सलिलमाकाशतादृशमाकाशस्थितमेव, कौक्षेयकेण असिना, अच्छिनत् अहन् । अधो पश्चात्,

जिनपालितं प्रतिगत्वा पुनः मिष्टाक्षरं यथास्यात्तथा, अनुव्याचष्टाम्बवदत्, किमित्याह—नाथ ! मया पुरा पूर्वम्, त्वद्भ्रातुरग्रे सर्वमपि वचनं मृषा मिथ्या असमाख्यतोक्तं, तद्वाक्यश्रवणाय तस्या देव्याः वाक्यस्य वचनस्य श्रवणार्थं पूर्वकाले बधिरतामापन्नः प्राप्त इति पूर्वकालावच्छिन्नबधिरताशालिवृषदितिभावः । ननु तर्हि सत्यं किमिति चेत्तत्राह—यथतः, त्वमेव, नान्यः, मम स्निग्धः प्रियः अभूः, अहं च सर्वदा तव प्रेयसी प्रियतमा, एवञ्च पूर्वोक्तं सर्वं मृषैवेति भावः ॥२५४॥

ते जिनरक्षितने पेली देवी समुद्रमा पडता पहेला अहरज तलवारथी कापी नाख्यो. पछी फरी जईने जिनपालितने पाछलथी मधुर वचनथी कहेवा लागी के हे नाथ पहेलाना तमारा भाईनी आगळ में बधुं खोटुंज कह्युं हतुं. केमके मने तो हंमेशा तमे ज प्रिय हता ने हुं तमारी हंमेशां प्रिया हती. ॥२५४॥

तद्वाक्यश्रवणाय यद्बधिरतामापन्नपूर्वीव यद्,
द्रष्टुं तामविलोचनप्रभुरिव प्रापत् पुरीं तेन सः ।
अस्मिन्नैलविलेन तत्परिसरोद्याने विमुक्ते रयाद् ,
व्यावर्तिष्ट सुरी वरीतुमिव या तत्पृष्ठमालम्बत ॥२५५॥

तस्या देव्या वाक्यश्रवणाय वाक्यं श्रोतुं यद् यस्माद् बधिरतां कर्णरहितत्वमापन्ना पूर्वं येन स आपन्नपूर्वी स इव कृतपूर्वीकटमितिवत्प्रयोगः, श्रवणायेत्यत्र चार्थशब्दो मशकार्थो धूम इतिवन्निवृत्त्यर्थः इति बोध्यम्, ताम् द्रष्टुम् तद्दर्शनं यथा न स्यात्तथा । यतः अविलोचनेषु अन्धेषु प्रभुरीश्वरः अन्धतर इव, अभूत् इति शेषः, तेन हेतुना सकर्णोऽपि विकर्णः स जिनपालितः पुरीं स्वनगरीं प्रापत् प्राप्तः, न तु जिनरक्षितवनमध्ये एव विनष्ट इतिभावः । ऐलविलेन यक्षेण, तस्य नगरस्य परिसरे समीपबहिःप्रदेशे उद्याने अस्मिन् जिनपालिते विमुक्ते स्वपृष्ठादुत्तारिते सति सुरी देवी रयाद् वेगाद्, व्यावर्तिष्ट पराङ्मुखा, स्वेच्छासिद्धेरितिभावः । का सुरीत्यपेक्षायामाह—या वरीतुम् वररूपेण स्वीकर्तुमिव तस्य जिनपालितस्य पृष्ठमालम्बत अनुसृतवती, सा व्यावर्तिष्टेत्यर्थः ॥२५५॥

तेना वाक्य सांभळवामां जाणे पहेलाथी बहेरो थई गयो होय ने तेने जोवा माटे जाणे मोटो आंधळो होय तेवो ते यक्ष द्वारा पोताना नगरमां पहोंच्यो. ते यक्षे तेने नगरीना पासेना उद्यानमां मूकी दीधो छते ते देवी तरत ज पाछी फरी के जे जाणे तेनुं मन वरवा सारु पाछळ पाछळ दोडती हती. ॥२५५॥

सम्प्राप्तो जिनपालितो निजगृहं मातापितृभ्यां मुदा,
पृष्टोऽसौ जिनरक्षितस्य रुदितं कुर्वंश्चरित्रं जगौ ।
अन्येद्युः समवासरज्जिनपतिः श्रीवर्द्धमानः प्रभु-
र्गीर्वाणप्रभुवृन्दवन्दितपदस्तत्पत्तनारामके ॥२५६॥

निजगृहं सम्प्राप्तः असौ जिनपालितः मातापितृभ्याम् मुदा तदागमनजन्यहर्षेण पृष्टः रुदितं कुर्वन्, जिनरक्षितमरणजन्यशोकेनेतिभावः । जिनरक्षितस्य चरित्रम् वृत्तान्तं जगौ । अन्येद्युः,

तत्पत्तनस्य तन्नगरस्य आरामके उद्याने, स्वार्थे कः । गीर्वाणप्रभुवृन्दैः देवेन्द्रैः समूहैः वन्दितो पादौ यस्य स तादृशः जिनपतिः श्रीवर्धमानः प्रभुः समवासरत् समवसरणं कृतवान् ॥२५६॥

જિનપાલિત પોતાના ઘરે પહોંચ્યો. ને માતા પિતા વડે હર્ષ ભરે પૂછાયેલો તે રડતો રડતો જિન રક્ષિતનો સમાચાર કહી દીધો. બીજા દિવસે તે નગરના ઉદ્યાનમાં ઇન્દ્ર સમૂહોથી વંદિત છે ચરણ જેના એવા જિનેશ્વર **શ્રીવર્ધમાન સ્વામી સમોસર્યા.** ॥૨૫૬॥

**सम्प्रति कथितं दृष्टान्तमुपनयति–**

**श्रुत्वा स्वामिसमागमं द्रुततरं गत्वा प्रणम्यादरात् ,**
**मातापितृभ्युपसङ्गतः श्रुतिलसद्धर्मोपदेशामृतः ।**
**प्रव्रज्यां जिनपालितो जिनपतेः पार्श्वे प्रबुद्धोऽग्रहीत् ,**
**तप्त्वा तोषपरः सुदुस्तपतपः कैवल्यमापत् क्रमात् ॥२५७॥**

स्वामिनः श्रीवर्द्धमानस्वामिनः समागमं श्रुत्वा, द्रुततरम् शीघ्रमेव, तद्देशनाश्रवणोत्कण्ठा एतेन तद्विषयोत्कण्ठा सूचिता, मातापितृभ्याम् उपसङ्गतः मिलितः, गत्वा, आदरात् प्रणम्य, अर्थाज्जिनपतिमितिभावः । श्रुतौ कर्णे लसन् धर्मोपदेशः जिनपतिकृतधर्मदेशनैवामृतं यस्य स तादृशः श्रुतधर्मदेशनामृतः अत एव प्रबुद्धः प्रतिबोधं प्राप्तः वैराग्यशाली जिनपालितः, जिनपतेः पार्श्वे प्रव्रज्यामग्रहीत, तोषपरः सन्तोषपूर्वकम्, सुदुस्तपतपः तप्त्वा क्रमात् कैवल्यमापत प्राप्तः ॥२५७॥

શ્રી વર્ધમાન સ્વામીનું આવવાનું જાણી તરત જ ત્યાં જઈ આદરથી પ્રણામ કરી માતા પિતાની સાથે જ જિનપાલિતે પણ જિનેશ્વર પાસે જ દીક્ષા લઈ લીધી અને સંતોષ વાળો છતો સુદુષ્કર એવા તપ તપી ક્રમે કરીને કેવલ જ્ઞાનને પામ્યો. ॥૨૫૭॥

**वर्णितदृष्टान्तशेषांशमुपनयति—**

**तस्साधोऽमरदत्त ! सम्प्रति मया व्यावर्णितेदंस्फुरद्–**
**दृष्टान्तोपनयं स्फुटं शृणु यथा तौ वाणिजौ संसृतौ ।**
**जीवाः स्युर्द्विविधास्तथा मणिमयद्वीपाधिपा देवता,**
**योक्ता साऽविरतिः स्मृता छलपरा पुंसां विशेषं विना ॥२५८॥**

साधो ! अमरदत्त ! सम्प्रति दृष्टान्तकथनानन्तरकाले मया धर्मघोषसूरिणा व्यावर्णितः कीर्तितः यः अयं जिनरक्षितादिसम्बन्धी स्फुरन् प्रभावशाली दृष्टान्तः तस्येदमुपनयं लक्ष्ये सङ्गमनं स्फुटं शृणु, यथेति उपनयनिदर्शने तौ वणिजौ सोदरौ संसृतौ संसारे, द्विविधाः जीवाः केचिद् प्राणिनः स्युः, तथा मणिमयद्वीपाधिपा रत्नद्वीपस्वामिनी या देवता उक्ता कथिता सा अविरतिः या स्मृता सती, पुंसां विशेषं विना सामान्यतः छलपरा छलेन भवसमुद्रपातकारिणी ॥२५८॥

તેથી હે મુનિ અમરદત્ત ! હમણાં મેં વર્ણવેલા અહિ સ્ફુરાયેલા દૃષ્ટાન્ત શી રીતે ઘરે છે તે સાંભળતો જેમ તે બે વણિક હતા તેમ સંસારમાં જીવો બે પ્રકારના છે રત્નદ્વીપની સ્વામી જે દેવી કહેવાયી છે તે અવિરતિ છે તે સરખી રીતે બધા પુરુષોને છલે છે. ॥૨૫૮॥

मर्त्यः सोऽपि व्रतशिथिलताऽवाप्तदौर्गत्यदुःखः,
स्यादाचार्यः प्रथितमधुरामङ्गुवत्स्वं विगायन् ।
शुद्धाख्यानप्रकटनपरो गुह्यकः सोऽश्वरूपः,
संसाराब्धेस्तरणकरणं चारु चारित्रमेव ॥२५९॥

प्रथितः कथितः प्रसिद्धः यः मथुरामङ्गुः मथुरानगर्यां यच्छिथिलाचारितया प्रसिद्धमङ्गुनामाचार्यः, तद्वत्, स्वमात्मानं विगायन् निन्दन् व्रतस्य शिथिलतया व्रते प्रमादात् अवाप्तम् दौर्गत्यदुःखं येन स तादृशः मर्त्यः अपि शूलानुविद्धपुरुषोपमः ज्ञेय इति शेषः । सः अश्वरूपः हयरूपधारी यो गुह्यको यक्षः शैलकाख्यः शुद्धाख्यानस्य निर्दुष्टकथायाः प्रकटने उपदेशे पर तत्परः आचार्यः स्यात्, ज्ञेयः (तत्तुल्यः शुद्धाख्यानप्रकटनपरः निर्दुष्टतत्त्वकथायाः प्रकटने उपदेशे तत्परः शुद्धाचार आचार्यो ज्ञेयः) चारु शुद्धं चारित्रमेव संसाराब्धेः तरणस्य करणं साधनम् ॥२५९॥

અને શૂલથી વીંધાયેલો મનુષ્ય તે વ્રત શિથિલાર્થાં થવાના કારણે દુર્ગતિ દુઃખને અનુભવતા આચાર્ય છે. જે પ્રસિદ્ધ મથુરા ( મથુરા )ના મંગુની જેમ પોતાને નિંદતો હોય છે ને શુદ્ધ કથાને પ્રગટ કરતો હોય છે. ને સંસાર રૂપી સમુદ્રને પાર કરવાનું સાધન તે ઉત્તમ ચારિત્ર છે તે જ અશ્વ રૂપે યક્ષ સમજવો ॥૨૫૯॥

जीवो निघ्नो विरत्या प्रतिसमयमयं शस्यते ज्येष्ठशिष्ट-
माकन्दीभ्याङ्गसूवद्विरचितमहदादेशभङ्गीविभङ्गः ।
दृष्ट्या पश्येन्न तां यो भवजलधिमहापारसिद्धिं पुरीं सः,
प्रायो यायादवश्यं हतगुरुवचनः क्षुद्रमाकन्दिसूवत् ॥२६०॥

विरत्याः विरतेः निघ्नः वशः विरतिमान् जीवः अयम्, ज्येष्ठः शिष्टः शिक्षितश्च यः माकन्दी नामेभ्यस्याङ्गसूः पुत्रः जिनपालितः तद्वत् प्रतिसमयं सर्वदा शस्यते कीर्त्यते । यः, विरचितः कृतो यो महतः श्रेष्ठपुरुषस्य आदेशस्य भङ्गी घटनाविशेषः तत्र विभङ्गः प्रमोदरहितः दृष्ट्या तामविरतिं देवीरूपां न पश्येत्, स जीवः प्रायः भवजलधेः महापाररूपां दूरवर्तितीररूपां सिद्धिं पुरीमवश्यं यायात् प्राप्नुयात्, जिनपालितवदितिभावः । हतगुरुवचनः गुरुवचनापालकः, क्षुद्रः कनिष्ठः दुर्गृत्ता-जीवो वा यः माकन्दिनः सूः पुत्रः जिनरक्षितः तद्वत् तत्तुल्यः स्यात्, भवाब्धौ पतेत् ॥२६०॥

મોટા ને શિક્ષિત, માકંદી શેઠના પુત્રની જેમ રાગદ્વેષ ને મમત્વની ભાવનાને દૂર કરનાર ક્ષણે ક્ષણે વૈરાગ્યને આધીન એવો જીવ પ્રશંસનીય ઇષ્ટ છે જે રાગાદિ ભાવનાઓને દષ્ટિથી જોતો નથી, તેના આધીન થતો નથી. તે સંસાર રૂપી સમુદ્રના મહાન બીજા કાંઠા જેવી સિદ્ધિ પુરીમાં ઘણું કરી અવશ્ય જશે ગુરુ વચનનો અનાદર કરનાર જીવ માકંદી શેઠના નાના પુત્રની જેમ નાશ પામશે. ॥૨૬૦॥

निशम्य तदिदं कथानकमहो ! भविष्यत्परं-
विरागपरिपुष्टधीरमरदत्तराजर्षिकः ।

सहार्दमणिमञ्जरीदयितया समेतश्चिरं,
तपांसि परितप्य सोऽप्यजनि सिद्धिकान्ताप्रियः ॥२६१॥

अहो इत्याश्चर्ये, भविष्यतः भवणमाश्चर्यमिति भावः भविष्यति परं भावि । तदिदं पूर्वोक्तं कथानकं वार्ता निशम्य श्रुत्वा, सोऽपि, सहार्दा सानुरागा या मणिमञ्जरी दयिता तया समेतः, अमरदत्तराजर्षिः विरागेण परिपुष्टधीः पूर्णविरक्तबुद्धिः सन् चिरम् तपांसि परितप्य, सिद्धिरेवाति-कान्तत्वात्कान्त इव तस्याः प्रियाः, सिद्धिमानजनि जातः ॥२६१॥

પછી આ કથા સાંભળી આગલ ઉપર વધારે ને વધારે વૈરાગ્યમાં દૃઢ બુદ્ધિવાલો અમરદત્ત રાજર્ષિ પ્રસન્નને પ્રિય એવી મણિમંજરી પત્નીની સાથે લાંબા કાલ સુધી તપો તપીને તે પણ સિદ્ધિ રૂપી સ્રીને પતિ થઈ ગયો મુક્ત થયો. ॥૨૬૧॥

इत्थं चैते कषायाः वचनरचनयाऽप्याततता नैव भव्याः,
मित्रानन्दादिवत् कं न भवजलनिधौ पातयामासुराशु ।
वह्नौ जाज्वल्यमाने स्फुरति च किमपि स्थावरे जङ्गमे वा,
क्ष्वेडे घोरे ज्वरे वा कुलिशनिपतने मन्त्रतन्त्रादि नैषु ॥२६२॥

इत्थं पूर्वोक्तदृष्टान्तानुसारेण च, नैव भव्याश्चारवः अनिष्टा इति यावत् । एते कषायाः क्रोधादयः वचनरचनया वाक्मात्रेणापि आतता विहिताः, मित्रानन्दादिवत् मित्रमुद्रादिवत् भवजलनिधौ, आशु कं न पातयन्ति, आशुः पातयामासुः, सर्व पातयन्त्येवेत्यर्थः । न तत्र मन्त्रतन्त्रादिप्रयोगेणोद्धार इत्याह—मन्त्रतन्त्रादिकरं, आज्वाल्यमाने वह्नौ, स्थावरे जङ्गमे वा क्ष्वेडे विषे, घोरे भयङ्करे ज्वरे, कुलिशनिपतने वज्रपाते वा स्फुरति प्रभवति न एषु कषायेषु, मन्त्रतन्त्रादि बाह्यादीनि निवारयति, न तु काषायजन्यभवाब्धिपातमित्यर्थः ॥२६२॥

હે ભવ્યો ! કહ્યા પ્રમાણે આ કષાયો વાણી બોલીને પણ નજ કરાય ( કેમકે તે કષાયો ) મિત્રમુદ વગેરેની જેમ સંસાર રૂપી સમુદ્રમાં કોને ઝડપથી પાડયો નથી–( બધાયને પાડયા છે ) અગ્નિ ભડભડ બલતો હોય. કોઈ સ્થાવર કે જંગમ વિષ ફેલાતો હોય ભયંકર જ્વર હોય કે વજ્ર પડતો હોય. આ બધામાં મંત્ર તંત્ર ( કારગત ) ન હોય. ( તેમ રાગાદિથી ભવપાત થાય જ, મંત્રાદિ કામ લાગે નહિ. ॥૨૬૨॥

आकर्ण्याविहितः स्वयंप्रभुगुरोरेतादृशीं तां कथां,
नत्वा पादयुगं व्यजिज्ञपदिदं यावद्धरित्रीभरम् ।
पुत्रे न्यस्य समैमि सत्वरतरं तावत्स्थितिर्वोऽस्त्विहे-
त्युक्त्वा धाम जगाम भूपतिवृढः कल्याणमालेच्छया ॥२६३॥

स्वयंप्रभुगुरोः सकाशात्, तां प्रसिद्धामेतादृशीं कषायफलप्रतिपादनान्वितां कथाम्,

अवहितः सावधानः सन् आकर्ण्य श्रुत्वा पादयुगं गुरुचरणद्वयं नत्वा इदं वक्ष्यमाणप्रकारं, व्यजिज्ञपत्, ताबद्विज्ञप्तिमेवाह—यावद्यदवधि, धारित्र्याः भरं भारं, राज्यभारमित्यर्थः पुत्रे न्यस्य, राज्यपुत्रमभिषिच्येत्यर्थः, सत्वरतरमतिशीघ्रं समैमि समागच्छामि, तावत्तदवधि, वः युष्माकमिहात्रैवोद्याने स्थितिरस्तु, भवानत्रैव तिष्ठत्वित्यर्थः । इत्येवमुक्त्वा, भूपरिवृढः राजामितसागरः कल्याणस्य माला परम्परा तदिच्छया धाम गृहं जगाम ॥२६३॥

રાજાએ સ્વયંપ્રભ મુનિએ કહેલી આ અનુપમ કથાને સાવધાનપણાએ સાંભળી મુનિને બન્ને પગમાં નમી વિનંતિ કરી કે " જ્યાં સુધીમાં પૃથ્વીનો રાજ્યનો ભાર પુત્ર ઉપર મૂકી એકદમ જલ્દીથી આવું છું ત્યાં સુધી આપનું રોકાણ અહીં થાઓ., એમ નિવેદન કરી તે રાજા કલ્યાણ સમૂહની દીક્ષા જુક્તિના ઇચ્છાથી પોતાના ઘરે ગયો. ॥૨૬૩॥

आसीच्छ्रीगुरुगच्छमौलिमुकुटश्रीमानभद्रप्रभोः,
पट्टे श्रीगुणभद्रसूरिसुगुरुः प्रामाणिकानां गुरुः ।
तच्छिष्येण कृतेऽत्र षोडशजिनाधीशस्य वृत्ते महा-
काव्ये श्रीमुनिभद्रसूरिकविना सर्गो ययावष्टमः ॥२६४॥

ગુરુગચ્છના શિરોમુકુટ સમાન માનભદ્રસૂરિ થયા તેના પાટે પ્રમાણના જાણકારોમાં શ્રેષ્ઠ એવા શ્રી ગુણભદ્રસૂરિ થયા તેના શિષ્ય શ્રી મુનિભદ્રસૂરિ કવિએ રચેલા શ્રી સોલમાં તીર્થંકર શ્રી શાંતિનાથના ચરિત્ર રૂપી મહાકાવ્યમાં આઠમો સર્ગ સમાપ્ત થયો. ॥૨૬૪॥

❋

इति श्रीमन्मुनिभद्रसूरिकृतशान्तिनाथचरिते शासनसम्राट् सूरिचक्रचक्रवर्ति–परम-
सद्गुरुश्रीमद्विजयनेमिसूरीश्वर – पट्टालङ्कारावाप्तन्यायवाचस्पति–शास्त्रवि-
शारदबिरुद श्रीमद्विजयदर्शनसूरीश्वरसन्दृब्धप्रबोधिनीव्याख्यायाम्
अष्टमः सर्गः समाप्तः ।

卐

# टीकाकर्तुः प्रतिसर्गाद्यन्तिमश्लोकाः ।

पञ्चमसर्गादौ— यज्ज्ञाने भाति विश्वं चरमचरमपि स्वस्वधर्मावलीढं,
सापेक्षं युक्त्युपेतावितथबहुविधश्राव्यमानोपनीतम् ।
नत्वा तं शान्तिनाथं गुरुचरणरतो दर्शनः पञ्चमेऽस्य,
व्याख्यां सर्गे तनोति स्फुटतरवचनैर्भावबोधप्रबोधाम् ॥१॥

पञ्चमसर्गान्ते— व्याख्या तन्वी मनोज्ञा सरसवचनतो मोददा मार्मिकाणां,
नीतिव्रातावनद्धामिति तदभिजनोल्लासनैकान्तकान्ता ।
पूर्णा श्रीनेमिसूरिप्रवरगुरुकृपाऽऽवाप्तविद्येन सर्गे,
संदृब्धा दर्शनेनागमहृदयविदा पञ्चमे गूढतत्त्वे ॥२॥

षष्ठसर्गादौ— सर्वे वादा यदीया-गमजलनिधितो निर्गता भिन्नमार्गा,
एकान्तस्थानभूमौ नियतपतनतो न प्रतिष्ठां लभन्ते ।
श्रीमन्तं शान्तिनाथं तमिह जिनवरं विश्वविघ्नापनुत्त्यै,
नुत्वा सर्गेऽत्रषष्ठे विवृतिमतिमितां दर्शनः सन्तनोति ॥१॥

षष्ठसर्गान्ते— व्याख्येयं नूतनाभा नवनवविषयोद्बोधनैकान्तदक्षा,
नो गुर्वी नातिलघ्वी सुगमसरणिगा षष्ठसर्गार्थभव्या ।
पूर्णा श्रीदर्शनस्वामितमतिनिचिता बन्धुरा चित्रभावा,
विद्वद्भ्यो मोददाने भवतु पटुतरा दृष्टिमार्गोपजाता ॥२॥

सप्तमसर्गादौ— अस्त्यात्मा ह्येष नित्यो भवति च कृतिमान् भोगकृत् कर्मबद्धो,
मुक्तः सम्यक्त्वषट्कं षडितरदुदिताश्रास्ति जीवादि मिथ्या ।
व्यक्तं सूत्रे यदीये तमिह जिनवरं दर्शनोऽहं प्रणत्य,
व्याख्यां कुर्वेऽत्र सर्गे जिनवररचिते सप्तमे भव्यतत्त्वाम् ॥१॥

सप्तमसर्गान्ते— व्याख्या चैकत्रकाव्ये भवति बहुविधा कर्तृमन्तव्यभेदात्,
सर्वा सा सर्वमान्या न च भवति ततः श्लाघ्यता श्रोतृभिन्ना ।
इत्थं चैतद्व्यवस्थां बुधततिप्रमितामाश्रयन्तीह पूर्णा,
व्याख्या सर्गे प्रशस्ता भवतु भविमता सप्तमे दर्शनोत्था ॥२॥

अष्टमसर्गादौ— यः सामान्यं विशेषाकलितमुदितवान् वस्त्वभिन्नं च भिन्नं,
ज्ञेयं जात्यन्तरं नो भवति परमतैर्दूषणैर्बाधनीयम् ।
तं नत्वा शान्तिनाथं जिनमतुलगुणं दर्शनोदर्शनज्ञा,
व्याख्यां सर्गेऽष्टमेऽर्थान्वयमतिजननीं पद्यराशेस्तनोति ॥१॥

अष्टमसर्गान्ते— द्व्यालङ्कारयुक्ता नवरसकलिता मूलपद्यावली या,
शक्काकल्लासत्तियोग्या बहुविधहृदया तां समालिङ्ग्य जाता ।
व्याख्येयं दर्शनोत्था निजगुणघटिताऽल्पाक्षरार्थौघमिश्रा,
पूर्णा सर्गेऽष्टमेऽलं जनयतु विबुधानन्दकन्दप्रकर्षम् ॥२॥